इमं केशवस्वामिनं मल्लिनाथः‡ स्वीयासु महाकाव्यव्याख्यासु प्रमाणय-ति, तथा मल्लिनाथप्राचीनोऽरुणाचलनाथः$ ।

एष नानार्थार्णवस्य प्रथमः सम्पुटः प्रथमकाण्डद्वयात्मक इदानीं प्रकाश्यते । द्वितीयस्त्र्यक्षरकाण्डात्मा तृतीयश्चावशिष्टकाण्डत्रयात्मा क्रमशः प्रकाशमेष्यतः ।

अनन्तशयनम्. त. गणपतिशास्त्री.

---

‡ "वज्रं त्वस्त्री कुलिशशस्त्रयोः । मणिवेधे रत्नभेदे इति केशवः" इति रघुवंशप्रथमसर्गचतुर्थश्लोकव्याख्यायाम् ।

$ "त्रिष्वन्यत्रोपयुक्ततः इति केशवस्वामिवचनादुपयुक्तादन्यदभिदधानस्य शेषशब्दस्य विशेष्यलिङ्गत्वमवसेयम् " इति कुमारसम्भवप्रथमसर्गषोडशश्लोकव्याख्यायाम् ।

॥ श्रीः ॥

राजराजीयापरनामा

# नानार्थार्णवसंक्षेपः

केशवस्वामिप्रणीतः ।

---

## एकाक्षरकाण्डः ।

### स्त्रीलिङ्गाध्यायः ।

---

श्रीकुलोत्तुङ्गचोलाख्यश्चोलेष्वासीन्महीपतिः ।
यः कालिं भारताद् वर्षाद् बहिश्चक्रेऽतिदूरतः ॥ १ ॥
येन सर्वाणि वित्तानि सकलापि वसुन्धरा ।
कार्याण्यन्यान्यनादृत्य देवब्राह्मणसात्कृता ॥ २ ॥
तस्य सूनुरभूद् देवो राजराजो महीपतिः ।
अभूतपूर्वमहिमा सन्त्यक्तो राजचापलैः ॥ ३ ॥
यौवने वर्तमानोऽपि सूर्यवंशसमुद्भवान् ।
अत्यशेत स राजेन्द्रान् परिपक्कतया भृशम् ॥ ४ ॥
कर्णोऽसौ दानशौण्डानामग्रणीरिति विश्रुतः ।
स प्राह्ण एव विश्राण्य स्वापतेयमशेषतः ॥ ५ ॥
अहश्शेषं च रात्रिं च देयाभावादनिर्वृतेः[1] ।
तस्य तु श्रीनिवासस्य रात्रिन्दिवमविश्रमम् ॥ ६ ॥

---

१. 'तिः' ख. पाठः.

पर्जन्यस्येव वर्षासु वस्तूनि बहु वर्षतः ।
न किञ्चिदपचीयन्ते कोशाः प्रत्युत वर्धनाः ॥ ७ ॥
धर्मस्यैव समुच्छ्रायादधर्मस्य च निग्रहात् ।
सुखेन वृत्तेः साधूनामसाधूनां नियन्त्रणात् ॥ ८ ॥
अमुना राजराजेन कलिः कृतयुगीकृतः ।
बहुना किं प्रजल्पेन महात्मानोऽपि तद्गुणान् ॥ ९ ॥
शंसितुं कवयोऽशक्ताः किं पुनर्मादृशो जनः ।
महाग्रहारो राजेन्द्रचोलसंज्ञो महात्मनाम् ॥ १० ॥
सर्वविद्यासमृद्धानां श्रीमतामृषितेजसाम् ।
निवासो विप्रवर्याणां चोलेष्वासीत् प्रतिष्ठितः ॥ ११ ॥
महामाहेश्वराणां यस्तारुण्येष्वेव यज्वनाम् ।
राज्ञा राजेन्द्रचोलेन स्वनाम्ना स्थापितः पुरा ॥ १२ ॥
राष्ट्रस्यास्य समृद्धस्य शिरोभूषणसन्ततिः ।
तत्राग्रहारे वास्तव्यो वत्सगोत्रसमुद्भवः ॥ १३ ॥
सामवेदविदां मान्यः केशवस्वामिनामकः ।
श्रीराजराजदेवस्य सेवकोऽभूद् द्विजाग्रणीः ॥ १४ ॥
तं कदाचित् समामन्त्र्य सेवमानं महीपतिः ।
चिराच्चिकीर्षितं वस्तु मत्वाज्ञापयदीदृशम् ॥ १५ ॥
आर्य! वत्ससुखायाँ[1] कौतूहलमतीव मे ।
सलिङ्गेऽस्पष्टसाधूनां नाम्नां नानार्थवाचिनाम् ॥ १६[2] ॥
परम्परायांस्त्वदृते न चान्यः शब्दवित्तमः ।
एकद्वित्रिचतुःपञ्चषट्स्वरैर्नामभिः क्रमात् ॥ १७ ॥
काण्डानि प्रतिकाण्डं च पञ्चाध्यायाः[3] क्रमाद् यथा ।
स्त्रीपुन्नपुंसकैर्वाच्यलिङ्गैः सङ्कीर्णलिङ्गकैः[4] ॥ १८ ॥

---

१. 'वासकौ' ग. पाठः. २. 'णां त्व' ख. पाठः. ३. 'या यथाक्रमम्' ख. पाठः.
४. 'वर्गकैः' घ. पाठः.

अनेकार्थैरकारादिक्रमोपेतादिवर्णकैः ।
जिज्ञासितस्य शब्दस्य सुखदर्शनसिद्धये ॥ १९ ॥

इत्युक्तो राजराजेन शिरसादाय शासनम् ।
शास्त्रं कर्तुमुपाक्रंस्त राजराजोक्तवर्त्मना ॥ २० ॥

ओङ्कारममृतं ब्रह्म शिवमक्षरमव्ययम् ।
यमामनन्ति वेदेषु तं प्रपद्ये विनायकम् ॥ २१ ॥

यस्यार्धे वन्दे त्वा भव! हर! महिला विलासिनी स्तननमिता ।
शिरसि सरिद् वीचीभिर्भवहरमहिलाविलासिनीस्तननमिता ॥ २२

बहुष्वाचार्यवाक्येषु बहुशः पुनरुक्तितः ।
पुनरुक्तान् विहायार्थानन्यार्थेष्वभिधास्यते ॥ २३ ॥

एकद्वित्रिचतुःपञ्चषट्स्वरैर्नामभिः क्रमात् ।
षट् काण्डाः प्रतिकाण्डं च पञ्चाध्याया यथाक्रमात् ॥ २४ ॥

स्त्रीपुन्नपुंसकैर्वाच्यलिङ्गैः सङ्कीर्णलिङ्गकैः ।
अनेकार्थैरकारादिक्रमोपात्तादिवर्णकैः ॥ २५ ॥

अस्त्रीविषयजातीनां जातिमात्रे नृता स्मृता ।
अर्थे योनिमति स्त्रीत्वं पुंस्त्वं मेढ्रवति स्मरेत् ॥ २६ ॥

द्वे द्वयोरिति वा शब्दावस्मिन्नर्थेऽवधारयेत् ।
ये तु शब्दाः प्रवक्ष्यन्ते स्थावरान्तरवाचिनः ॥ २७ ॥

तेषां स्वफलपुष्पेषु प्रतीयात् क्लीबलिङ्गताम् ।
अस्यार्थस्य यदा क्वापि पुनरुक्तिर्भविष्यति ॥ २८ ॥

एतस्यैव प्रपञ्चस्य स्मरणायेति मन्यताम् ।
स्त्रीपुन्नपुंसकानां ये शब्दाः स्युर्वाचकाः पृथक् ॥ २९ ॥

लिङ्गमाचक्ष्महे शब्दैस्तैरन्यत् परिभाष्यते[1] ।
त्रि त्रिस्त्रिष्वित्यमी शब्दा वाच्यलिङ्गस्य वाचकाः ॥ ३० ॥

---

१. 'स्मा' ख. पाठः.

प्रयोक्ष्यन्ते त्रिलिङ्गस्य त्रयशब्दः प्रयोक्ष्यते ।
क्लीबे क्ली नबिति त्वन्तं पुनरन्तमथादि च ॥ ३१ ॥

अथोआदि च नेष्यन्ते पूर्वसम्बन्धभाक्तया ।
अस्त्रीत्यादिनिषेधेषु नृषण्डादीतरद्वयम् ॥ ३२ ॥

एवं समीक्ष्य मेधावी लिङ्गं विद्यात् प्रयत्नतः ।
नामज्ञानेऽप्यलिङ्गज्ञा नाद्रियन्ते हि वाग्मिभिः ॥ ३३ ॥

अन्त्याध्यायद्वये यत्रक्वचित् स्त्रीप्रत्ययोद्भवात् ।
शब्देषु वर्णवृद्धिः स्यात् सन्महद्बृहदादिषु ॥ ३४ ॥

तान् पश्येत् प्रकृतेर्योग्ये स्थाने वृद्धाक्षरानपि ।
सतीमहत्यंशुमतीश्रेयसीबृहतीमुखान् ॥ ३५ ॥

ग्रन्थप्रणयमिच्छूनां विशेषात् काव्यकारिणाम् ।
उपन्यसितुमिच्छूनां विदुषां परिषत्स्वपि ॥ ३६ ॥

राजगोष्ठीषु शब्दार्थलिङ्गयोर्मोहसंशयात् ।
विदुषां कलहे प्राप्ते जिगीषूणां मनीषिणाम् ॥ ३७ ॥

आदरणीयमवश्यं शास्त्रमिदं सत्पथे विवित्सूनाम् ।[1]
डिडयिषमाणानामिव पतत्रयुगलं पतत्रीणाम् ॥ ३८ ॥

गरुडेनेव भोगीन्द्रः स्पर्धमानः पराभवेत् ।
अवश्यमेतद्विदुषा[2] बहुज्ञोऽपि वदावदः ॥ ३९ ॥

विद्वद्भूयिष्ठदेशेषु कैश्मीरादिषु[3] तद्विदाम् ।
कृतीरदृष्ट्वा सकलाः स्वल्पकं क्रियते मया ॥ ४० ॥

नामाम्बुधेरपर्यन्तात् स्वशक्त्या किञ्चिदाददे ।
प्रलयक्षुभिताम्भोधेरालीढे मशकः कियत् ॥ ४१ ॥

यदत्र मतिमान्द्येन स्खलितं संभविष्यति ।
मनीषिणः क्षमन्तां तदेक एव हि सर्ववित् ॥ ४२ ॥

---

१. ‘वृ’ क. ग. घ. पाठः. २. ‘व विदु’ ख. पाठः ३. ‘का’ क. घ. प

द्वन्द्वपूर्वनिपातेषु भूयोभूयः क्वचित् क्वचित् ।
अन्यथाकरणं दृष्टं पौरस्त्येषु निघण्टुषु ॥ ४३ ॥
तच्च वृत्तानुरोधेन कृतं तैर्न प्रमादतः ।
ग्रन्थगौरवभीत्यैव तच्चास्माभिः कृतं तथा ॥ ४४ ॥
अथ स्त्रियां बहुष्वापः सलिले छन्दसोरपि ।
शताक्षेरऽष्टनवतिस्वरे ह्रीबेर एव च ॥ ४५ ॥
भूमेरधस्ताल्लोकेषु यत् त्विदं जलवाचिनाम् ।
अतिदेशो वैजयन्त्यां मुस्ते तन्न विरोचते ॥ ४६ ॥
आप इत्येवमाम्नातं समाम्नाये स्वनामसु ।
तत्र सान्दिह्यतेऽप्शब्दो जसन्तः किन्नु पठ्यते ॥ ४७ ॥
आपशब्दोऽथवा स्वन्त इति तस्यापि दृश्यते ।
ऋचि प्रयोगः स यथा 'मध्य आपस्य तिष्ठति'* ॥ ४८ ॥
तस्मादर्थतया व्योम नाप्शब्दस्येहे कीर्तितम् ।
ऊशब्दो रक्षणे तृप्तौ प्रीतावववगतौ गतौ ॥ ४९ ॥
वृद्धाववाप्तौ दीप्तौ च प्रवेशे श्रवणेच्छयोः ।
स्वाम्यसामर्थ्ययाच्ञासु क्रियायां भावहिंसयोः ॥ ५० ॥
आलिङ्गने च दहनेऽप्यर्थेष्वेकान्नविंशतौ ।
अत्यन्तमप्रसिद्धत्वादेवमादि न वक्ष्यते ॥ ५१ ॥
ऊर्गन्नान्नरसोत्साहबलेषु स्याच्चतुर्ष्वपि ।
ऋशब्दस्त्वदितौ स्वर्गेऽप्यृग् वाण्यां पद्यमात्रके ॥ ५२ ॥
क्ष्माशब्दो भुवि नद्यां च गिर्शब्दो वाचि योषिति ।
ज्या भूमिमौर्व्योस्त्वग् गन्धद्रव्ये चर्मणि वल्कले ॥ ५३ ॥
त्विड् ज्वालादीप्तिशोभासु तृट् तु वाञ्छापिपासयोः ।
द्राद्रारोपाययोरुक्ता द्योशब्दः स्वर्गनाकयोः ॥ ५४ ॥

---

१. 'द्धा' घ. पाठः. २. 'ति', ख. पाठः.

---

* सामवेदे (उत्त. प्रपा. ८. सू. १४. म. ३)

धीस्तु कर्मणि बुद्धौ च धूस्तु यानमुखेऽङ्गुलौ ।
भारे विकृतगीतौ च गायत्राह्वयसामनि ॥ ५५ ॥
साम्नां द्रष्टृषु चैकेषु नौर्वाक्कालतरिष्वथ ।
पूर्देहे नगरे बुद्धौ भास्तु रश्मौ रुचावपि ॥ ५६ ॥
भूर्भूम्यां स्थानमात्रे च सौराष्ट्र्यां व्योमदेहयोः ।
मा पार्वत्यां च लक्ष्म्यां च निर्लिङ्गोऽसौ निवारणे ॥ ५७ ॥
मृन्मृत्तिकायां भेषज्यभेदे तुवरिकाह्वये ।
मृच्छब्दो जलवाच्यस्ति धान्तदान्तत्वसंशयात् ॥ ५८ ॥
समाम्नायसमाम्नातो निरूप्यात्र निवेश्यताम् ।
रुक् प्रभाकान्तिवाञ्छासु रुक् तु स्याद् व्याधितोदयोः ॥ ५९ ॥
वाग् वाण्यां गौणवृत्त्या तु शब्दे वक्त्रे च केचन ।
श्रीरिन्दिरायां शोभायां स्यात् संपत्तिलवङ्गयोः ॥ ६० ॥
प्रथमायां विभक्तौ च व्याचष्टे भगवानमूम् ।
स्त्री प्रियङ्ग्वाह्वये वृक्षे वर्त्रीवनितयोरपि ॥ ६१ ॥
लग्नाच्च सप्तमे गर्भे लिङ्गभेदे च शब्दगे ।
स्रुक् स्रुवे शोषणे गत्यामित्यध्यायः समाप्तवान् ॥ ६२ ॥

इत्येकाक्षरकाण्डे स्त्रीलिङ्गाध्यायः ।

## अथैकाक्षरकाण्डे पुल्लिङ्गाध्यायः ।

अथैकाक्षरपुल्लिङ्गा अकारो विष्णुवेधसोः ।
कण्ठस्थानस्वरे चाथ स्यादुकारो हरे हरौ ॥ १ ॥
ओष्ठस्थानस्वरे चाथ ग्लौर्विधर्मणिचन्द्रयोः ।
आकाशे दिवसे च द्युः पुंसानाम्नि पौरुषे ॥ २ ॥

'च' ख. पाठः. २. 'तु' ख पाठ. ३. 'मु' क. घ पाठः.

'द्यु क्लीबमह्नि गगने च' इति तु मेदिनी । 'आकाशे दिवसे च द्युः' (पु. २७० श्लो. ६०) इति वैजयन्ती । $ 'पूरुषे' इति स्यात् ।

मास्तु मासे निशानाथे पुमध्यायः समाप्तवान् ॥ २१ ॥

इत्येकाक्षरकाण्डे पुल्लिङ्गाध्यायः ।

## अथैकाक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

अथ क्लीबे खमाकाशे स्वर्गे छिद्रे गृहेऽभ्रके ।
नक्षत्रेन्द्रिययोर्ब्रह्मण्यथ हृच्चित्तवक्षसोः ॥ १ ॥

इत्येकाक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

## अथैकाक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

अथाभिधेयलिङ्गे स्तो द्वे एवैकाक्षरे मते ।
किं प्रश्नाक्षेपकुत्सानां वितर्कस्य च गोचरे ॥ १ ॥
युङ् सहाये द्वितीयादिसमसङ्ख्ये च वस्तुनि ॥ १ ॥

इत्येकाक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

## अथैकाक्षरकाण्डे नानालिङ्गाध्यायः ।

इडीद् च त्रिषु नाथे स्त्री मेदिन्यां कस्तु ना नगे ।
अर्कानिलविरिञ्चात्मशब्दबुद्धिमनस्स्वपि ॥ १ ॥
अजयस्तु शरीरेऽपि पुंस्यैवैनमभापत ।
कं नाम्न्यप्सु सुखे मूर्ध्नि गूर्ना यत्ने गुदे स्त्रियाम् ॥ २ ॥
गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः ।
स्त्री तु स्याद् दिशि भारत्यां भूमौ च सुरभावपि ॥ ३ ॥

---

१. 'रेष्विमे' क. ग. घ. पाठः. २. 'यां' क. घ. पाठः. ३. 'इख्यादिव' ख पाठः, 'इख्येयव' ग. पाठः. ४. 'क्ली' क. ग. घ. पाठः. ५. 'मु' ख. पाठः.

नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ।
अश्वानां प्रग्रहेऽप्येष* यत्साधारणनामसु ॥ ४ ॥

प्रग्रहस्य मरीचेश्च समाम्नायेऽमुमामनत् ।
धनुर्गुणे सुषुम्णाख्यरश्मिभेदे च भास्वतः ॥ ५ ॥

द्वयोस्त्वश्वे तथा ह्याह स्कन्दस्वाम्यृक्षु भूरिशः ।
माधवाचार्यसूरिश्च §को अद्येत्यृचि भाषते ॥ ६ ॥

समाम्नाये समाम्नातः स्तोत्रनामसु स त्रिषु ।
विकारयोर्लक्षणया दुग्धाभिषवचर्मणोः ॥ ७ ॥

चर्मणो गोविकारस्य विकारे श्लेष्मसंज्ञके ।
नृस्त्रियोरविशेषेण कश्चिदेनं समामनत् ॥ ८ ॥

अथ चित् स्यात् स्त्रियां ज्ञाने ज्ञातरि त्वेष भेद्यवत् ।
अथच्छिच्छेदने स्त्री स्याच्छेत्तरि त्वेष भेद्यवत् ॥ ९ ॥

आत्मचान्द्रमसायन्यो$र्ना ज्ञो ज्ञातरि तु त्रिषु ।
जूर्जवे स्त्री राक्षसे द्वे त्वशब्दोऽर्थे पुमांस्त्रि तु ॥ १० ॥

एकार्थे युष्मदर्थे च तेशब्दः क्रीडने स्त्रियाम् ।
क्रीडके त्रिषु सूर्ये तु दिवित्येष ध्वनिः पुमान् ॥ ११ ॥

स्त्री खे स्वर्गे च दृक् तु स्त्री ज्ञानदर्शनबुद्धिषु ।
नेत्रे च त्रिषु तु द्रष्टृज्ञात्रो ‡र्नृ द्वे हरे हये ॥ १२ ॥

यदा त्वस्य स्त्रियां वृत्तिस्तदा नारीति दृश्यताम् ।
दिग्देशकालविषये पूर्वेऽर्वाचि च भेद्यवत् ॥ १३ ॥

प्राग्भवे प्राङ् मुखे चैव प्राची तु स्त्री हरेर्दिशि ।
प्रथमापञ्चमीसप्तम्यर्थेष्वव्यय एव वा ॥ १४ ॥

---

* अजयः । §, 'को अद्य युङ्क्ते धुरि गा ऋतस्य' (अष्ट. १. अध्या. ६. वर्ग. इत्यस्यामृचि । $ चन्द्रमःशब्दस्तिकादिः । ‡ अविभक्तिको निर्देशः ।

सर्वेषु पूर्वोक्तार्थेष्वित्येवं प्राक्छब्द ईरितः ।
मेषादिराशौ नक्षत्रे वैयाकरणसंज्ञिनि ॥ १५ ॥
क्लीबं भं भा तु भासि स्त्री भोजराजेन संस्कृता ।
राट् स्त्री छन्दोविशेषे स्याद् द्वाविंशत्यक्षरेऽथ ना ॥ १६ ॥
पार्थिवे क्रतुभेदे च रैशब्दो धनरुक्मयोः ।
नृस्त्रियोर्नाम्बुदेऽथ द्वे विः खगे त्रिषु गन्तरि ॥ १७ ॥
परमात्मनि नाथ स्त्री विद् ज्ञाने ज्ञातरि त्रिषु ।
ना रौहिणेये विट् तु स्त्रीशण्डयोर्गूढवाचि(नि?नी) ॥ १८ ॥
अङ्गुल्यां स्त्री समाम्नाये समाम्नाताज(ने? ये)न च[1] ।
द्वयोर्मनुष्ये वैश्ये च स्वं त्वात्मात्मीययोस्त्रिषु ॥ १९ ॥
धने तु नप् पुमान् ज्ञातौ तकारान्तं[2] तु सत् त्रिषु ।
सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते बुधे ॥ २० ॥
शोभने च सती तु स्त्री तुवरीसंज्ञभेषजे ।
लक्ष्मीपतिव्रताशैलतनयासु चतुर्ष्वथ ॥ २१ ॥
शब्देऽपि कश्चित् सच्छब्दस्तस्य लिङ्गं विचार्यताम् ।
सज्जनस्त्वेनमाम्नासीन्नक्षत्रे तन्नपुंसकम् ॥ २२ ॥
परब्रह्मणि नीरे च वयं ब्रूमो नपुंसकम् ।
सेशब्दः सेवने स्त्री स्यात् सेवके वाच्यलिङ्गकः ॥ २३ ॥

इत्येकाक्षरकाण्डे नानालिङ्गाध्यायः ।

एकाक्षरकाण्डः समाप्तः ।

---

१. 'नप्' ग. घ. पाठः. २. न्तस्तु स' क. ग. घ. पाठः.

# अथ द्व्यक्षरकाण्डः ।

## स्त्रीलिङ्गाध्यायः ।

अथ स्त्रियां भवान्याः स्युः सर्वाः संज्ञाः क्षुमाह्वये ।
धान्ये रात्रेर्हरिद्रायां भूमेर्मृत्स्नाख्यभेषजे ॥ १ ॥
मातुस्तु गवि पेषण्यां पार्वत्यां चाथ योषितः ।
प्रियङ्गुवृक्षेऽथाम्बा स्याज्ज्येष्ठस्वसरि मातरि ॥ २ ॥
वाचां मध्यमिकानां स्यात् सप्तानामेकवाचि च ।
अर्चा पूजाप्रतिमयोरत्ता श्वश्र्वां च मातरि ॥ ३ ॥
नाट्योक्तविषये ज्येष्ठभगिन्यामिति केचन ।
नाट्योक्तावेव वृद्धायां वेश्यायामिति सज्जनः ॥ ४ ॥
अप्वा नद्यां भये रागेऽप्यभ्वा तु व्योमतोययोः ।
अश्रिस्तु कोट्यां धारायामष्ठी तु स्यात् फलास्थनि ॥ ५ ॥
जानुकूर्परयोरस्थ्नोरन्दूस्तु गजशृङ्खले ।
पादभूषणभेदे च स्यादास्था त्ववलम्बने ॥ ६ ॥
प्रतिज्ञायत्नतात्पर्यगोष्ठीषु स्यादथापरे ।
आह्वा कण्ठे कथायां चेत्याहुराह्वा तु नामनि ॥ ७ ॥
कण्ठे चेत्यपरेऽथाजिरु*त्कृष्टा लिङ्गभेदतः ।
आप्तिः[1] प्रत्ययितत्वे स्याल्लाभसम्बन्धयोरपि ॥ ८ ॥
आलिमर्थत्रये विद्यात् सेतौ सख्यां तथैव च ।
आवलावप्यथालूः स्याद् योनिव्याधौ वनस्पतौ ॥ ९ ॥
टिट्टिभाख्यखगे चावृत् पुनर्यागादिकर्मणाम् ।
कल्पे च परिपाट्यां च साम्नो गायत्रसंज्ञिनः ॥ १० ॥
द्वितीयपादगीत्यां च तृतीयार्चिकपर्वणोः ।
आवृत्तावपि चाथाशीर्हिताशंसाहिदंष्ट्रयोः ॥ ११ ॥

---

१. 'क' ख. पाठः.

---

* उत्कर्षश्च नानालिङ्गाध्याये बोध्यः ।

अपीच्छायामिरा तु स्यात् सुरायां सलिले दिवि ।
दैत्याले न क्षितौ वाचि स्यादिला तु गवि क्षितौ ॥ १२ ॥
दिवि वाच्यार्ध्यनाड्योश्च देवताबुधभार्ययोः ।
इज्या तु यागे पूजायां जनन्यामपि सज्जनः ॥ १३ ॥
इष्टिर्यागेच्छयोरीषा रथसीरादिदण्डके ।
प्रमाणभेदे भगवानष्टाशीतिशताङ्गुले ॥ १४ ॥
ईहा तु वाञ्छोद्यमयोरीतिर्डिम्बप्रवासयोः ।
उमा कीर्त्यामतस्यां च गिरिजायां श्रियामपि ॥ १५ ॥
ऊतिस्तु रक्षणे स्यूतौ चेत्येके तत्तु नो तथा ।
वयं तु ब्रूम ऊशब्दकथितैकोनविंशतौ ॥ १६ ॥
अर्थेषु स्यात् तथा स्यूतौ चेत्यथो ऋद्धिरोषधौ ।
ऋद्धिरित्येव विख्याता या वृद्धिरिति चापरा ॥ १७ ॥
तस्यामपि विभूतौ च कक्ष्या साम्यवरत्रयोः ।
कच्छाख्यगुह्यवस्त्रे च काञ्च्यां गेहप्रकोष्ठके ॥ १८ ॥
पार्श्वाद्यङ्गसमुद्भूतरोगभेदेऽङ्गुलावपि ।
कथाख्यानाह्वयग्रन्थविशेषे कथनेऽपि च ॥ १९ ॥
कन्था ग्रामे च भित्तौ च बहुचीरकृताम्बरे ।
कन्या तु षष्ठराशौ स्यात् प्रियङ्ग्वाख्यमहीरुहे ॥ २० ॥
कुमार्यां शारिबायां च तरणीसंज्ञगुल्मके ।
कर्मी हाटकपुत्र्यां स्यादपि शालापलालयोः ॥ २१ ॥
कम्बूस्तु कुरुविन्दे स्याद् भूषणे च त्सरावपि ।
ककुबुष्णिग्विशेषे स्याद् भूभृतः शिखरे दिशि ॥ २२ ॥
वाचि चैकोनपञ्चाशद्वात्रे सत्रे तु भूमनि ।
कान्तिः शोभेच्छयोः काञ्ची मेखलापुरभेदयोः ॥ २३ ॥

१. 'ते' क. ख. पाठः. २. 'कोन' क. ग. घ. पाठः. ३. 'त्र' ख. पाठः. 'ब' क. ख. पाठः.

**क्षिया** क्षये तथाचारातिक्रमेऽथ **क्षितिर्भुवि** ।
मनुष्ये क्षयणे गेहे वासकर्मण्यथो **क्रिविः** ॥ २४ ॥
कालगोत्रविशेषेऽपि क्रोष्टुजात्यन्तरेऽल्पके ।
**क्रीडा** नर्मणि लीलायामपि **क्रेणिस्तु** विक्रये ॥ २५ ॥
परिग्रहे च क्षेत्रादेः फलभोगाय तन्वते ।
दत्त्वा किञ्चित् कियन्तञ्चित् कालं **कोटिस्तु** वक्ष्यते ॥ २६ ॥
चापाग्रे चाग्रमात्रेऽश्रौ प्रकर्षे शकले तथा ।
सङ्ख्याविशेषे लक्षाणां शते **क्षोणी** पुनर्भुवि ॥ २७ ॥
मौञ्ज्यां च मेखलायां स्यात् क्षोणी इति तु रोदसोः ।
**खट्वा** पर्यङ्क आचार्यासने त्वन्ये वदन्ति ताम् ॥ २८ ॥
आयुर्वेदप्रसिद्धे च व्रणबन्धनयन्त्रके ।
**खर्जूर्विद्युति** कण्डूां च **गतिर्नाडीव्रणे** पथि ॥ २९ ॥
उपाये च दशायां च यिशब्दे सामगीतिगे ।
गन्तव्ये पुण्यपापाभ्यां प्रस्थाने शरणेऽपि च ॥ ३० ॥
प्राग्र्यादिप्रभृतिषु क्रियायुक्तेषु चेष्यते ।
**गाथा** तु वाण्यामार्यायां पिङ्गलानुक्तनामसु ॥ ३१ ॥
वृत्तेष्वनुष्टुबाद्येषु यानि वृत्तानि पञ्चसु ।
पादैश्चतुर्भिः षड्भिर्वा तेष्वप्यृषिकृतेष्वसौ ॥ ३२ ॥
**गुप्तिः** क्षितिव्युदासे स्यात् कारायां गोपनेऽपि च ।
**गृष्टिः** सकृत्प्रसूतायां गवि काश्मर्यपादपे ॥ ३३ ॥
विष्वक्सेनप्रियासंज्ञस्थावरे चाप्यथो **घृणा** ।
जुगुप्सायां दयायां च **चारिस्तु** मुखसंभवे ॥ ३४ ॥
रोगभेदे पशूनां च लेक्षणीयेऽथ मूर्धनि ।
**चूडा** शिखावलभ्योश्च **चूलिस्तु** धनुषोऽटनौ ॥ ३५ ॥

---

१. 'क्षये च' क. घ. पाठः. २. 'यु' क. घ. पाठः. ३. 'तिके' क. घ. पाठः 'तके' ग. पाठः. ४. 'शा' क. घ. पाठः. ५. 'च' ख., 'य' ग., 'प' ङ. पाठः. ६. 'ड' क. ख. घ. पाठः.

पिटके चेति विद्वांसः केचिदाचक्षतेतमाम् ।
छविश्चर्मणि शोभायां दीप्तौ यज्वाद्विजन्मनाम् ॥ ३६ ॥

वेद्यामास्तरणे चाथच्छायानातपशोभयोः ।
सूर्यपत्न्यन्तरे गेहे स्यात् पङ्क्तिप्रतिबिम्बयोः ॥ ३७ ॥

जातिः समूहे मालत्यां सामान्ये जन्मगोत्रयोः ।
ब्राह्मणादिषु वर्णेषु वेदार्थे सर्वजन्तुषु ॥ ३८ ॥

स्वभावे प्रभवे छन्दोभेदेष्वार्यादिकेष्वपि ।
ज्यानिस्तु हानौ बुद्धौ च रोगे जिह्वा तु वाचि च ॥ ३९ ॥

ज्वालायां रसने चाथ मञ्जिष्ठासंज्ञभेषजे ।
जिङ्गी दीर्घफलायां च कोशातक्यामथो जुहूः ॥ ४० ॥

स्रुग्वंशेषे पुरोडाशेऽप्यथ ज्योत्स्ना शशिद्युतौ ।
ज्योतिष्मद्रजनौ चाथ झिल्ली चीर्याख्यकीटके ॥ ४१ ॥

अपि दग्धौदनेऽथ स्यात् तन्द्रा निद्राप्रमीलयोः ।
तन्द्रिस्तु सुप्तावालस्ये तन्त्रीर्वीणादिनो गुणे ॥ ४२ ॥

रज्जौ सिरायामालस्ये गुडूच्यामिति पञ्चसु ।
तण्डूद्रोणिप्लवे दर्व्यां ताडिराभरणान्तरे ॥ ४३ ॥

तरुभेदेऽप्यथ तुला सादृश्योन्मानदण्डयोः ।
स्तम्भपीठे पलशते तथा राशौ च सप्तमे ॥ ४४ ॥

तुण्डीरास्ये शूननाभौ त्रुटिः संशयलेशयोः ।
सूक्ष्मैलायामर्धमात्राकालेऽपीत्यपरेऽपठन् ॥ ४५ ॥

तूलिः शय्यान्तरे चित्रकूर्चिकायां च सा पुनः ।
इच्छापिपासयोस्तृष्णा तृप्तिस्तु सुखतोययोः ॥ ४६ ॥

१ 'छ' ख. ग. पाठः. २. 'स' ख. ग. पाठः. ३. 'त्र' क. घ. पाठः.

सौहित्ये चाप्यथ **त्रेता** गार्हपत्यादिकत्रये ।
द्वितीये च युगेऽथ स्याद् **दीक्षा** यजनपूजयोः ॥ ४७ ॥
व्रतादेशे च नियमे मौण्ड्ये चोपनयेऽपि च ।
**दृष्टि**शब्दोऽक्षिण बुद्धौ च ज्ञाने दर्शे **दृषत्** पुनः ॥ ४८ ॥
पेषण्यामश्ममात्रे च **दृग्भू**स्तु तरुसर्पयोः ।
बिले च द्रोहकजनैः कृतेऽथो नीलिकाह्वये ॥ ४९ ॥
**दोला** स्यादोषधिस्तम्बे प्रेङ्खे चाथोत्तमास्त्रियाम् ।
**धनूर्धनुर्गुणे** चान्ये धनुष्यपि पठन्ति ताम् ॥ ५० ॥
**धारा** प्रवाहे नद्यादेः सैन्याग्रे द्रवसन्ततौ ।
वाचि शस्त्रमुखेऽश्वानां गतिष्वास्कन्दितादिषु ॥ ५१ ॥
**धाना** भ्रष्टयवे चापि फलबीजे च भूरुहाम् ।
**ध्राजिः** पिटकजातौ स्याद् वात्यायामपि केचन ॥ ५२ ॥
**धीता** बुद्धौ सुतायां च कन्यायामिति कश्चन ।
**धीतिः** स्यादङ्गुलौ पानेऽप्याधारे[1] च व्यवस्थितौ ॥ ५३ ॥
**धृति**र्धारणसन्तोषधैर्यशौर्येषु सौख्यके ।
द्वासप्तत्यक्षरच्छन्दोविशेषे पिङ्गलोऽन्वशात् ॥ ५४ ॥
**नाना**शब्दस्तु भारत्यां जनन्यां दुहितर्यपि ।
**नासा** तु नासिकायां स्याद् गृहद्वारोर्ध्वदारुणि ॥ ५५ ॥
**नाडि**स्त्वर्धमुहूर्ते स्यान्नालव्रणविशेषयोः ।
सच्छिद्रदीर्घद्रव्ये च सिरायां चेति पञ्चसु ॥ ५६ ॥
**नालि**र्नाडीव्रणे नाले धमन्यर्धमुहूर्तयोः ।
आयते सुषिरद्रव्ये तेष्वेवार्थेषु पञ्चसु ॥ ५७ ॥
**नान्दिः** कल्याणवृद्धौ स्यान्नाट्यारम्भार्चनान्तरे ।
निष्ठोत्कर्षेऽप्यवस्थायां नाशेऽन्ते व्रतयाच्ञयोः ॥ ५८ ॥

---

१. 'ने' क. घ. पाठः.

स्यान्निर्वहणनिष्पत्त्योः परमायां गतौ तथा ।
क्लेशे च क्तक्तवत्वोश्चेत्यर्थेषु द्वादशस्वसौ ॥ ५९ ॥

**निशा** रात्रौ हरिद्रायां **निन्दा** कुत्सापवादयोः ।
**निधा** निधाने पाश्यायां पाश्या पाशकदम्बकम् ॥ ६० ॥

**नीवी** स्यात् कवचे वस्त्रे वणिङ्मूलधने तथा ।
स्त्रीकटीवसनग्रन्थौ **नृभुः** प्रतिकृतौ प्लवे ॥ ६१ ॥

कश्चिद् दीर्घक्रिमावाह **नेमिस्तु** तिमिशद्रुमे[1] ।
चक्रप्रान्ते भित्तिमूले कूपे तन्मुखबन्धने ॥ ६२ ॥

पीनाहसंज्ञ इत्येके परिच्छेदेऽपि कश्चन ।
वज्रेऽप्याह समाम्नायः **प्रभा** त्वर्चिषि भासि च ॥ ६३ ॥

सूर्यपत्नीविशेषेऽथ **प्रजा** सूनौ जनेऽप्यथ ।
**पल्लिः** कुटीरेऽल्पग्राम आश्रमे व्याधमन्दिरे ॥ ६४ ॥

प्राणिभेदे च मुसलीसंज्ञेऽथो **पङ्क्तिरावलौ** ।
चत्वारिंशत्स्वराद्येषु छन्दोभेदेषु सा तथा ॥ ६५ ॥

एकत्वे दशसङ्ख्यायां तत्सङ्ख्येषु च वस्तुषु ।
दशकस्य यदा द्वित्वत्रित्वे तत्तद्वचस्तदा ॥ ६६ ॥

**पक्तिस्तु** गौरवे पाकेऽथाश्वायां मातरि **प्रसूः** ।
**पारिः** सृणिगुणे घण्ट्यां **पालिश्चिह्नाश्रिपङ्क्तिषु** ॥ ६७ ॥

सेतौ कर्णलतायां च प्रदेशे च त्सरुच्छदे ।
जातश्मश्रुस्त्रियां क्षेत्रे वप्रेऽथ **प्राप्तिवागियम्** ॥ ६८ ॥

उदयेऽधिगमे चाथ **पादुं** केचित् प्रचक्षते ।
पादुकोपानहोः स्यादित्येवं शब्दविशारदाः ॥ ६९ ॥

---

[1] 'चित्रकृत् तिमिशो नेमी' (पु. ४८. श्लो. ४६) इति वैजयन्ती । 'नेमिर्ना तिनिशद्रुमे' इति तु मेदिनी ।

**पीडा** कृपाशिरोमालाव्यथासु **प्रीतिवाक्** पुनः ।
प्रेम्णि हर्षेऽप्यथ **प्रेक्षा** मज्ञायां नृत्तदर्शने ॥ ७० ॥
**पोला** तु परिखायां च कवाटस्य चे बन्धने ।
तालसंज्ञेऽथ **पोटा** स्यात् स्त्रीपुंसाङ्कनपुंसके ॥ ७१ ॥
स्त्रियां च राज्यपालिन्यां दास्यां चाथ **बलिध्वनिः** ।
योनौ वायौ च **भस्त्रा** तु वह्निध्मानदृतावपि ॥ ७२ ॥
भेदे सप्तदशस्तोमविच्युतेरिषुधावपि ।
**भक्तिर्भागे** सेव्यमाने लक्षणायां च सेवने ॥ ७३ ॥
**भङ्गिर्भङ्गे**ऽप्याकृतौ च विच्छित्तौ चाथ भाषणे ।
**भाषा** लौकिकवाक्ये चाभियोगवचने गिरि ॥ ७४ ॥
**भिक्षा** तु भिक्षितद्रव्ये देयान्ने ग्रासमात्रके ।
भृतियाचनसेवासु **भित्तिं** त्वजय आमनत् ॥ ७५ ॥
कुड्यप्रदेशयोः स्यात् तु **भूमिः** क्ष्मास्थानमात्रयोः ।
**भूतिर्भस्मनि** सम्पत्तावुत्पत्तौ मरुटेऽपि च ॥ ७६ ॥
**भृतिस्तु** धारणे पोषे भृतकादेश्च वेतने ।
**मतिर्बुद्धीच्छयोर्माठिस्तरुपत्रसिरास्वपि** ॥ ७७ ॥
कवचे चाथ **मारिः** स्यान्मसूरीसंज्ञके गदे ।
सर्वलोकतते मृत्यौ तथा स्याद् देवतान्तरे ॥ ७८ ॥
अथो **मिसिः** स्यान्मिश्रेयासमाख्ये भेषजान्तरे ।
शतपुष्पासमाख्ये च वर्तते भेषजान्तरे ॥ ७९ ॥
**मुक्तिः** स्वर्गेऽपवर्गे च **मूर्तिः** काठिन्यकाययोः ।
काकप्रतिमयोश्चाथ सङ्कल्पे वाचि **मेनिवाक्** ॥ ८० ॥

---

१. 'तु' क. घ. पाठः. २. 'वा' क. घ. पाठः.

---

* 'पत्रमध्यासिरा माठिः' (पु. ४६. श्लो. १८), 'माठिः स्त्री जामरा वक्षश्छदः स क्षटौ ।' (पु. ११६. श्लो. १५३) इति वैजयन्ती ।

**यात्रा** तु वर्तने गत्यामथ **याच्ञा**नुवर्तने ।
प्रार्थनेऽप्यथ **युक्तिः** स्यादुपपत्तौ च योजने ॥ ८१ ॥

समाधावथ **रक्षा** स्याल्लाक्षारक्षणभस्मसु ।
**रतिः** कन्दर्पभार्यायां सुरतोत्कण्ठयोरपि ॥ ८२ ॥

रागेऽपि परमप्रीतौ **रज्जु**स्तु स्याद् वराटके ।
अष्टहस्तप्रमाणे च **रास्ना** तु सुवहाह्वये ॥ ८३ ॥

भेषजे चापि धेनौ च **राठा** सुह्मेषु नीवृति ।
शोभायां चाथ **राजिः** स्यात् क्षेत्रेऽधो रसनस्य च ॥ ८४ ॥

पङ्क्तौ च राजसर्पे च लेखायां च करादिषु ।
**रीति**र्दग्धसुवर्णादिमले स्थित्यारकूटयोः ॥ ८५ ॥

प्रचारे स्रवणे पङ्क्तौ स्वभावेऽन्ये तु पित्तले ।
**रुजा** भङ्गजरामृत्युरोगेष्वथ **रुचिः** श्रियाम् ॥ ८६ ॥

अभिष्वङ्गेऽभिलाषेऽशौ दीप्तौ स्याद् देवतान्तरे ।
शोभायां तिन्त्रिणीकायाः फले वृक्षाम्लसंज्ञके ॥ ८७ ॥

**रेखा** तु कृत्रिमे मार्गे हस्तपादतलादिषु ।
निरन्तरालपङ्क्तौ च वदन्ति विदितागमाः ॥ ८८ ॥

**रेटि**र्वह्नेश्च रटिते संयतोत्कटवाचि च ।
तिन्त्रिटीके स्पृहायां च तथा कान्त्यर्चिषोरपि ॥ ८९ ॥

**लता** तु वल्ल्यां शाखायां प्रियङ्गुस्पृक्कयोरपि ।
लताबृहत्यामपि च ज्योतिष्मत्यतिमुक्तयोः ॥ ९० ॥

शारिबायामपि प्राह कश्चित् तन्न बिरोचते ।
**लङ्का** तु तरुशाखायां रावणस्य च पत्तने ॥ ९१ ॥

**लक्ष्मीः** श्रीभूतिशोभासु वृद्धिसंज्ञे च भेषजे ।
ऋद्धिसंज्ञे च कस्याञ्चिद् विष्णोर्नवसु शक्तिषु ॥ ९२ ॥

---

१. 'ष' ख. ग. पाठः. २. 'न्तृ' क. ख. पाठः. ३. 'न्तृ' क. पाठः. ४. 'प्र-तत्यां शा' ख. पाठः.

लघङ्गे चाथ लीला स्याद् विलासक्रीडयोरपि[1] ।
लूता पिपीलिकायां स्यादूर्णनाभेऽप्यथो वपा ॥ ९३ ॥
रन्ध्रे मेदसि च व्रज्या वर्गे पर्यटने गतौ ।
वलिर्जठररेखायां जराप्रशिथिलत्वचि ॥ ९४ ॥
ऊर्मौ च गृहदारौ च वधूः स्त्रीमात्रभार्ययोः ।
नवोढयोषास्नुषयोः भार्यायां पूर्वजस्य च ॥ ९५ ॥
स्पृक्कानद्योश्च विद्या तु शास्त्रविज्ञानयोरपि ।
शैवागमप्रसिद्धेषु तत्त्वभेदेषु केषुचित् ॥ ९६ ॥
मन्त्रेषु चाप्यथासत्यां विहगे च विहाध्वनिम् ।
धनञ्जयो जगादाथ विद्युत् स्यात् क्षणरोचिषि ॥ ९७ ॥
मनश्शिलायां वीथी तु गृहाङ्गे पङ्क्तिमार्गयोः ।
रूपकाणां तथैकस्मिन् वीरुत् तु स्थावरान्तरे ॥ ९८ ॥
गुल्माख्येऽपि प्रतानिन्यां लतायां वृत्तिवाक् पुनः ।
कृष्यादौ वर्तनेऽप्यारभट्यादिचतसृष्वपि ॥ ९९ ॥
शब्दोच्चारणधर्मेषु द्रुतमध्यादिषु त्रिषु ।
ऋक्पादस्याप्युपान्तेऽप्यप्रतिबन्धप्रवर्तने ॥ १०० ॥
व्याख्याने ग्रन्थभेदे च सामगीतिगुणान्तरे ।
सुम्भक्तौ चापरे त्वाहुर्मरणेऽपि विचक्षणाः ॥ १०१ ॥
वृद्धिस्त्वादैक्षु वृद्धाख्यभेषजे वर्धने सुखे ।
ऋणातिरिक्तदातव्ये प्रयोक्रे पुत्रजन्मनि ॥ १०२ ॥
मुष्कवृद्ध्यात्मके वध्मसंज्ञे रोगान्तरेऽपि च ।
वेणिर्व्याधौ केशबन्धे जनन्यां च सरित्यपि ॥ १०३ ॥
शङ्का वितर्कभययोः शंसा तूक्तौ स्तुतावपि ।
इच्छायां चाजयः प्राह तदसत् स्मर्यते यतः ॥ १०४

---

१. 'म्पत्तौ' ख. पाठः.

आङ्पूर्वस्यैव शब्दज्ञैः शंसेरिच्छार्थवाचिता ।
**श्रद्धा** स्पृहायामास्तिक्ये मन्यन्ते तु विशेषतः ॥ १०५ ॥
गर्भिण्या अपि वाञ्छायां **श्वश्रूः** श्वशुरयोषिति ।
पितृष्वसारं त्वस्यार्थे व्याचष्टे शाकटायनः ॥ १०६ ॥
**शरत्** संवत्सरे मेघात्यये **शान्तिस्तु** मङ्गले ।
चिकित्सायां शमे चाथ **शिबिर्निष्पावनामनि** ॥ १०७ ॥
वल्ल्यां शम्यां तथा **शीर्णिस्त्वङ्गे** विशरणे रुजि ।
**शुण्डा** सलीलहस्तिन्यां मदिराहस्तिहस्तयोः ॥ १०८ ॥
**श्रुतिस्तु** वेदे श्रवणक्रियायां श्रोत्र एव च ।
गीतिधर्मविशेषे च शब्दे चाप्यभिधायके ॥ १०९ ॥
**श्रोणिः** कट्यामुपस्थेऽथ **संस्था** स्यादाकृतौ मृतौ ।
व्यवस्थायां समाप्तौ च प्रणिधावपि केचन ॥ ११० ॥
**संज्ञा**भिधाने सङ्केते हस्ताद्यैरर्थसूचने ।
सूर्यभार्यान्तरे बुद्धौ चेतनायां च तत्र च ॥ १११ ॥
उपांशु यच्च क्रियते स्वेष्वनीकेषु विग्रहे ।
**सन्धा**वधौ प्रतिज्ञायां सन्ध्यासन्धानकर्मणोः ॥ ११२ ॥
**स्वसृ**शब्दः समाम्नातो भगिन्यामङ्गुलावपि ।
**सरि**न्नद्यां तथा छन्दोभेदे द्वासप्ततिस्वरे ॥ ११३ ॥
**संयद्** युद्धेऽग्निचित्यायां द्वादशस्विष्टकासु च ।
**संसत्** सदसि सत्राख्यक्रतूनां त्वेपि भूमनि ॥ ११४ ॥
चतुर्विंशतिरात्रे द्वे तयोः पूर्वत्र संसदः ।
**संविद्** युद्धे प्रतिज्ञायां सङ्केताचारनामसु ॥ ११५ ॥
संभाषणे क्रियाकारे ज्ञानतोषणयोरपि ।
**संपद्** भूतौ गुणोत्कर्षे **स्वाहा**ग्नेय्यां च वाचि च ॥ ११६ ॥

---

१. 'त्र' क. ख ङ. पाठः. २. 'चाथ भू' क. ग. घ. पाठः.

अव्ययं तु हविर्दाने सातिर्दानावसानयोः ।
वेदनायां च तीव्रायामथ स्थितिरिति ध्वनिः ॥ ११७ ॥
व्यवस्थायामवस्थायां क्रियायामपि तिष्ठतेः ।
सिद्धिस्त्वृद्ध्याख्यवृद्ध्याख्यभेषजाद्वितये गतौ ॥ ११८ ॥
संराद्धावथ सीता स्यात् पृथिव्यां हलपद्धतौ ।
सस्ये हरितसस्येऽन्ये सस्यभूमावितीतरः ॥ ११९ ॥
सुमेरुशिरसः प्राग्दिग्गतगङ्गान्तरेऽपि च ।
जानक्यामथ सीमा स्यादवधौ भूमिकूलयोः ॥ १२० ॥
क्षेत्रव्यवस्थयोश्चेति डाबन्तार्थाः समीरिताः ।
मन्नन्तापि च सीमास्ति तस्याश्चार्था इमे मताः ॥ १२१ ॥
अदन्तोऽप्यस्ति सीमः स नानालिङ्गेषु वक्ष्यते ।
ईक्ष्यास्तदर्थास्तत्राथ सुधा सौहित्यमूर्वयोः ॥ १२२ ॥
गङ्गेष्टिकायां कुड्यादिलेपद्रव्यान्तरेऽमृते ।
स्नुह्यां स्थूणा तु गेहस्य स्तम्भे वातादिषु त्रिषु ॥ १२३ ॥
लोहप्रतिकृतौ तन्त्रधारिण्यामिति षट्स्वपि ।
रश्मिमेखलयोः स्यूना सृष्टिस्त्यागस्वभावयोः ॥ १२४ ॥
उत्पादने चाथ सृतिर्मार्गे च गमनेऽपि च ।
स्मृतिस्तु धर्मशास्त्रे स्यादुत्कण्ठाचिन्तयोरपि ॥ १२५ ॥
हिंसा चौर्यादिके घातेऽथो प्रस्तावविलासयोः ।
अवज्ञायां च हेलाथ होरा लग्नार्धलग्नयोः ॥ १२६ ॥
अहोरात्रे च पूर्णोऽयमध्यायो द्व्यक्षरास्त्रियाः ॥ १२६½ ॥

इति द्व्यक्षरकाण्डे स्त्रीलिङ्गाध्यायः ।

## अथ द्व्यक्षरकाण्डे पुल्लिङ्गाध्यायः ।

अथ पुंसि विरिञ्चाख्या रुद्राक्षे स्युश्चतुर्मुखे ।
तस्मिन् पञ्चमुखे शम्भोः कुमारस्य तु षंण्मुखे ॥ १ ॥
गुग्गुलूलूककुटजेष्विन्द्रस्याग्नेस्तु चित्रके ।
भल्लातकेऽप्यथार्कस्य भल्लातक्यर्कपर्णयोः ॥ २ ॥
कर्पूरकाम्पिल्लकयोरिन्दोर्वज्रस्य हीरके ।
कुबेरस्य तु पर्याया वन्दाके* क्षीरवृक्षजे ॥ ३ ॥
मुस्तेऽभ्रकेऽम्बुदस्याथ शैलेये धरणीभृतः ।
अर्थः फले धने शास्त्रे वस्तुमात्रे प्रयोजने ॥ ४ ॥
हृदये साधने मोक्षे कार्यैश्वर्यनिवृत्तिषु ।
वाच्ये हेतावभिप्राये याचने च हलायुधः ॥ ५ ॥
अङ्कः समीप उत्सङ्गे चिह्ने स्थानापराधयोः ।
रूपकाणां विशेषे च नाटकादेश्च पर्वसु ॥ ६ ॥
उरस्यर्घस्तु पूजायां मूल्येऽप्यब्दस्तु वारिदे ।
वत्सरे मुस्तकेऽथाब्दः(?)पुरोडाशर्षिभेदयोः ॥ ७ ॥
वृक्षावयवभेदे च स्यादगो गिरिवृक्षयोः ।
अश्मोऽभ्रे भूधरेऽथाभो‡ (?)वायावात्मन्यथार्कवाक् ॥ ८ ॥
व्याधौ शशाङ्केऽप्यद्रिस्तु शैले सूर्ये द्रुमेऽम्बुदे ।
अङ्घ्रिः पादपमूले च प्राणिनां चरणेऽपि च ॥ ९ ॥
अन्धुरूधसि कूपेऽपि व्रणेऽक्षुस्त्वब्धिवप्रयोः ।
असुध्वनिस्तु प्रज्ञायामसवो भूम्नि जीविते ॥ १० ॥
अशुस्तु याचके कालेऽप्यश्मा पाषाणमेघयोः ।
आधिर्मानसपीडायामधिष्ठाने तथैव च ॥ ११ ॥

* वृक्षोपरिजाते लताविशेषे । ‡ 'अथात्तुः' इति पाठः स्यात् ।

व्यसने बन्धके चेति चतुर्ष्वर्थेषु कीर्तितः ।
आत्मार्कचन्द्रवाताग्निजीवेषु परमात्मनि ॥ १२ ॥
देहे यत्ने धृतौ कीर्तौ बुद्धौ मनसि च श्रुते ।
धर्मे स्वभावे पुत्रेऽर्थे परस्य प्रतियोगिनि ॥ १३ ॥
इन्द्रः पुरन्दरे सूर्ये सूर्येषु द्वादशस्वपि ।
विशेषतः स्यादेकस्मिन् परमात्मनि पादपे ॥ १४ ॥
अश्मन्तकाह्वये क्ष्वेडविशेषे इति षट्स्वयम् ।
पत्यौ च नामपूर्वोऽथो ईष्मो वायुवसन्तयोः ॥ १५ ॥
उत्सो व्योम्न्यम्बुधौ कूपे जलाधारान्तरेऽपि च ।
ऊष्मा त्वौष्ण्यगुणे ग्रीष्मे बाष्पे शषसहेषु च ॥ १६ ॥
ऋषिर्वेदे वसिष्ठादौ चक्षुरादीन्द्रियेषु च ।
ज्ञानवृद्धे क्षपणकेऽप्यृतुस्तु शिशिरादिषु ॥ १७ ॥
गर्भग्रहणयोग्ये च काले स्त्रीणां रजस्यपि ।
ओघः परम्परायां स्याज्जलस्रोतसि सञ्चये ॥ १८ ॥
महाजलसमूहे च वाद्यादिद्रुतवर्तने ।
क्षणस्त्ववसरे मध्ये पारतन्त्र्ये तथोत्सवे ॥ १९ ॥
मुहूर्ते षष्ठभागे च नाड्याः कालेऽतिसूक्ष्मके ।
निर्व्यापारास्थितौ चाथ कण्ठः शब्देऽन्तिके गले ॥ २० ॥
क्षवस्तु राजिकासंज्ञसर्षपे क्षवथावपि ।
क्षयस्त्वपचये कुक्षौ कल्पान्ते राजयक्ष्मणि ॥ २१ ॥
क्रियायां वसतेर्धातोर्हिंसायां गमनेऽपि च ।
मन्दिरे चाथ कल्पः स्यान्न्याये देवद्रुमे[1] विधौ ॥ २२ ॥
विभीतके विकल्पे च[2] संवर्ते ब्रह्मणो दिने ।
शास्त्रजातिविशेषे च सामर्थ्ये वर्णने तथा ॥ २३ ॥

१. 'दै' ग. पाठः. २. 'पि' क. ग. घ. पाठः.

छेदने कारणौपम्याधिवासेष्वथ कर्ववाक्[1]।
अपाठि निष्पत्तिक्षेत्रे[2] कन्दर्पे चेति कैश्चन ॥ २४ ॥
**कलि**र्विभीतके तस्य फलेऽनर्थे च संयुगे।
कलिर्निश्रीरिति प्राह शब्दविच्छाकटायनः ॥ २५ ॥
विवादमात्रे त्वजयः कलिशब्दमभाषत।
युगे चतुर्थे चालक्ष्म्यां कलरूपेषु धातुषु ॥ २६ ॥
**कषि**र्निकषपाषाणे धातौ स्यात् कषतावपि।
अश्वकर्णाख्यवृक्षे च काष्ठे चाथ **क्रतु**र्मखे ॥ २७ ॥
प्रज्ञाक्रियासङ्कल्पेष्वप्यथ **काचो**ऽक्षिसंभवे।
उपतापविशेषे स्यात् तथा मृद्भदशिक्ययोः ॥ २८ ॥
[3]शिलायां चाथ **काशिः** स्यान्मुष्टौ काशाह्वये तृणे।
धातौ च काशतौ भूम्नि त्वेष स्यान्नीवृदन्तरे ॥ २९ ॥
**किणो** रूढव्रणस्थाने तथा स्यादासनान्तरे।
लक्षणं चासनस्यास्य वैजयन्त्यां यथाभ्यधात् ॥ ३० ॥
पद्मासनस्थे[4] पदयोः पाणिना पृष्ठगामिना।
वामेन दक्षिणाङ्गुष्ठं वामं त्वन्येन पीडयेत् ॥ ३१ ॥
वेतालासनमित्येतदेकाङ्गुष्ठग्रहात् किणः।
**क्षुर**स्तु कोकिलाक्षाख्यस्तम्बे गोक्षुरनाम्नि च ॥ ३२ ॥
नापितस्योपकरणे **कुटि**[5]स्तु वृषलालये।
पापे वृक्षेऽपि **कुध्र**स्तु समुद्रे पर्वतेऽपि च ॥ ३३ ॥
**कुक्षि**स्तुन्देऽन्तरुदरपार्श्वयोरपि दृश्यते।
इक्ष्वाकोः पूर्वराजस्य पुत्रे कस्मिंश्चिदप्यसौ ॥ ३४ ॥
**कूष्मा**[6] तु वाताभावे च शल्ये च क्षेपवाक् पुनः।
क्षिप्तिनिन्दावहेलेषु **केतु**स्तु ध्वजचिह्नयोः ॥ ३५ ॥

---

१. 'र्मे' क. घ. पाठः. २. 'ति' ख. पाठः. ३. 'ली' क. घ. पाठः. ४. 'स्थ' ख. पाठः. ५. 'ठि' क. ख. घ. पाठः. ६. 'कुष्ठा तु' ख. पाठः.

प्रज्ञायां ग्रहभेदे च किरणे क्रेदुवाक्[1] पुनः ।
भङ्गे चन्द्रे शरीरे च क्षेत्रेऽथौषधिचन्द्रयोः ॥ ३६ ॥
मुखप्रसेके च क्लेदः क्षोदो रजसि चूर्णने ।
क्षोदशब्दः समाम्नाये पठितो जलवाचकः ॥ ३७ ॥
**कोरो** वृक्षाङ्कुरे बालपुष्पे चाथ **खुरः** शफे ।
शुक्तिसंज्ञौषधे चाथ **खेदिः** स्यात् किरणे तथा ॥ ३८ ॥
रश्मौ तुरङ्गमस्याथ **गर्भो**ऽपवरकालये ।
अन्नेऽग्नौ कुक्षिकुक्षिस्थजन्त्वोः पनसकण्टके ॥ ३९ ॥
शिशावपत्ये शुक्रे च समूहे सारबीजयोः ।
**गन्धस्तु** गन्धवद्द्रव्ये चन्दनादौ महीगुणे ॥ ४० ॥
घ्राणस्य विषये लेशे तथा सम्ब(न्धि? न्ध)मात्रके ‡ ।
**गणो** बहुत्वसङ्ख्यायां गणने प्रमथे व्रजे ॥ ४१ ॥
ऋषिभेदे सैन्यभेदे गुल्माख्यात् त्रिगुणे * ध्वनौ ।
अजयस्य त्विदं ग्रन्थे दृश्यते प्रमथे चले ॥ ४२ ॥
इत्येवं तस्य याथात्म्यं समूलत्वं च चिन्त्यताम् ।
**गर्तस्तु** स्यात् सभास्थाणौ मन्दिरेऽप्यवटेऽपि च ॥ ४३ ॥
**ग्रन्थस्तु** शास्त्रे द्रविणे द्वात्रिंशद्वर्णसञ्चये ।
वचस्यथ **ग्रन्थिरि**क्षुवेण्वादेः काण्डयोर्द्वयोः ॥ ४४ ॥
सन्धौ ग्रन्थनदेशे च रज्जुवस्त्रादिवस्तुनः ।
रोगभेदेऽप्यथ **गरुत्** पक्षिपक्षे च तेजसि ॥ ४५ ॥
सङ्घाते च जवे चाथ **ग्रामो** गीतिस्वरान्तरे ।
शब्दभूतादिपूर्वस्तु व्रजे संवसथे तथा ॥ ४६ ॥

---

१. 'के' क. ग. घ. पाठः.

---

‡ 'गन्धः सम्बन्धलेशयोः' इति हैमः । * 'त्रैगुण्यात् स्युर्यथाक्रमम् ।' (पृ. १०८. श्लो. ५७, ५८) इति वैजयन्ती ।

ग्रावा शैलशिलाश्मेषु गुणो मौर्व्यप्रधानयोः ।
उपकारे सूपकारे तन्तुरज्ज्विन्द्रियेषु च ॥ ४७ ॥
सत्त्वादौ भाग आवृत्तौ सन्ध्यादौ द्रव्यमाश्रिते ।
महाभूतेषु शौर्यादौ दोषस्य प्रतियोगिनि ॥ ४८ ॥
भारवाहकभेदे च वृद्धनाभौ च गोण्डवाक् ।
घर्मः स्वेदजले ग्रीष्म उष्णे दिवस आतपे ॥ ४९ ॥
यज्ञे हविर्विशेषे च ‡महावीरश्श्रुतेऽश्विनोः ।
चयः समूहे प्राकारमूलके चयनेऽप्यथ ॥ ५० ॥
चरुः स्थाल्यां हव्यपाके मेघेऽथ च[2]र्यूपवाग् रवौ ।
वाते युद्धे छदस्तु स्यात् पक्षिपक्षेऽपवारणे ॥ ५१ ॥
वृक्षपत्रेऽप्यथच्छन्दो वंशेऽभिप्रायवाञ्छयोः ।
ज्वरस्तु व्याधिमात्रे च हरकोपसमुद्भवे ॥ ५२ ॥
रोगराजेऽप्यथो जन्तुः प्राणिमात्रे नरे त्वपि ।
उक्तो निरुक्तेऽथ ज्ञातिरिक्ष्वाकुकुलसंभवे ॥ ५३ ॥
नृपभेदेऽप्यथो जायुः पित्ते स्याद् भेषजेऽपि च ।
जिनस्त्वर्हति शाक्ये च जूटस्तु निकु[3]रम्बके ॥ ५४ ॥
केशविन्यासभेदेऽथ जोषः प्रीतौ च सेवने ।
झाटः स्थावरभेदे च सङ्घातेऽप्यथ डिम्बवाक् ॥ ५५ ॥
डमरे पक्षिणामण्डेऽन्तःकुक्ष्यवयवान्तरे ।
भागुरिः प्लीहनि प्राह तच्चिन्त्यं वैद्यके यतः ॥ ५६ ॥
भेदेनोपदिशन्त्येनौ शारीरे मुनिपुङ्गवाः ।
तँप[4]*स्तु बन्धनोपाये वीतंसाख्ये पतत्रिणाम् ॥ ५७ ॥

---

१. 'ण्व' क. घ. पाठः. २. 'चू' ख. पाठः. ३. 'र' क. ख. ङ. पाठः.
४. 'तस्प' क. घ., 'तर्प' ग., 'त्रस्प' ङ. पाठः.

---

‡ 'महावीरो यज्ञपात्रे । (पु. २७८. श्लो. २०) इति वैजयन्ती । * 'तंस' इति स्यात् । 'वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम्' इत्यमरः ।

रवौ तर्कस्तु काङ्क्षोहवितर्केष्वथ तर्कुवाक् ।
सूत्रवेष्टशलाकायामनलाधारभाजने ॥ ५८ ॥
शेफस्यपीति शब्दज्ञास्त्रिष्वर्थेषु स्मरन्त्यमुम् ।
त्रासो भये मणेर्दोषे त्यागो दाने समुज्झने ॥ ५९ ॥
तुस्तः प्रदीपने चैव जटायामपि कश्चन ।
तूकः पर्वतजातौ स्यादुपस्थे चाप्यथो तृपत् ॥ ६० ॥
तृणभूमौ समुद्रे च चन्द्रे चाप्यथ दर्शवाक् ।
दर्शनेऽपरपक्षान्तकार्[1]यवैदिककर्मणि ॥ ६१ ॥
अमावास्यातिथौ चाथ दम इन्द्रियनिग्रहे ।
दण्डे गृहे दवस्त्वग्नौ वनवह्न्युपतापयोः ॥ ६२ ॥
दावो दवाग्नावग्नौ च द्रुमस्त्वखिलशाखिषु ।
नान्दि[2]वृक्षे पारिजाते दृतिस्त्वम्बुदजिह्वयोः ॥ ६३ ॥
भस्त्रायां चर्मखण्डे च ऋषिभेदेऽथ धाकवाक् ।
ओदनानडुहोर्धातुशब्दस्तु धनलोहयोः ॥ ६४ ॥
स्वर्णे रेतसि पाषाणे शरीरे गैरिके रसे ।
अस्थ्नि स्वभाव आकारे स्याद् भूवादिसुबन्तयोः ॥ ६५ ॥
वातादिशब्दस्पर्शादिगैरिकादित्वगादिषु ।
महाभूतेष्विन्द्रियेषु पादे पञ्चाक्षरे तथा ॥ ६६ ॥
महानाम्न्यां त्रिधात्वादिवाक्येऽन्योऽर्थोऽस्य मृग्यताम् ।
नगो गिरौ तरौ नस्र ऋषौ नासापुटेऽप्यथ ॥ ६७ ॥
नमिर्नमतिधातौ च जैनतीर्थकरान्तरे ।
स्याद् विद्याधरराजेऽथ नाशो ध्वंसे पलायने ॥ ६८ ॥
मृतावदर्शने नाकुः स्याद् वल्मीके वनस्पतौ[3] ।
पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु ॥ ६९ ॥

---

१. 'पः' ग. पाठः. २. 'र्ये' क. ग. घ. पाठः. ३. 'न्दी' क. ख. घ. पाठः.

पार्श्वद्वारे विरोधेऽर्धमासे चुल्लीबिलेऽन्तिके ।
हस्तिपार्श्वे परिज्ञाने केशशब्दात् परश्चये ॥ ७० ॥

पणो विक्रय्यशाकादिबद्धमुष्टौ ग्लहे धने ।
द्यूतेऽशीतौ वराटानां कार्षिकव्यवहारयोः ॥ ७१ ॥

मूल्ये भृतौ व्यवस्थायां विक्रयेऽप्यथ पट्टवाक् ।
प्रशस्तक्षौमकौशेयाद्यम्बरे व्रणबन्धने ॥ ७२ ॥

शाणस्य‡ नेत्रे स्वर्णादिकृतदीर्घाच्छपत्रके ।
गुवाकनालिकेरादिपत्रमूलेस्थवेष्टके ॥ ७३ ॥

पर्पः शङ्केऽम्बुधौ वस्त्रे प्लक्षस्तु तरुषु त्रिषु ।
अश्वत्थे पर्कटीसंज्ञे गर्दभाण्डेऽप्यथो पविः ॥ ७४ ॥

वज्रे शस्त्रमुखे वायौ दृश्यर्थे त्वव्ययं पशु ।
पुमान् मृगादौ छगले हर्षनन्दी त्ववोचत ॥ ७५ ॥

ग्राम्येऽप्यमुक्तात्मसु तु वयं ब्रूमोऽथ पादवाक् ।
किरणे चरणे वृक्षमूलेऽद्रेः प्रान्तपर्वते ॥ ७६ ॥

तुर्यभागे पद्यभागे परिमाणान्तरेऽपि च ।
प्रासस्तु प्रासने कुन्तसमाख्ये चायुधान्तरे ॥ ७७ ॥

पाणिः पलचतुर्भागे हस्तेऽप्यथ भगे गुदे ।
पायुः पाप्मा तु रोगे च दुरितेऽप्यथ पिण्डिवाक् ॥ ७८ ॥

निष्पीडितस्नेहपिण्डे पिष्टधानादिचूर्णके ।
पिचुस्तूले कर्षमाने पितुस्त्वन्नविरिञ्चयोः ॥ ७९ ॥

---

१. 'न्धे' क. ग. घ. पाठः. २. 'लादिवेष्टने' क. घ., 'लास्थिवेष्टने' ग. पाठः. ३. 'लः' क. घ., 'वेः' ग. पाठः.

---

‡ 'पट्टो नेत्रेऽपि शाणे स्यात्' (पु. २१६. श्लो. ३४) इति वैजयन्ती । 'पट्टः पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे च राजादिशासनान्तरपीठयोः ॥' इति मेदिनी । 'पट्टश्चतुष्पथ पीठे राजादेः शासनान्तरे । व्रणादिबन्धने पेषाश्मनि' इति हेमचन्द्रश्च ।

ूर्येऽपि सज्जनः पीकः पुनर्योनौ जलाशये ।
ुधिः स्यादुदपानेऽग्नौ प्रुधिरग्निकुसूलयोः ॥ ८० ॥
प्रसङ्ग्रामयोः पूर्षं समाम्नाये समामनत् ।
ोषस्तु प्रेषणे मर्दे बन्धस्त्वाधौ च बन्धने ॥ ८१ ॥
ीसाख्यलोहभेदे च वैजयन्त्यामपाठि सः ।
ुध्रः प्रजापतौ रुद्रे पृष्ठान्ते स्वर्गतुण्डयोः ॥ ८२ ॥
ृक्षादेरप्यवाग्भागे भ्रमस्तु विचिकित्सने ।
मिथ्याज्ञाने गृहादेश्च निर्गमद्वारि वारिणः ॥ ८३ ॥
शस्त्रमार्जनयन्त्रे च तथा भ्रमणकर्मणि ।
अदन्तो भर्गशब्दोऽयं सामभेदे महेश्वरे ॥ ८४ ॥
भरस्त्वतिशये भारे सङ्ग्रामे गरिमण्यपि ।
भारः सहस्रद्वितये पलानां च गरिम्णि च ॥ ८५ ॥
वोढव्ये भरणे चाथ ज्येष्ठभ्रातरि भास्करे ।
भावोऽथ भातुवाग् दैवे शरीरावयवेऽपि च ॥ ८६ ॥
भुजिर्भुनक्तिधातौ स्यात् पावके भुजतावपि ।
भुजस्तु गरुडेऽर्काग्न्योर्भ्रूणस्त्वर्भकभूपयोः ॥ ८७ ॥
गर्भिण्यां स्त्रैणगर्भे च ब्राह्मण्यां श्रोत्रियद्विजे ।
आर्ये यतौ च केचित् तु प्राहुर्ब्राह्मणमात्रके ॥ ८८ ॥
भूभृद् गिरौ नृपेऽथाद्रितट ऋष्यन्तरे भृगुः ।
भेदो विशेषे व्यावृत्तावुपजापे विदारणे ॥ ८९ ॥
भेनस्तु चन्द्रे सूर्ये च भोगो राज्ये धने सुखे ।
रक्षणेऽभ्यवहारे च सर्पस्य फणकाययोः ॥ ९० ॥
वेश्यादीनां भृतौ चापि कौटिल्येऽप्यथ[२] मन्त्रवाक् ।
ऋग्यजुःप्रभृतौ गूढभाषणेऽप्यथ मन्थने ॥ ९१ ॥

---

१. 'पू' क. ख. पाठः. २. 'क्षि' क. ख. पाठः.

मन्थो मथनदण्डे च द्रवसिक्तेषु सक्तुषु ।
मखो यज्ञे यशस्कामसत्रयाजिसुरान्तरे ॥ ९२ ॥

मरुस्तु निर्जले देशे शैले चेक्ष्वाकुवंशजे ।
पितामहेऽम्बरीषस्य नृपेऽपि च नृपान्तरे ॥ ९३ ॥

सोमवंशजहर्यश्वपुत्रे भूम्नि तु नीवृति ।
दशेरकाख्ये मन्थी तु भास्करे राहुचन्द्रयोः ॥ ९४ ॥

गृहाख्यसोमपात्राणामेकस्मिन् यज्ञकारिणाम् ।
माथस्तु मथने मार्गे मोक्षस्तु स्याद् विमोचने ॥ ९५ ॥

अपवर्गे च मृत्यौ च मुष्कराख्यद्रुमान्तरे ।
मोहः पुनः स्यादज्ञाने मूर्छायां क्रोध एव च ॥ ९६ ॥

अजयस्त्वाह तन्द्रायामपि यज्ञस्तु केशवे ।
अग्नावात्मनि योगे च यक्ष्मस्तु व्याधिमात्रके ॥ ९७ ॥

क्षयरोगे पूजने च यक्ष्मा तु व्याधिमात्रके ।
क्षयरोगे च यागस्तु यज्ञेऽप्यागमवेदिनाम् ॥ ९८ ॥

शैवानां प्रथितेषु स्यात् सर्वतोभद्रकादिषु ।
मण्डलेष्वथ यावः स्यान्मासेऽलक्तकसंज्ञके ॥ ९९ ॥

रागद्रव्ये च योगस्तु ध्यानयोजनकर्मणि ।
भेषजे सङ्गतौ प्राप्तौ जवे विस्रब्धघातिनि ॥ १०० ॥

केचित् सन्नहनोपाय इत्येकार्थं प्रचक्षते ।
अन्ये सन्नहनेऽप्याहुरुपाये चेति केचन ॥ १०१ ॥

रदो विलेखने दन्तेऽप्यथादन्तो रजध्वनिः ।
रजस्संज्ञगुणे पांसौ स्त्रीपुष्पेऽप्यजयोऽब्रवीत् ॥ १०२ ॥

रागोऽनुरागे मात्सर्ये रक्तवर्णे रंजस्यपि ।
लाक्षादिरञ्जनद्रव्ये दीप्तौ क्लेशादिकेऽपि च ॥ १०३ ॥

अजयस्तु वदत्यत्र लोहितादिष्विती दृशम् ।
गीतिधर्मविशेषे च लवस्तुच्छेदकर्मणि ॥ १०४ ॥
लेशे कालविशेषे च काष्ठाया द्विगुणेऽथ सः ।
लिङ्गुर्गोत्रान्तरे मस्तौ चित्ते लेपस्तु भोजने ॥ १०५ ॥
लिप्तिक्रियायां लोकस्तु स्थानविष्टपयोर्जने ।
वर्गः समानां निवहे वज्रे शक्त्याह्वये बले ॥ १०६ ॥
तावत्कृत्वः कृतौ चाथ व(र्णो? र्णुः)जनपदान्तरे ।
वेदे नदविशेषे च सहस्रकिरणेऽपि च ॥ १०७ ॥
वारः क्रियाभ्यावृत्तौ स्यात् समूहेऽवसरे तथा ।
कालभेदे नृपादीनां चारे चेत्याह कश्चन ॥ १०८ ॥
वाजोऽन्ने पक्षिपक्षे च वेगे सङ्ग्रामरेतसोः ।
इषुच्छदावलौ चैके व्याजश्छद्मापदेशयोः ॥ १०९ ॥
विधिर्दैवे विरिञ्चे च काले कल्पे विधानके ।
विधातव्येऽप्यथो विष्णुर्मखे यज्ञे च केशवे ॥ ११० ॥
तस्यावतारभेदे च वामनाख्येंऽशुमालिनाम् ।
द्वादशानामन्यतमे चन्द्रे च व्रीहिवाक् पुनः ॥ १११ ॥
धान्यमात्रे षष्टिकादिधान्यभेदेऽप्यथ व्रजे ।
विन्यासे च व्यूहशब्दो विन्यस्तेऽपीति कश्चन ॥ ११२ ॥
वृष आर्द्रक ओषध्यां बले च लशुनेऽपि च ।
वृषौ तु मुष्कफलयोः कोष्ठावयवभेदयोः ॥ ११३ ॥
वृषा तु वृषभे शक्रे श्रेष्ठे पुंसि तुरङ्गमे ।
छन्दोभेदे निदानोक्तेऽप्यष्टपञ्चाशदक्षरे ॥ ११४ ॥
वीर्ये सोमविशेषेऽथ वेगः किम्पाकरंहसोः ।
प्रवाहे च प्रभावे च वाते रेतसि चाप्यथ ॥ ११५ ॥
वेषः क्रियायामाकल्पे वेणुर्वंशद्रुमे नृपे ।
शब्दोऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणे ध्वनौ ॥ ११६ ।

शम्बो वज्रे लोहमये वलये मुसलाग्रगे ।
अरित्रेऽर्थान्तरेऽप्यस्ति शम्बबीजात् कृषान्वित ॥ ११७ ॥
शण्डो नपुंसके दान्ते चेत्येकेषामिदं मतम् ।
एष च प्रतिपत्तव्यस्तालव्योष्मादिवर्णकः ॥ ११८ ॥
शक्रः कुटजवृक्षे च महेन्द्रेऽप्यथ शम्भुवाक् ।
हरे हरौ विरिञ्चे च स्यादर्हत्यथ शापवाक् ॥ ११९ ॥
आक्रोशे शपथे चाथ शास्ता बुद्धे गुरौ नृपे ।
महाशास्तरि च स्यात् तु शिपिः किरणशेफयोः ॥ १२० ॥
अथ शुक्षिर्निदाघे स्यान्मातरिश्वनि चाप्यथ ।
श्लेष्मा कफे चर्मणश्च विकारे दृढकाह्वये ॥ १२१ ॥
रथस्य शीघ्रवहनसाधने चापि वस्तुनि ।
श्लोकः पद्ये यशोवाचोः षण्ड इद्वरपण्डयोः ॥ १२२ ॥
इत्यन्येषां मतं सोऽयं मूर्धन्योष्मादिरीरितः ।
एष वर्षवरे नीलवृषोत्सर्गे च कीर्तितः ॥ १२३ ॥
षिड्गो वेश्यापतावुक्तो वेश्याचार्येऽपि कैश्चन ।
श्व्यूमश्चन्द्रे जले रश्मौ तन्तौ मङ्गल इत्यपि ॥ १२४ ॥
वैजयन्त्यामपाठ्येवं तच्चासभ्यं न रोचते ।
यथा स पठितुं युक्तस्तथान्त्याध्याय ईक्ष्यताम् ॥ १२५ ॥
सर्गोऽध्याये स्वभावे च निर्माणे च समुज्झने ।
उत्साहे निश्चये चाथ स्कन्धः समुदये चये ॥ १२६ ॥
अंसे महीपतौ वृक्षमहाविटपमूलके ।
स्कन्दो विरिञ्चे तीरे च नद्याः स्तम्बस्तु संहतौ ॥ १२७ ॥
तृणे च विटपे चाथ स्तम्भः स्यात् प्रतिबन्धने ।
स्थूणायां च जडीभावे स्पर्शस्तु प्रणिधौ युधि ॥ १२८ ॥

---

१. 'च' क. घ. पाठः.

* 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' (५. ४. ५८) इत्यत्रायमदः प्रतिपाद्यते ।

सवस्तु सूतौ सूत्यायां स्तुतौ यागे च वर्तने[1] ।
स्वप्नः सुप्तस्य विज्ञाने स्वापे सन्धिस्तु रन्ध्रके ॥ १२९ ॥
अन्त्यस्तोमेऽतिरात्रस्य श्लेषे भङ्गसुरुङ्गयोः ।
नाट्याङ्गेऽथ स्वरुर्यूपशकले कुलिशेऽपि च ॥ १३० ॥
स्वभूर्विष्णौ विरिञ्चेऽथ साद्यश्वारोहसूतयोः ।
*स्तीभिः[2] समुद्रे हृदये स्फीतिर्वृ[3](क्ष?द्ध) उदश्विति ॥ १३१ ॥
सृणिस्तु वह्नौ कुलिशे सुह्मा जनपदान्तरे ।
मूर्ध्नि तस्य नृपे सर्ववचनोऽथासुरान्तरे ॥ १३२ ॥
स्याद् दारुलेखके सुन्दः स्तूपो वायौ समुच्छ्रये ।
संयुगोपायतनयोर्मूर्धमध्यगुडे पशोः ॥ १३३ ॥
सूरः सूर्ये गभस्तौ च स्वेदस्तु स्वेदवारिणि ।
स्वेदनायां तथा स्विन्तिक्रियायामथ सेतुवाक् ॥ १३४ ॥
वरणाख्यद्रुमे वारिबन्धेऽप्यायतने तथा ।
स्नेहुः पित्ते तथा रोगविशेषे सन्निपातगे ॥ १३५ ॥
स्नेहो[4]† वसायां गोस्वाङ्गे[5] स्तोमस्तु स्तोतृवृन्दयोः ।
सङ्ख्यायां यज्ञगस्तोत्रस्तोत्रियाणां क्रतावपि ॥ १३६ ॥
देर्[6]यभेदेऽध्वमाने च दशधन्वन्तराह्वये ।
हवस्तु यज्ञ आज्ञायामाह्वाने वह्निहोमयोः ॥ १३७ ॥
हठः पाष्ण्यौ बलात्कारे जलोद्भवतृणान्तरे ।
वारिपर्णीसमाख्येऽथ महारुग्भीममृत्युषु ॥ १३८ ॥
हनुर्हेलिस्तु मार्ताण्डे तथोक्त उपगूहने ।
उत्पत्तौ कारणे वादे निमित्ते वीजकर्मणि ॥ १३९ ॥

---

१. 'ते' क. घ. ङ. पाठः. २. 'स्तम्भिः' ग., 'स्त्वभिः' क. घ. ङ. पाठः. ३. 'f
ख., 'स्फीविः' क. घ. ङ. पाठः. ४. 'हा' ख. पाठः. ५. 'गौस्त्वाङ्गे' क. घ., 'गौस्वाङ्गे
'स्वौस्वाङ्गे' ङ. पाठः. ६. 'व' क. ग. घ. पाठः.

---

* 'स्तिम्भिः' इति बृहदभिधाने, 'स्तम्भिः' इति वैजयन्त्यां च समुद्रवाचिनौ श
† 'स्नेहश्चतुर्विधः प्रोक्तो घृतं तैलं वसा तथा । मज्जा च' इति वैद्यकम् ।

पञ्चस्वेषु पदार्थेषु हेतुर्वररुचीरितः ।
प्रयोजके स्वतन्त्रस्य कर्तुरित्यपि शाब्दिकाः ॥ १४० ॥

इति ह्यक्षरकाण्डे पुंल्लिङ्गाध्यायः ।

---

## अथ ह्यक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

अथ क्लीबेऽभिधानानि सर्वाणि कुमुदस्य हि ।
रजतेऽतिदिशन्त्यार्या रुधिरस्य तु कुङ्कुमे ॥ १ ॥

रूप्यस्याञ्जनभेदे स्युर्बदरस्य तु नागरे ।
अथाभ्रशब्दो जलदे व्योममुस्तकयोरपि ॥ २ ॥

अभ्रकाह्वयधातावप्यस्त्रमायुधचापयोः ।
अघं तु व्यसने पापे दुःखेऽथ स्यादलध्वनिः ॥ ३ ॥

हरिताले वृश्चिकस्य पुच्छकण्टक एव च ।
अक्षि नेत्रे तथेक्ष्वादेः काण्डस्यावयवान्तरे ॥ ४ ॥

अम्बुच्छन्दोविशेषे स्यान्नवत्यक्षरलक्षिते ।
लग्नाच्चतुर्थे राशौ स्यादिति सांवत्सरा विदुः ॥ ५ ॥

ह्रीबेरे सलिलेऽथ स्यादम्भो ह्रीबेरतोययोः ।
द्व्यशीतिस्वरके छन्दस्यष्टाशीत्यक्षरे तथा ॥ ६ ॥

अम्भसी इति तु द्यावापृथिव्योर्द्विवचोन्तकम् ।
अर्णश्छन्दोविशेषेऽष्टसप्ततिस्वरके जले ॥ ७ ॥

अनोऽन्ने शकटे सान्त ओदने सलिलेऽपि च ।
अर्शो दुर्नामनि व्याधिमात्रेऽप्यङ्कस्तु संयुगे ॥ ८ ॥

स्वाङ्गभेदेऽपि चाब्जस्तु रूपे कश्चित् सरोरुहे ।
अर्थस्तु रूपेऽपत्ये च क्रियायामप्यथो अयः ॥ ९ ॥

'घ्न' क. ख. घ. पाठः.

कालायसे सुवर्णे च स्यादाज्यं तु घृते युधि ।
श्रीवेष्टाह्वयनिर्यासे स्तोत्रेषु च चतुर्ष्वपि ॥ १० ॥

स्युर्बहिष्पवमानाद्यान्यूर्ध्वान्यध्वरकर्मणाम् ।
उन्मानभेदे चे पलसंज्ञेऽप्येतदपाठिषुः ॥ ११ ॥

आर्द्रं तु रश्मावाकाशेऽप्यागः पापापराधयोः ।
रहस्ये चोक्थशब्दस्तु सामस्तोत्रेषु च त्रिषु ॥ १२ ॥

परेष्वग्निष्टोमसाम्न औक्थिक्ये सामलक्षणे ।
वैजयन्त्यां तु शस्त्राख्ययागमन्त्रेषु भाषितम् ॥ १३ ॥

अन्ये त्ववैदिकाः प्राहुः सामवेदस्य वाचकम् ।
सज्जनास्त्वपठीदेनं साम्नः पर्याय एव हि ॥ १४ ॥

उरो वक्षसि मुख्येऽथ गवादीनां स्तनास्पदे ।
ऊधः सीमाख्यसाम्नश्च पादभेदे तथा निशि ॥ १५ ॥

एनः पापेऽपराधे च स्यादोजो बलतोययोः ।
दीप्तौ प्रकाशेऽवष्टम्भे काव्यालङ्कारभेदके ॥ १६ ॥

ओको गृहे जलौकायामाश्रये चाथ भूषणे ।
कण्वं पर्वणि किण्वं तु नग्नहूसंज्ञवस्तुनि ॥ १७ ॥

पिण्याके चाथ तुहिने क्षुम्रं कण्टकिगुल्मके ।
कूलं तीरे चमूकट्यां तटाके सूप एव च ॥ १८ ॥

क्षेत्रं पृथिव्यामाकाशे शरीरे योनिवृन्दयोः ।
केदारदारागारेषु नक्षत्रे पुरि राशिषु ॥ १९ ॥

पुण्यस्थाने च खात्रं तु चोरनिर्मितरन्ध्रके ।
कुद्दालेऽप्यथ गात्रं स्यात् तनोरवयवे तनौ ॥ २० ॥

गजानां पूर्वजङ्घादिपादयोरथ गोत्रवाक् ।
लोके यानेऽप्यथो चर्म फलकाख्यास्त्रवारणे ॥ २१ ॥

---

१. 'र्षु च' क. ग. घ. पाठः. २. 'पि' क. ख. घ. पाठः. ३. 'मे' ख. ग. ४. 'न्दा' क. घ. पाठः. ५. 'पि' क. घ. पाठः.

त्वचि चिह्नं त्वभिज्ञाने पताकायामथो हृदि ।
प्रज्ञायामपि चित्तं स्याच्चोचं तु स्यात् तरुत्वचि ॥ २२ ॥

भृङ्गाख्यगन्धद्रव्येऽथच्छद्मस्खलितयोश्छलम् ।
छन्दः श्रुतीच्छापद्येषु सामगानां विशेषके[1] ॥ २३ ॥

अनूहसामग्रन्थेऽथेच्छद्म सद्मानि कैतवे ।
छदिस्तु पटले गेहे जन्म तूत्पत्तितोययोः ॥ २४ ॥

जीलं करकपत्र्यां स्यात् कोशे चर्मपुटे दृतौ ।
तन्त्रं स्वराष्ट्रव्यापारे तन्तुवाने[3]‡ परिच्छदे ॥ २५ ॥

शास्त्रौषधान्त्रमुख्येषु प्रयोगेऽध्वरकर्मणाम् ।
एकस्यैवोभयार्थत्वे कुटुम्बव्यापृतावपि ॥ २६ ॥

सेनायां सामसूत्रे च सिद्धान्तेऽन्यकुटुम्बके ।
ऋतुर्कामाभिवादानामृक्सामानां समागमे ॥ २७ ॥

तल्पं शय्याट्टदारेषु मञ्चे* युद्धेऽप्यथ त्रपु ।
वङ्गे सीसेऽप्यथ तरो बले वेगे तनुरित्वदम् ॥ २८ ॥

विस्तारे च शरीरे च तेजस्तु बलतोययोः ।
नवनीतेऽनले धर्मे ज्योतिष्यर्चिषि रेतसि ॥ २९ ॥

प्रभावे पौरुषे सत्त्वे ज्वलत्यन्नात्मनोरपि ।
तोकं पुत्रे च पुंत्र्यां च द्रव्यं त्वर्थे गुणाश्रये ॥ ३० ॥

औषधे पित्तले योग्यऋक्सामेष्विड्गामिषु ।
दानं हस्तिमदे त्यागे खण्डने लवने क्षये ॥ ३१ ॥

---

१. 'तः' क. ख. घ. पाठः. २. 'च' क. ग. घ. पाठः. ३. 'ये' क. घ. पाठः, त. ङ. पाठः. ४. 'कर्माभि' ग. पाठः. ५. 'पौं' क. घ. पाठः.

---

‡ 'तन्त्रं स्वराष्ट्रव्यापारे तन्तुवाने परिच्छदे' (पु. २२४. श्लो. ११) इति वैजयन्ती ।
[illegible]शिरसि ।

शोधने रक्षणे चाथ **द्वारं** द्वाराभ्युपाययोः ।
**द्युम्नं** धने यशस्यन्ने बले **दैन्यध्वनिः** पुनः ॥ ३२ ॥

दीनतायां च शोके च **द्यौत्र**[1]शब्दस्तु वासरे ।
प्रमाणेऽन्ये प्रतोदेऽन्ये ज्योतिष्यथ **धनं** भवेत् ॥ ३३ ॥

लग्नाद् द्वितीयराशौ च स्वापतेये च गोव्रजे ।
**धामं** त्वदन्तं तिलकतेजसो**र्धाम** तु त्विषि ॥ ३४ ॥

गेहदेहप्रभावान्नभोजनव्योमजन्मसु ।
स्थानेऽधिकरणे सारे धने लक्ष्मणि चाप्यथ ॥ ३५ ॥

शाखायां त्वपि वैचित्र्ये नान्तशब्दं प्रचक्षते ।
**पदमङ्घ्रौ** शरे त्राणे व्यवसायापदेशयोः ॥ ३६ ॥

चिह्नेऽङ्घ्रिचिह्नेऽङ्घ्रिन्यासे पद्यभागेंऽशुवस्तुनोः ।
स्थाने वाक्ये सुप्तिङन्ते माने पञ्चदशाङ्गुलौ ॥ ३७ ॥

इन्द्रपुच्छेति वर्गस्याप्यादितस्त्रिषु सामसु ।
**पत्रं** तु गार्हपत्येऽपि पिठरे **पक्ष्मवाक्** पुनः ॥ ३८ ॥

पुष्पच्छदे पक्षिपक्षे तथा नयनलोमसु ।
किञ्जल्के तन्तुतूलादेरणीयोवयवेऽपि च ॥ ३९ ॥

**पयः** सामान्तरे दुग्धे रजन्यामन्नतोययोः ।
**परु**रिक्ष्वादिकग्रन्थौ धर्मे **पाजो** बलान्नयोः ॥ ४० ॥

**पाथः** स्थानान्नखाम्भस्सु **पाथिः** स्वर्गेन्दुपूषसु ।
नद्यां ज्योतिष्यथो **पिञ्छं** मयूरस्य शिखण्डके ॥ ४१ ॥

विहङ्गपक्षमात्रे च **पृष्ठं** तु चरमं तनोः ।
चतुर्षु सामस्तोत्रेषु क्रतोः सामान्तरे कुशे ॥ ४२ ॥

**पेशो** रूपे हिरण्येऽथ सूकरस्य हलस्य च ।
**पोत्रं** मुखाग्रे **पौंस्यं** तु बले युद्धेऽथ **बर्हवाक्** ॥ ४३ ॥

१. 'द्योतश' ग, 'द्योत्र' क. ख. घ. पाठः.

वृक्षपत्रे केकिपिञ्छेऽप्यथ **बीजं** फलास्थनि ।
अन्ने रेतस्यपत्ये च हेतावङ्कुरकारणे ॥ ४४ ॥

स्वर्णवेतनयोर्भर्म **भर्ग**स्तेजसि रेतसि ।
**भुवः** सूर्ये लोकभेदे **महस्तू**त्सवतेजसोः ॥ ४५ ॥

जले चाथ **मुखं** वक्त्रे मुख्ये ताम्राभ्युपाययोः ।
आदौ निस्सरणे गेहपुरादीनां च सैन्धवे ॥ ४६ ॥

द्वारेऽथ देहिनां बीजे **मेदो** धातौ चतुर्थके ।
**यश**स्तु सत्त्वख्यातिश्रीज्ञानमाहात्म्यवारिषु ॥ ४७ ॥

धनप्रतापयोश्चाथ **यजु**र्यज्ञोत्सवे तथा ।
मन्त्रजातिविशेषे च **योक्त्रं** त्वङ्गुलियोक्त्रयोः ॥ ४८ ॥

**रत्नं** स्वजातिश्रेष्ठे च माणिक्यादिमणावपि ।
समाम्नाये समाम्नासीद्धने च सलिलेऽपि च ॥ ४९ ॥

**रज**स्तु शरदि स्त्रीणां पुष्पे रेणौ जले स्रजि ।
सत्त्वाद्यन्यतमे रात्रौ लोहे[2] तेजसि रेतसि ॥ ५० ॥

अहन्यथ **रहश्शब्दो** मैथुने विजने तु तत् ।
अव्ययं वाथ **राधः** स्यात् प्ररूढे च धनेऽपि च ॥ ५१ ॥

**रिप्रं** दुःखे च पापे चेत्यामनन्ति विचक्षणाः ।
**रेतः** शुक्रे[3] जले चाथ **रोध**स्तीरान्तरिक्षयोः ॥ ५२ ॥

वरणे बन्धने कुड्ये रोधसी इति रोदसोः ।
**ललं** पलव उद्याने **लक्ष्म** चिह्नप्रधानयोः ॥ ५३ ॥

स्यादुपच्छन्दने **लालं** गुह्यार्थपरभार्ययोः ।
**लिङ्गं** बुद्ध्यादिसंहत्यां साङ्ख्यानां प्रकृतावपि ॥ ५४ ॥

स्त्रीपुंसादौ च संस्थाने शरीरे चिह्नशेफयोः ।
प्रव्रज्यायामवयवे वेषेऽप्यथ **वनं** जले ॥ ५५ ॥

---

१. 'कू' ख. पाठः. २. 'के' ख. पाठः. ३. 'क्ले' क. ग. घ. पाठः.

कानने गहने यज्ञे धनप्रीतिगभस्तिषु ।
वस्तु ग्रामनगर्यादिपदार्थे स्वापतेयके ॥ ५६ ॥

पदार्थमात्रेऽप्यस्यार्थे पण्डितः शाकटायनः ।
सादित्याह स्म वर्चस्तु विष्ठायामन्नतेजसोः ॥ ५७ ॥

लावण्येऽर्चिष्यथ वयो वत्सरे यौवने धने ।
अन्ने पक्षिणि बाल्यादौ जीवितेऽप्यथ वर्त्मवाक् ॥ ५८ ॥

मार्गे नेत्रच्छदे चाथ वर्म स्यात् कवचे गृहे ।
वपुः शरीरे लावण्ये जले दीप्तौ च सज्जनः ॥ ५९ ॥

वेश्म स्यान्मन्दिरे लग्नादपि राशौ तुरीयके ।
वैष्टु तु यज्ञाति स्वर्गे गेहेऽपि परमात्मनि ॥ ६० ॥

व्योमशब्दं तु पञ्चार्थे विद्यात् स्थाने जले दिशि ।
आकाशेऽक्षितसङ्ख्यायाः* सङ्ख्यायां दशकात्मनि ॥ ६१ ॥

शर्ध्यं जले सुखे चाथ शकृद् गोमयविष्ठयोः ।
जले च शर्म तु सुखे गृहे चाथ श्वयो बले ॥ ६२ ॥

शोषे गदे श्रवस्त्वन्ने यशश्श्रोत्रबलेषु च ।
धने शास्त्रं तु विद्यायामाज्ञायां श्वात्रवाक् पुनः ॥ ६३ ॥

धने क्षिप्रेऽप्यथो शिल्पं कारुकर्मणि कर्मणि ।
कर्मान्तराणां निर्माणविज्ञाने शाकटायनः ॥ ६४ ॥

शिरो मूर्ध्नि पुरःसैन्ये सामस्तोत्रान्तरे तथा ।
प्रधानेऽप्यथ शीर्षं स्यान्मूर्ध्नि चागुरुसंज्ञके ॥ ६५ ॥

---

१. 'द' ग. पाठः. २. 'र्ध्य' ग. पाठः.

*'बृन्दादिषु तु षट्स्वन्ये निखर्वं बद्धमक्षितम् । व्योम चान्तश्च सर्वश्च' (१६८. श्लो. ३०, ३१) इति वैजयन्ती ।

गन्धद्रव्येऽथ शैत्यं स्याच्छैशिर्ये शौक्ल्यकार्ष्ण्ययोः ।
शीतलत्वे च शोचिस्तु पै[2](शा॒ङ्ग)ल्ये* शु(द्धि॒ग्वि)शुद्धयोः ॥ ६६ ॥
रश्मौ ज्वलति शुद्धत्वेऽप्यथ शौर्यमिति ध्वनिः ।
क्रमात् तृतीयराशौ च शक्त्याह्वयबले तथा ॥ ६७ ॥
शूरस्य भावक्रिययोरथ सस्यमिति ध्वनिः ।
वृक्षादीनां फले धान्ये धान्यस्तम्बे गुणे त्वमुम् ॥ ६८ ॥
जयादित्योऽवददथो सत्रमाच्छादने वने ।
द्वादशाहादियज्ञेषु सदादानेऽथ सक्थिवाक् ॥ ६९ ॥
ऊरौ च शकटाङ्गे च कस्मिंश्चिदथ सद्मवाक् ।
गृहे जले च रोदस्योः सद्मनी इत्यथो जले ॥ ७० ॥
आज्ये च सर्पिः स्नानं तु स्नानीयाप्लवयोरथ ।
साम प्रगीतमन्त्रेषु सान्त्वसामप्रभेदयोः ॥ ७१ ॥
साधुन्यथ जले स्रोतः प्रवाहे सरितामपि ।
अम्भसो निर्गमद्वार इन्द्रियेऽप्यथ हर्म्यवाक् ॥ ७२ ॥
प्रासादपृष्ठ इत्येके गृहभेदे गृहेऽपि च ।
हरः क्रोधे जले लोके ज्योतिषि ज्वलति स्रजि ॥ ७३ ॥
अ[3]ग्निसामविशेषेषु पञ्चस्वथ हविर्घृते ।
हव्ये जलेऽथ होत्वं स्याद् यजमानसमुद्रयोः ॥ ७४ ॥
होमहव्येऽग्निहोत्रस्य शालायां चेत्यपूर्ययम् ॥ ७४½ ॥

इति द्व्यक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

१. 'च' क. घ. ङ. पाठः. २. 'वै' ख. घ. पाठः. ३. 'ह्नि' ख. ङ., 'हि' ग. पाठः.

* 'शोचिः शोकांशुपैङ्गल्यशुद्धत्वेषु' (पु. २२६. श्लो. ३५) इति वैजयन्ती ।

## अथ त्र्यक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

**अथाभिधेयलिङ्गः** स्यादर्भो बाले तथाल्पके ।
**अन्य**स्त्वसदृशे भिन्नेऽप्यन्त्योऽन्तभवनीचयोः ॥ १ ॥

शरीरिशेषिणोरङ्गी विशेषादङ्गवत्यपि ।
सेवके याचकेऽप्यर्थी व्यवहाराभियोक्तरि ॥ २ ॥

**अदश्शब्दं** त्रिषु प्राहुरत्र तत्र परत्र च ।
**आप्यं** तु प्रापणीये स्याद् भोजाद्यास्त्वम्मयेऽपि च ॥ ३ ॥

**आप्तः** प्रत्ययिते प्रोक्तो लब्धेऽपि कृतबुद्धिभिः ।
**इयत्** प्रादेशमात्रेऽपि स्यादिदंपरिमाणके ॥ ४ ॥

**एकशब्द**स्तु धीमद्भिः समाम्नातश्च केवले ।
प्रधाने प्रथमेऽन्यस्मिन् समानेऽल्पेऽप्यसौ पुनः ॥ ५ ॥

एकत्वसङ्ख्यायुक्ते स्यात् सङ्ख्येये तत्र चाप्यसौ ।
नित्यैकवचनान्तः स्यादिति प्राहुरथो **कृती** ॥ ६ ॥

कुशले पण्डिते योग्ये **ग्रस्तं** वेष्टितभुक्तयोः ।
लुप्तवर्णपदे वाक्ये **गन्तु**स्तु पथिकेऽतिथौ ॥ ७ ॥

**चुल्लः** क्लिन्नाक्षजन्तौ च क्लिन्ने चाक्ष्ण्यथ **चोद्यवाक्** ।
चोदनीयेऽद्भुते **छन्न**श्छादितेऽपि रहस्यपि ॥ ८ ॥

**जाल्मो** नीचे च निर्बुद्धौ स्तब्धेऽनालोच्यकारिणि ।
**जात्यो** मुख्ये कुलीने च चारौ **ज्याया**स्तु पूर्वजे ॥ ९ ॥

स्यात् प्रशस्ततरे वृद्धतरे **डिम्भ**स्त्वबोद्धरि ।
शिशौ **तिल्य**स्तु तैलीने तिलसाधौ तिलाय च ॥ १० ॥

हितेऽथ **दभ्रं**[1] स्यादल्पे शिशौ ह्रस्वेऽथ सत्वरे ।
**द्राङ्गं** प्रांशौ च **दीप्तं** तु स्याद् दग्धे भासितेऽपि च ॥ ११ ॥

१. 'भ्रः' क. ग. घ. पाठः. २. 'द्रांशः प्रा' ङ. पाठः.

द्रुतं विलीने शीघ्रे र्वं व्यवदीर्णेऽप्यथो रथे ।
द्वीपिचर्मावृते द्वैपं द्वीपिनोऽवयवे तथा ॥ १२ ॥

विकारेऽप्यासमुद्रान्तद्वीपसम्बन्धिवस्तुनि ।
अन्यत्र मानुषात् तत्स्थाच्चाथ कश्चित् स्वतन्त्रधीः ॥ १३ ॥

ध्वस्तं ग्रासीकृते लुप्ते नयहीनेऽप्यवोचत ।
धुतं तु कम्पिते त्यक्ते धूतं त्यक्तेऽपि कम्पिते ॥ १४ ॥

न्यक्षं कृत्स्ने निकृष्टे च न्यूनमूनविगर्हयोः ।
प्राज्ञस्तु धीमज्ज्ञात्रोः स्यात् तत्रापि स्यात् क्रमाद् द्वयम् ॥ १५ ॥

स्त्र्यर्थे प्राज्ञा तथा प्राज्ञी पात्रशब्दस्तु वक्ष्यते ।
शोष्टरि त्रातरि पित्रे पिल्लः क्लिन्नेऽक्षिण तद्वति ॥ १६ ॥

भङ्ग्यं भाङ्गीनभङ्क्त्व्यभङ्गसाध्वादिषु स्मृतम् ।
भाक्तस्तु भक्तसाधौ स्यात् तथा लाक्षणिकेऽपि च ॥ १७ ॥

भिन्नं विदारितेऽन्यस्मिन् मिश्रे चाथ महत्तरे ।
भूयः स्यादितरेऽप्येष पुनरर्थेऽपि सोऽव्ययम् ॥ १८ ॥

माष्यं तु हिंस्ये माषीणे माषसाधौ च तद्धिते ।
क्लिष्टं म्लानेऽप्यविस्पष्टवाक्ये मुग्धं तु नूतने ॥ १९ ॥

मूढे सौम्ये च मेघ्यं तु वलाहकभवे तथा ।
मेघसाधौ च याप्यं तु यापनीये विगर्हिते ॥ २० ॥

रुशद् वर्णविशेषेण युक्ते वाक्येऽप्यमङ्गले ।
हिंसितर्यपि पूर्वत्र स्त्र्यर्थे स्याद् रुशतीति हि ॥ २१ ॥

हिंसितुः स्त्र्यर्थविषये रुशन्ती रुशतीति च ।
न्याय्यलब्धव्ययोर्लभ्यं लोलश्चलसतृष्णयोः ॥ २२ ॥

व्यग्रस्तु विगताग्रे च व्यापृताकुलयोरपि ।
वाच्यस्तु कुत्सितेऽधीने विहीने वदितव्यके ॥ २३ ॥

१. 'अन्यमादी' क. ख. घ. पाठः, 'चाप्यनजीर्णे' ङ. पाठः.

*विद्धं सूच्यादिभिर्भिन्ने सदृशेऽप्यथ विश्रवाक् ।
लब्धे विचारिते प्राप्तसत्ताकेऽप्यथ केचन ॥ २४ ॥

प्रचक्षते विप्रशब्दं मेधाविगतनासयोः ।
तत्तु मेधाविनि न्याय्यं गतनासे त्वसाम्प्रतम् ॥ २५ ॥

यस्मात् स्मृति'र्वेप्रं'[1] इति न तु 'वेप्रं' इतीदृशी ।
तस्माद् विप्रो[2] गतप्राणे विप्रो मेधाविनि स्मृतः ॥ २६ ॥

विद्वान् विदद्बुधात्मज्ञेष्वाहान्यो विदुरेऽप्यमुम् ।
व्यूढं विन्यस्तविस्तीर्णसंहतेष्वथ वैरिवाक् ॥ २७ ॥

अरातौ वैरवति च समाम्नाताथ शक्रवाक् ।
प्रियंवदे च शक्ते च श्लक्ष्णं त्वल्पेऽपि सुन्दरे ॥ २८ ॥

मसृणे चाथ शाली स्यात् श्लाघ्यशालिमतोरथ ।
शून्यं रिक्ते मोहवतो वचस्यप्यथ सज्जवाक् ॥ २९ ॥

सन्नद्धेऽपि सतो जाते स्फीतं त्वृद्धप्रभूतयोः ।
स्फुटं विकसिते व्याप्ते शुक्ल*विस्पष्टयोरपि ॥ ३० ॥

स्वैरस्तु मन्दे स्वच्छन्दे हर्ता चोरेऽपि नेतरि ॥ ३०½ ॥

इति त्र्यक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

---

## अथ त्र्यक्षरकाण्डे नानालिङ्गाध्यायः ।

अथ नानार्थशब्देषु नानालिङ्गानधीमहे ।
प्राणिजातिषु नृस्त्रीत्वं पूर्ववत् स्याद् व्यवस्थया ॥ १ ॥

---

१. 'ल' ख. पाठः. २. 'स्रो' ख पाठः.

---

* 'त्रिरात्रं धान्यराशिस्थं तच्छुक्लं शुद्धमित्यपि' (पु. १६५. श्लो. ८५) इति

इन्दोः सर्वेऽपि पर्याया हंसस्यापि नपुंसके ।
रजते स्युः खरस्यापि कुमुदे मूर्धजस्य तु ॥ २ ॥

ह्रीबेरेऽथ नृलिङ्गाः स्युः स्पृक्कायां तस्कराह्वयाः ।
स्योनाके तु सृगालस्य वानरस्य तु सिल्हने ॥ ३ ॥

कूर्मस्य मकरस्यापि पर्याया निधिभेदयोः ।
अथैव स्वस्वलिङ्गाः स्युरुशीरे समराह्वयाः ॥ ४ ॥

जलमुस्तेऽटवेर्बिन्दोः सिध्मादौ देहवैकृते ।
गणस्याब्धेश्च सङ्ख्यायां शिरसः शिखरे तरोः ॥ ५ ॥

अगुरुण्ययसो गुन्द्रे शरस्य मकरे त्वसोः ।
पिण्डारे त्ववटोः पाणेर्बर्हिष्ठे मुस्तकेऽप्यप म् ॥ ६ ॥

धूल्यश्वयोरश्वकन्दे पर्पटे मरिचेऽयसः ।
सर्पस्य सीसके नागकेसरे द्विपसर्पयोः ॥ ७ ॥

सङ्ख्याभेदे तु शङ्खस्य शस्त्रस्यायसि लक्ष्मेन् ।
अपराधे तु रन्ध्रस्य व्याधेः कुष्ठाख्यभेषजे ॥ ८ ॥

खस्याभ्रके ब्रह्मणि च मीनमेषविषाणिनाम् ।
मिथुनस्य कुलीरस्य सिंहकन्यातुलालिनाम् ॥ ९ ॥

धनुर्मकरकुम्भानां क्रमाद् द्वादशराशिनि ।
ध्वजधूममृगेन्द्राणां श्वोक्षरासभहस्तिनाम् ॥ १० ॥

वायसस्य च पर्यायाः क्रमात् पूर्वादिवेश्मसु ।
बाष्पालके स्युरन्नस्य शैलेये तु शिलाह्वयाः ॥ ११ ॥

त्वचो लवङ्गे पर्णस्य पक्षे क्ली किंशुके नरः ।
रूक्षस्याञ्जनभेदे क्ली पुल्लिङ्गो नागकेसरे ॥ १२ ॥

धुर्धूरेऽप्यम्बुजाख्यास्तु निधिभेदे नृलिङ्गकाः ।
शुभस्य फेनिलतरौ पर्यायाः स्युर्नृलिङ्गकाः ॥ १३ ॥

---

१. 'चण्डायां त' ख. ङ. पाठः. २. 'सिंहने' क. ग. ङ. पाठः. ३. 'थवा स्व' ग. पाठः, 'थैव' क. घ पाठः. ४. 'तु' ख. पाठः.

माक्षिके क्ली स्त्रियो लक्ष्म्यां नरः पद्मस्य सारसे ।
अथा॑र्कशब्दो ना सूर्ये वह्नाविन्द्रौ पुरन्दरे ॥ १४ ॥

ज्येष्ठभ्रातरि वज्रेऽन्ने स्फटिके स्तुतिमन्त्रयोः ।
अध्वर्युक्रमभेदेऽर्कपर्णसंज्ञे[1] च गुल्मके ॥ १५ ॥

वसिष्ठजमदग्न्यादिसामभेदेषु केषुचित् ।
नपुंसके त्वर्कपर्णगुल्मस्य फलपुष्पयोः ॥ १६ ॥

अक्षः पुमानामलके द्यूतभेदे विभीतके ।
आधारे व्यवहारे च शकटे च वराटके ॥ १७ ॥

रथादिचक्रे कर्षाख्यमानद्यूतशलाकयोः ।
चतुश्शताङ्गुले मानविशेषे (थ? च) रथादिनः ॥ १८ ॥

चक्रधारककाष्ठेऽथ क्ली सौवर्चल इन्द्रिये ।
अजयस्त्वाह नित्येऽपि तत्र स्याद् भेद्यलिङ्गकम् ॥ १९ ॥

अन्तोऽवसाने मरणे स्वरूपे निश्चयेऽन्तिके ।
धर्मे प्रधाने च पुमान् केषाञ्चित् पुन्नपुंसकम् ॥ २० ॥

कोटेरारभ्य दशमे स्थाने दशगुणोत्तरे ।
सङ्ख्याभेदे समुद्राख्यसङ्ख्यायां त्वपरे विदुः ॥ २१ ॥

सा च सङ्ख्याष्टमं स्थानं कोटेरारभ्य कीर्तिता ।
एतयोः पूर्वसङ्ख्यायां विकल्पेनाभ्यधात् त्रिषु ॥ २२ ॥

छान्दोग्योपनिषद्युक्तं[2] सर्वेष्वन्तेष्वितीदृशम् ।
तत्रार्थश्चिन्तनीयोऽन्यः पैदार्थं[3] मन्वते परे ॥ २३ ॥

अन्ता तु नृस्त्रियोर्बन्धे घर्म्याकारेऽपि चान्तते[5] ।
अन्तनायां तु पुल्लिङ्गो[4] भेद्यवत् तु पचाद्यचि ॥ २४ ॥

---

१. 'ङ्ेऽथ गु' क. पाठः. २. 'क्त' ख. पाठः. ३. 'पा' क. ग. पाठः. ४. ख. ग. ङ. पाठः. ५. 'तो' ङ. पाठः, 'के' ख. ग. पाठः.

अर्मम[1]स्त्री स्थले ग्रामे नेत्ररोगान्तरेऽपि च ।
अट्टो नातिशये घाते क्षौमसंज्ञगृहान्तरे ॥ २५ ॥

शुष्कस्फुटितभूभागे त्रिषु पक्वौदने तु नप् ।
अयः शुभावहे दैवे द्यूताक्षपतने गतौ ॥ २६ ॥

पुमान् गन्तरि तु प्राहुर्मेघालिङ्गं वदावदाः ।
अयतेरप्ययेरेतेरीयतेश्च पचाद्यचि ॥ २७ ॥

अर्यो महाशास्तरि ना द्वयोर्वैश्ये यदा त्वयम् ।
वैश्यजातिस्त्रियामर्या स्यादर्याणी च सा तदा ॥ २८ ॥

यदा तु वृत्तिः पुंयोगात् तदार्यी त्रिषु तु प्रभौ ।
अर्थ्येस्त्रिष्वनपेतेऽर्थाद् विद्वदात्मवतोरपि ॥ २९ ॥

न्याय्ये च कृकणाख्ये च पक्षिभेदे द्वयोरयम् ।
शिलाजतुनि तु क्लीबमरं[2] तु त्वरिते त्रिषु ॥ ३० ॥

तत्राप्यसत्त्वे क्ली ना तु चक्राविष्कम्भदारुणि ।
अजो हरे विधौ विष्णौ ताते दशरथस्य च ॥ ३१ ॥

ना निर्जन्मनि तु त्रि स्याद् द्वयोस्तुच्छगले स्मृतः ।
अब्जं क्ली लवणे पद्मे ना तु शङ्खशशाङ्कयोः ॥ ३२ ॥

धन्वन्तरौ चाजयस्तु शङ्खेऽमुं क्लीबमभ्यधात् ।
नासेः स लिङ्गे त्रिषु तु जलसम्भूतवस्तुनि ॥ ३३ ॥

अग्रं पुरोधिकोर्ध्वेषु पलमाने[3]* नपुंसकम् ।
आधिक्यश्रैष्ठ्ययोरेके प्रधाने त्वभिधेयवत् ॥ ३४ ॥

लिङ्गमाचक्षतेऽस्यान्ये तत्राप्यन्ये नपुंसकम् ।
अङ्गं शरीरावयवे शरीरोपाययोर्गुणे ॥ ३५ ॥

---

१. 'त्रे' ख. ङ. पाठः. २. 'भ्यलिङ्गि' क. घ. पाठः. ३. 'फ' क. घ. पाठः.

---

* 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च' इति मेदिनी । 'अग्रं पुरःशिखामानश्रेष्ठाधिक्यफलेषु च' (पु. २२४. श्लो. १) इति वैजयन्ती ॥

वैयाकरणसंज्ञायां प्रदेशे च नपुंसकम् ।
नीवृद्भेदे तु पुंभूम्नि तद्राजे तु पुमानयम् ॥ ३६ ॥

अङ्गशालिनि तु त्रि स्यादथ सम्बोधनादिषु ।
अङ्गेत्यव्ययमम्ल्लस्तु षण्णामन्यतमे रसे ॥ ३७ ॥

पुमांस्तद्वति तु त्रि स्यादन्धं तु तिमिरे नपुम्* ।
त्रिषु नेत्रविहीनेऽथ स्यादर्धः शकले पुमान् ॥ ३८ ।

समभागे तु शण्डोऽयं रूपकार्थेऽपि रूढितः ।
अर्हो योग्ये त्रिरर्हा तु नृस्त्रियोरर्हणे तथा ॥ ३९ ॥

अण्डं क्लीबं विहङ्गादेः पेशीकोशेऽपरे पुनः ।
मुष्के त्वाहुः परेऽप्येनं पुन्नपुंसकयोर्विदुः ॥ ४० ॥

अन्नं तु त्रिषु जग्धे स्यादोदने क्ली जलेऽपि च ।
अस्तोऽस्तमयशैले ना त्रिषु क्षिप्ते गृहेषु नप् ॥ ४१ ॥

अक्ष्णं क्ली नयनेऽक्ष्णा स्त्री रज्जौ व्याधौ पुमांस्त्रि तु ।
अखण्डेऽथ द्वयोरक्तः प्रेते त्रि म्रक्षितादिषु ॥ ४२ ॥

अश्वो विष्णववतारे ना तुरङ्गे तु द्वयोरयम् ।
अन्ध्रस्त्वनन्यपूर्वायां निषाद्यां जनिते द्वयोः ॥ ४३ ॥

वैदेहेनाथ पुंभूम्नि नीवृद्भेदेऽथ तन्नृपे ।
ना तद्देशनिवासे तु मनुष्ये स्याद् द्वयोरयम् ॥ ४४ ॥

अङ्क्यः स्यादङ्कनीये त्रि स्यान्मृदङ्गान्तरे पुमान् ।
अर्घ्यं त्रिषु जलेऽर्घार्थे तदर्हेऽथो नपुंसकम् ॥ ४५ ॥

आपाण्डुतिक्ते मधुनि वैराग्ये त्वर्दमामनत् ।
शण्डे पुंसि तु गत्यादावस्रं तु रुधिराश्रुणोः ॥ ४६ ॥

---

१. 'म्ल' क. घ पाठः. २. 'मृङ्क्षिकादि' ङ. पाठः, 'मक्षिकादि' क. घ. मृक्षिकादि' ग. पाठः.

* नपुंसकम । 'अन्धं तु तिमिरे क्लीबम्' इति मेदिनी

क्ली ना तु केशे यत् त्वेतदजयेन प्रमादिना ।
अस्रः कोण इति प्रोक्तं तन्नाद्रत्यं मनीषिभिः ॥ ४७ ॥

तालव्योष्मा द्वितीयो हि वर्णः कोणाभिधायिनः ।
एकीयस्याश्रशब्दस्य स्यादणिस्तु नरस्त्रियोः ॥ ४८ ॥

रथाद्यक्षाग्रकीले च क्लीबेऽश्री रूप्य एव च ।
वर्धमानतिथिप्रायपक्षे त्वेष पुमानथ ॥ ४९ ॥

चिक्रोडाख्ये प्राणिभेदे द्वयोर्ना त्वहिरम्बुवे ।
वृत्रासुरे च द्वे तु स्यात् पन्नगे स्त्री त्वही गवि ॥ ५० ॥

अप्सु द्यावापृथिव्योश्च स्यादर्तिस्तु नृलिङ्गकः ।
भूवादिधातुभेदेऽथ स्त्री धनुष्कोटिपीडयोः ॥ ५१ ॥

अरिस्तु शत्रौ ना द्वे तु मनुष्येऽथ त्रिरीश्वरे ।
अङ्गिः शेफे पुमान् नागकेसराह्वयपादपे ॥ ५२ ॥

त्रिस्त्वृजौ व्यञ्जके शुक्ले पेषण्यां तु स्त्रियामयम्[1] ।
अभ्रिः स्त्री काष्ठकुद्दाले स्यात् कूपे तु पुमानयम् ॥ ५३ ॥

अविः पुंस्यवर्तौ धातौ सूर्यपर्वतयोरपि ।
द्वयोस्तु मेषेऽथाविर्ना भाःप्राकारार्कवायुषु ॥ ५४ ॥

स्त्री तु पुष्पवतीभूम्योरणुस्तु पवने पुमान् ।
परमाणौ धान्यभेदे सामुद्रलवणे तु नप् ॥ ५५ ॥

सूक्ष्मेषु त्रिषु तत्रापि स्त्र्यर्थे वाण्वीत्यथाङ्गुलौ[2] ।
रश्मौ चाण्वी स्त्र्यथानुर्ना प्राणे मर्त्ये तु स द्वयोः ॥ ५६ ॥

अंशुः सूत्रादिसूक्ष्मांशेऽप्येकदेशे लतादिनः ।
चन्द्रे सूर्ये द्युतौ रश्मौ पुमान् केचित्तु मन्वते ॥ ५७ ॥

---

१. 'मि' क. ग. घ. पाठः. २. 'पण्डौ' क. घ. ङ. पाठः.

क्लीलिङ्गमप्यन्तिमयोरर्थयोरंशुवाक् पुनः ।
द्वयोः पक्षिणि हिंसार्थे पुमानक्तुस्तु केशवे ॥ ५८ ॥

इन्द्रे च ना दिशि स्त्री स्यादसत् तु क्लीबलिङ्गकम् ।
प्रधानतत्त्वे साङ्ख्यानां त्रिस्तु सत्प्रतियोगिनि ॥ ५९ ॥

पुंश्चल्यामसती स्त्री स्यादर्वा तु त्रिषु कुत्सिते ।
अश्वे द्वयोः पुमांस्तु स्यादशनौ च मुनौ तथा ॥ ६० ॥

अर्हस्तु त्रिषु पूज्ये ना जिनेऽली तु द्वयोरलौ ।
पुच्छकण्टकिकीटेऽथ ना स्यादष्टमराशिके ॥ ६१ ॥

अश्वी त्वश्ववति त्रि स्याद् धनूराशौ तु पुंस्ययम् ।
दस्रयोश्चाश्विनी तु स्त्री नक्षत्रेऽश्वयुगाह्वये ॥ ६२ ॥

आर्चिस्तु भासि ज्वालायां शस्त्रे च स्त्रीनपुंसकम् ।
आशा स्त्री दीर्घतृष्णायां दिश्यवान्तरदिश्यपि ॥ ६३ ॥

समीपे सज्जनः प्राह भुक्तिव्याप्त्योस्तु पुंस्ययम् ।
आस्या स्यादासनायां स्त्री मुखे मुखबिले च नप् ॥ ६४ ॥

त्रिषु तद्भवतत्साधुताद्धितक्षेप्यवस्तुषु ।
आस्रं क्ली रुधिरे बाष्पे कचे ना न्यस्रयोगिनि ॥ ६५ ॥

आरस्त्वङ्गारके गत्यामागतौ च पुमानथ ।
क्षुद्रशस्त्रविशेषेषु स्त्रियामाराथ पित्तले ॥ ६६ ॥

पुन्नपुंसकलिङ्गोऽयमरसम्बन्धिनि त्रिषु ।
आर्या मृडान्यां स्त्री जातिच्छन्दोभेदे च ना पुनः ॥ ६७ ॥

सौविदल्ले सज्जने तु त्रिरागन्तव्यगम्ययोः ।
आर्ययोगिनि चाथार्द्रं शृङ्गिबेरे नृशण्डयोः ॥ ६८ ॥

आर्द्रा स्त्री रुद्रनक्षत्रे तद्युक्ते कालमात्रके ।
क्लिन्ने तु स्यात् त्रिराद्यं तु त्रिषु पूर्वप्रधानयोः ॥ ६९ ॥

---

१. 'रंशुवा' क. घ. पाठः, 'रशुवा' ङ. पाठः.

अदनीयेऽपि ना तु स्याद् विरिञ्चेऽथामवाक् त्रिषु ।
अपक्के ना तु रोगेऽथो आयस्त्रिष्वययोगिनि ॥ ७० ॥

पुंसि तु स्याद् धनोत्पत्तौ स्वामिभाग इतीतरे ।
लग्नाच्चैकादशे राशौ विदुः सांवत्सरा गतौ ॥ ७१ ॥

आगतावथ पुंस्यासः क्षेपणे च धनुष्यपि ।
कैवर्तीमुस्तकाभिख्यमुस्तके तु नपुंसकम् ॥ ७२ ॥

आज्ञा तु स्त्री महीपादेः शासने लग्नराशितः ।
राशौ च दशमे वेश्याविशेषे च महीपतेः ॥ ७३ ॥

यस्याज्ञागणिकेत्याख्या त्रिषु त्वज्ञस्य योगिनि ।
तत्रापि भेद्ये स्त्र्यर्थे स्याद् रूपमाज्ञीति मन्यताम् ॥ ७४ ॥

आणिः स्त्रीपुंसयोर्युद्धे रथाद्यक्षाग्रकीलके ।
जङ्घामर्मणि निश्रेण्यां निश्रेणिद्वारि चापरः ॥ ७५ ॥

आजिः स्त्रियां क्वचित् पुंसि युद्धे सममहीतले ।
आखुर्मूषिकमात्रे स्यादेकेषां सूकरे द्वयोः ॥ ७६ ॥

अन्येषां मूषिकस्यैव जातिभेदे क्रमाह्वये ।
आलुः श्लेष्मातके पुंसि श्लेष्मण्यन्येऽर्थे नपुंस्त्रियोः ॥ ७७ ॥

चक्रोष्ट्रीसंज्ञके कन्दे कर्कर्यां तु स्त्रियामियम् ।
आशुः पाटलसंज्ञे ना व्रीहिभेदे दिवाकरे ॥ ७८ ॥

अलङ्कारसुवर्णे तु क्ली शृङ्गीकनकाह्वये ।
असत्त्वगामि चेच्छीघ्रे स्यात् सत्त्वे त्रिष्वथ द्वयोः ॥ ७९ ॥

तुरगेऽथायुशब्दो द्वे मनुष्ये शकटे तु ना ।
स्यात् पुरूरवउर्वश्योः पुत्रेऽथायुर्नपुंसकम् ॥ ८० ॥

---

१. 'रिते' ख. पाठः. २. 'दु' क. घ. पाठः. ३. 'ण्णी' ग. पाठः, 'च्छ्री' क. घ, पाठः

सान्तं जीवितकालेऽन्ने धने वत्सरनीरयोः ।
अपि स्याद् विश्वतोदावन्नित्यारण्यकसामनि ॥ ८१ ॥

केचित् तु जीविते प्राहुः क्रतुभेदेऽथ पुन्नपोः ।
इनः सूर्यात्मनोः पुंसि राजन्यन्येऽथ स त्रिषु ॥ ८२ ॥

आढ्ये स्वामिनि चेष्टं तु त्रिषु वाञ्छितमित्रयोः ।
यागक्रियाकर्मभूते पर्याप्ते यजने तु नप् ॥ ८३ ॥

इच्छायां यज्ञदाने च यज्ञे चाथो पुमानिषः ।
ज्ञेय आश्वयुजे मासि क्लीबं त्वयासि सा पुनः ॥ ८४ ॥

इष्वा स्त्री पुत्रसन्तत्यां कुटुम्बे चेति केचन ।
कलत्रे त्वपरे ना तु स्यादाचार्याभिलाषयोः ॥ ८५ ॥

इभ्य आढ्ये त्रिषु स्त्री तु हस्तिवातिङ्गने§ऽथ तत् ।
इद्धं स्यादातपे क्ली त्रिर्दीपिते स्त्री त्विडा गवि ॥ ८६ ॥

बुधपत्न्यां नाडिभेदे भुव्यन्ने दिवि वाचि च ।
धनञ्जयस्य वचने दृष्टं भा देवता प्रसूः ॥ ८७ ॥

इत्येवं तस्य वाक्यस्य चिन्त्योऽर्थो बहुवेदिभिः ।
पुमांस्तु देवताभेदे शाकटायनभाषितः ॥ ८८ ॥

इषुः स्त्रीपुंसयोर्बाणे क्रतुभेदे तु पुंस्ययम् ।
विष्टुत्योस्तूभयोः स्त्रीत्वे ना त्विन्दुः शशियज्ञयोः ॥ ८९

कर्पूरे क्ली तु सलिले ना त्वीडो देवतान्तरे ।
स्तुतौ तु नृस्त्रि स्त्री भूम्यामीशस्तु गिरिशे पुमान् ॥ ९०

ईशाने नृस्त्रियोरीशा भवेत् स्वामिनि तु त्रिषु ।
उष्णः पुंसि हुताशे स्याद् ग्रीष्मे शिग्रुमहीरुहे ॥ ९१ ॥

---

१. 'वा' ग. पाठः. २. 'ष्टुत्योभूस्तयो' ग. पाठः.

§ 'वार्तिं देहस्थवातं सेवनाद् गणयति इति वातिङ्गणम्' इति बृहदभिधानम् । 'स्त्री तु हस्तिवातिङ्गने त्विभ्या' (पु ५३. श्लो. १०३) इत्येव पाठः.

क्षी तु वह्निगुणे त्रिस्तु तद्युक्ते चतुरेऽपि च ।
उग्रः पुंसि महादेवे मर्त्यजात्यन्तरे पुनः ॥ ९२ ॥
शूद्रायां क्षत्रियाज्जाते तेनोढायां द्वयोस्तथा ।
शूद्रायां ब्राह्मणाज्जाते तेनोढायामथ स्त्रियाम् ॥ ९३ ॥
वचायां च खराश्वाख्याजमोजान्तरभेषजे ।
उग्रा क्लीबं तु लवणे घटिकालवणाह्वये ॥ ९४ ॥
कालशेयेऽथ रौद्रे त्रि स्त्री तूस्रा गवि ना घृणौ ।
उखः पुंसि स्फिचि परे कर्णपार्श्वेऽप्यधीयते ॥ ९५ ॥
औखीयानां च शाखाया ऋषिभेदे[1] प्रवक्तरि ।
स्त्री तु स्थाल्यामुखा यज्ञविदामुख्याग्निसंभृतेः ॥ ९६ ॥
साधने चतुरश्रे च स्यान्मृत्पात्रान्तरे तथा ।
यदग्निचयनेऽथोल्बं क्ली स्याद् गर्भाशयेऽथ तत् ॥ ९७ ॥
पुंस्याहामरदत्तोऽस्मिन्नर्थे शुल्बे[2] तु तन्नपि ।
रजते भूमिभेदेऽपि[3] सामभेदेऽथ ना क्रतौ ॥ ९८ ॥
सङ्ख्याज्ञाने विरहिते त्वेष त्रिष्वथ पेलवे ।
उभ्र ऊर्ध्वस्थिते च त्रिः पुमांस्तु स्याद् पयोमुचि ॥ ९९ ॥
उद्रो द्वे जलमार्जार ऋषिभेदे तु नाथ ना ।
उषः प्रस्थचतुर्भागे प्रभातेऽथ स्त्रियामुषा ॥ १०० ॥
अनिरुद्धस्य या पत्नी बाणासुरसुता च या ।
तस्यां गवि निशीथिन्यामुषा त्वन्ते निशोऽव्ययम् ॥ १०१ ॥
उडुर्विप्रे द्वयोर्नपुंस्त्री नक्षत्रेऽथो उरु त्रिपु ।
बृहत्युर्वी (तु?ति) तत्रापि स्त्र्यर्थे वा स्यादथ स्त्रियाम् ॥ १०२ ॥
उर्वी पृथिव्यां नद्यां च स्यादुदक् तु त्रिपूत्तरे ।
दिग्देशकालविषय उदीच्ये चाप्युदङ्मुखे[4] ॥ १०३ ॥

---

१. 'मृ' ख. ग. पाठः. २. 'ल्वे' क. ख. ग. घ. पाठः. ३. 'च' क. ख. घ. पाठः. ४. 'वा' क. ग. पाठः.

उदीची तु स्त्रियां राजराजस्य दिशि वा पुनः ।
एतेषु सर्वेष्वर्थेषु स्यादव्ययमिदं यदा ॥ १०४ ॥
प्रथमापञ्चमीसप्तम्यर्थयुक्तमुशिक् पुनः ।
ना गौतमर्षौ वह्नौ चाप्युशीरे तु स्त्रियां त्रि तु ॥ १०५ ॥
मेधाविनि स्यादुद्भित् तु सामभेदे नपुंसकम् ।
एकाहक्रतुभेदे ना स्यादुद्भिज्जे तु स त्रिषु ॥ १०६ ॥
उक्षा पुंसि बलीवर्दे महति त्रिरुषाः पुनः ।
सन्ध्याप्रभातयोर्नपुंस्त्री स्यादूर्जः कार्त्तिके पुमान् ॥ १०७ ॥
उत्साहे पुंस्त्रियोरूर्ध्वस्तूपर्यर्थे त्रिषूत्थिते ।
ऋषिभेदे तु पुंस्यूषा पुनः स्त्री रुजि नप् पुनः ॥ १०८ ॥
लवणे स्यादूषरजे ना क्षारमृदि नप् पुनः ।
ऊर्मं व्योम्नि पुरे चान्ये पुंसि प्राणिनि तु त्रिषु ॥ १०९ ॥
ऊहा न स्त्री विचारे स्यात् सामग्रन्थान्तरे तु ना ।
ऊर्णा सा स्त्री कदल्यादेस्तन्तौ मेषादिलोमनि ॥ ११० ॥
प्रशस्तरोमावर्ते च भ्रूमध्यस्थेऽथ हिंसिते ।
ऊर्णाक्षि हिंसने तु स्त्री स्यादूकस्तु किलिञ्जके‡ ॥ १११ ॥
कैश्चिदन्यैः पुना राशौ राशिस्थाने परैः पुमान् ।
शाकटायनपूर्वार्यैरुक्तो द्वे तु विहङ्गमे ॥ ११२ ॥
भवेदूका तु जन्तौ स्त्री स्वेदजेऽस्थिविवर्जिते ।
इति कश्चिदथोर्मिः स्त्रीपुंसयोर्जलवीचिषु ॥ ११३ ॥
महातरङ्ग इत्यन्ये क्षुत्पिपासादिकेष्वपि ।
भजय तु पटल्येनामुत्पीडायामपि स्म सः ॥ ११४ ॥
ऋतं नपुंसकं विद्यात् सिलोञ्छे[1] प्राप्तियज्ञयोः ।
गतौ सत्ये तद्वति तु त्रिषु प्राप्ते गतेऽपि च ॥ ११५ ॥

१. 'ञ्छ' ख. पाठः.

‡ कटे ।

ऋक्षो द्वयोरच्छभल्ले गुण्डवृक्षे तु नाथ नेप्[1] ।
नक्षत्रेऽन्ये त्विन्द्रियेऽपि प्राहुर्निर्लोम्नि तु त्रिषु ॥ ११६ ॥

ऋश्यः पुंस्यृषिभेदे स्यान्मृगजात्यन्तरे द्वयोः ।
ऋजुस्त्रिर्नायकेऽर्थे ना हिंस्रे त्वृष्वो महत्यपि ॥ ११७ ॥

त्रिररातौ तु पुंस्येष ऋद्धं तु स्यात् समर्धने[2] ।
क्ली त्रिरावसिते धान्ये समृद्धेऽपि द्वयोस्त्वृभुः ॥ ११८ ॥

देवे विदुषि तु त्रि स्यात् पुमांस्तु मधुसूदने ।
ज्येष्ठे च ब्रह्मपुत्राणां सनकादिकयोगिनाम् ॥ ११९ ॥

गभस्तिधाराधरयोर्ऋजुस्तु त्रिगुणे त्रिषु ।
अव्युत्पन्ने वररुचिः पुनर्विदुषि चाब्रवीत् ॥ १२० ॥

अंशौ तु पुंसि तेनोक्त एतस्तु नरि कर्बुरे ।
गुणमात्रे तद्वति तु त्रिषु स्यादागतेऽप्यथ ॥ १२१ ॥

आगतौ क्लीबमैन्द्री तु महेन्द्रस्य दिशि स्त्रियाम् ।
विशालासंज्ञवल्ल्यां च त्रि तु स्यादिन्द्रयोगिनि ॥ १२२ ॥

पुमांस्तु यज्ञक्रतुषु सर्वेष्वैन्द्रो द्वयोः पुनः ।
ऐन्द्रिरिन्द्रसुते कृष्णकाकेऽप्यैभस्तु पुंस्ययम् ॥ १२३ ॥

हस्तिकर्कोटकाभिख्यवल्ल्यां क्लीबं तु तत्फले ।
इभसम्बन्धिनि त्रि स्यादोषो दाहे नरि त्रि तु ॥ १२४ ॥

क्षिप्रे रक्तफलासंज्ञवल्ल्यां (चो? त्वो)ष्ठी† स्त्रियामथ[3] ।
ओष्ठो दन्तच्छदे पुंसि मार्जारे त्वोतुवाग् द्वयोः ॥ १२५ ॥

क्ली तु सामविशेषे स्यादौर्वो ना बडवानले ।
ऊर्वसम्बन्धिनि त्रि स्यात् कल्यस्तु त्रिषु नीरुजि ॥ १२६ ॥

---

१. 'न' ख. पाठः. २. 'र्थे' क. ग. घ. पाठः. ३. 'मियम्' ग. पाठः.

---

† 'तुण्डिकेर्यां रक्तफला बिम्बोष्ठी पीलुपर्ण्यपि' (पु. ५७. श्लो. १४७) इति वैजयन्ती ।

कल्याणवाचि दक्षे च सज्जे स्त्री तु गते दिने ।
सांवत्सरास्तु लग्नाख्यराशौ चैनमधीयते ॥ १२७ ॥

प्रभातेऽथ सुरायां स्त्री ना कक्षः कच्छवीरुधोः ।
तृणे स्पर्धापदे बाहुमूलेऽरण्ये च दुर्गमे ॥ १२८ ॥

स्त्रियां तु परिधानस्य पश्चादञ्चलपल्लवे ।
केचित् तु बाहुमूलेऽपि कक्षां स्त्रियमधीयते ॥ १२९ ॥

कणोऽतिसूक्ष्मे बाणे च तण्डुलावयवे च ना ।
सक्तुष्वप्याह पुंभूम्नि तदेकावयवेऽन्यथा ॥ १३० ॥

कणा स्त्री जीरके सूक्ष्मजीरकेऽप्यपरे विदुः ।
पिप्पल्यां च द्वयोस्तु स्यान्मर्त्यजात्यन्तरे क्वचित् ॥ १३१ ॥

निषादाद् द्रमिडीजाते कर्णस्तु श्रवणे पुमान् ।
नावः पृष्ठस्थितारित्रे राधातनयभूभुजि ॥ १३२ ॥

क्षेत्रभेदेऽप्यथ त्रि स्याच्छ्रोत्रहीनपशावपि ।
क्षोदिष्ठेऽप्यथ कर्णी स्त्री पशूनां बन्धनार्थके ॥ १३३ ॥

रज्जुभेदे कला तु स्त्री षोडशांशे हिमद्युतेः ।
अंशेऽवयवमात्रे च कलनायां च वैशिके ॥ १३४ ॥

त्रिंशत्काष्ठी*प्रमाणे च काले वृद्धावृणस्य च ।
शिल्पे मनश्शिलायां च देहधात्वन्तरे तनौ ॥ १३५ ॥

गीतौ कुड्यच्छादिःसन्धावित्युक्तार्थास्त्रयोदश ।
यत्तु वाररुचे वाक्ये कलार्थत्वेन दृश्यते ॥ १३६ ॥

घनं तद्दणवृद्धिस्थं केवलं वेति संशयः ।
पुंसि त्वङ्गुष्ठसंस्पर्शे वीणातन्त्रीषु शाखिनः ॥ १३७ ॥

---

१. 'त्व' ख. ग. पाठः.

---

* 'ष्ठा' इति स्यात् ।

तिलकाख्यस्य पुष्पस्थे[1] गन्धे तद्वति तु त्रिषु।
अव्यक्तमधुरे शब्दे मूकेऽप्यथ करो नरे॥ १३८॥

रश्मौ पाणौ महीपस्य भागधेये घनोपले।
अजयस्त्वाह मुद्रायां हिंसाविक्षेपयोरपि॥ १३९॥

श्वेतशालौ गजघ्राणे स्त्री तु वारि[2]दकार्मुके।
कल्कस्तुरुष्कसंज्ञाकनिर्यासे ना न तु स्त्रियाम्॥ १४०॥

दम्भे पापाशये पापे स्याद् विष्ठौषधे[3]पिष्टयोः।
किट्टेऽप्यथ पलोन्मानचतुर्भागे नृशण्डयोः॥ १४१॥

कर्षः कृषिक्रियायां ना कण्वस्त्वृष्यन्तरे पुमान्।
पापे स्त्री बधिरे तु त्रि[4]र्मेधाविनि च ना पुनः॥ १४२॥

क्रमोऽङ्घ्रौ परिपाट्यां च वेदपाठान्तरे विधौ।
क्रान्तौ स्थानकभेदे च द्वे त्वाखाह्वयमूषिके॥ १४३॥

क्षमा क्षान्तिपृथिव्योः स्त्री त्रिषु योग्यसमर्थयोः।
न्याये हिते क्षपा तु स्त्री निशीथिन्यां पुमांस्तु सः॥ १४४॥

गोजाविमहिषाणां स्यादत्या[5]र्द्रच्छगणे तथा।
धान्यस्तम्बे समाम्नाये त्वम्बुनामसु दृश्यते॥ १४५॥

क्षप इत्येवमेतस्य लिङ्गं रूपं च चिन्त्यताम्।
कचो बृहस्पतेः पुत्रे केशे चापि नृलिङ्गकः॥ १४६॥

नृजातिभेदे शनकीक्षत्रियप्रभवे द्वयोः।
कशा स्त्री वाजिताडन्यां द्वे तु रोमशपुच्छके॥ १४७॥

नकुलस्य प्रभेदे स्यान्मर्त्यजात्यन्तरे तथा।
डिण्डिकीवैश्यजे स्त्री तु कञ्जं पद्मे कचे तु ना॥ १४८॥

कच्छो जलाशयप्रान्ते पार्श्वे गुह्याम्बरे तथा।
जात्यन्तरे स्थावराणां नान्दीवृक्षाख्यपादपे॥ १४९॥

---

१ 'स्थे' ख. पाठः. २. 'रिणिका' ख., 'रुणि का' क. घ. ङ. पाठः. ३. 'धि' क. घ. पाठः. ४. 'मे' ख. पाठः. ५. ' ' क. ग. घ. पाठः.

कूर्मपादे च पुंसि स्यादथ स्यात् पुंसि भूमनि ।
नीवृद्भेदेऽथ सिंहोऽमुमनूपे पुंस्यमन्यत ॥ १५० ॥

कच्छं क्लीबेऽनूपदेश इति त्वमरदत्तवाक् ।
क्षरो धाराधरे पुंसि सलिले तु नपुंसकम् ॥ १५१ ॥

ऋतौ प्रावृट्समाख्ये स्त्री क्षरी क्षरितरि त्रिषु ।
क्षतं व्रणे क्ली क्षणने लग्नात् षष्ठे च राशिके ॥ १५२ ॥

इति सांवत्सराः प्राहुस्त्रि तु स्यात् खण्डिते हते ।
क्षत्रं तु स्याद् धने तोये क्षत्त्रिये च नपुंसकम् ॥ १५३ ॥

पुंसि त्वमरदत्तोऽमुं क्षत्त्रिये प्राब्रवीदथ ।
कंसो ना पूर्वभूपालभेदे कृष्णस्य मातुले ॥ १५४ ॥

पानपात्रान्तरे त्वस्त्री लोहे घोषाख्य आढके ।
अजयस्त्वाह हंसेऽपि तत्र लिङ्गं द्वयोरिति ॥ १५५ ॥

कन्दोऽस्त्री सूरणे मूलसस्यमात्रेऽप्यथो कटः ।
पर्यन्तदेशे ग्रामादेः किलिञ्जगजगण्डयोः ॥ १५६ ॥

शवे शवरथे श्रोणिफलके कालकूटके ।
सज्जनस्त्वाह वलयेऽप्येष्वर्थेषु पुमानयम् ॥ १५७ ॥

लवणे त्वब्धिजे क्लीबे वाक्पतिस्तु नृशण्डयोः ।
अविशेषेण पठति श्रोण्यां तु स्यात् कटी स्त्रियाम् ॥ १५८ ॥

चापाग्रेषु त्रिषु पुनर्भ्रंशे कष्टं तु मेघवत् ।
कृच्छ्रे च गहने चैतत् स्यादसत्त्वे नपुंसकम् ॥ १५९ ॥

कश्रा कशायां स्त्री त्रिस्तु कमितर्यथ (वाक् स्विका? कर्कवाक्) ।
श्वेताश्वे द्वे पुमांस्त्वमौ हर्षनन्दी त्वभाषत ॥ १६० ॥

सिते वर्णे तुरङ्गस्य कश्यं त्वश्वस्य मध्यमे ।
म(ध्ये?द्ये) च क्ली कशार्हे तु त्रिः कतस्तु पुमानृषौ ॥ १६१ ॥

क्ली जलेऽथ कपिः पुंसि सहस्रकिरणेऽपि च ।
ऋषिभेदे तथैव स्याद् द्वे तु वानरहास्तिनोः ॥ १६२ ॥

कविस्तु पुंसि वाल्मीकौ *कृतकोटिमुनावपि ।
त्रिषु तु स्यात् काव्यकारे पण्डिते च स्त्रियां त्वसौ ॥ १६३ ॥

अङ्गुलित्रे खलीने च करिस्तु पुरुषे गजे ।
द्वयोः कर्तरि तु त्रि स्यात् कटुस्तु नरि गुग्गुलौ ॥ १६४ ॥

लशुने टङ्कने[1] गन्धभेदे सौरभ्यसंज्ञके ।
ऊषणाख्यरसे चाथ प्राक् शुण्ठेर्भेद्यलिङ्गकम् ॥ १६५ ॥

पूर्वोक्तगन्धरसयोरेकयुक्ते समत्सरे ।
अप्रियाकार्यतीक्ष्णेषु क्ली शुण्ठौ मरिचेऽपि च ॥ १६६ ॥

स्त्रियां तु कटुरोहिण्यां कम्बुस्तु द्वे मतङ्गजे ।
त्रये तु तण्डुलकणे शङ्खे सङ्ख्यान्तरे तथा ॥ १६७ ॥

शम्बूके चाथ कन्तुर्ना स्यात् कन्दर्पकुसूलयोः ।
कंशब्दार्थवति त्वेष वाच्यलिङ्गः प्रकीर्तितः ॥ १६८ ॥

तुप्रत्ययेऽथ कन्दुर्ना स्त्रियामप्यपरे विदुः ।
सूत्रिते स्यात् क्रीडनके स्वेदन्यामपरे पुनः ॥ १६९ ॥

पाकस्थानेऽथ कद्रुर्ना वर्णे पिङ्गलसंज्ञके ।
त्र तु तद्वति भूमौ तु नागमातरि च स्त्रियाम् ॥ १७० ॥

कर्षु[2]स्तु ना करीषाग्नौ स्त्री कुल्यातुषकोष्ठयोः ।
क्षत्ता ना सारथौ द्वाःस्थे दूते मुसलरुद्रयोः ॥ १७१ ॥

द्वयोस्तु क्षत्रियायां चः पारधैनुकसंज्ञकः ।
शूद्राज्जातस्तत्र केचिदन्ये त्वायोगवाह्वये ॥ १७२ ॥

---

'णे' ख. ग. ङ. पाठः. २. 'र्षू' ख. पाठः.

---

*'हलभूतिस्तूपवर्षः कृतकोटिकविश्च सः' (पु. ९५. श्लो. १५४.) इति वैजयन्ती ।

वैश्यायां जनिते शूद्रादन्ये पारशवाह्वये ।
ब्राह्मणादूढशूद्रायां जाते प्रेष्यासुते परे ॥ १७३ ॥
वैजयन्त्यां तु पठितं योऽयं स्यात् पारथैनुकः ।
तस्मिन् दौत्यद्वारपाल्यवृत्ताविल्यथ भेद्यवत् ॥ १७४ ॥
क्वचिन्निर्वृत्ते च मृतेऽप्यविनीतेऽप्यथो पुमान् ।
स्वतन्त्रकारके कर्ता भव्यसंज्ञे च पादपे ॥ १७५ ॥
क्ली तु तस्य फले त्रिस्तु कारकेऽथ ककुत् स्त्रियाम् ।
पुंसि चोक्षणः स्कन्धदेशे प्रोन्नते राजलक्ष्मणि ॥ १७६ ॥
श्रेष्ठेऽप्यथ पुमान् क्रव्यात् प्रेतदाहानले द्वयोः ।
राक्षसे त्रि तु मांसादे कर्मशब्दस्तु पुन्नपोः ॥ १७७ ॥
पुण्ये पापे क्रियाशिल्पयातनासु द्रुमान्तरे ।
भव्यसंज्ञे कारके च कर्त्रीप्सिततमादिके ॥ १७८ ॥
अर्थप्रयोगे यज्ञे च भव्यवृक्षफले तु नैप् ।
काली मृडान्यामेकस्यां शक्तौ नवसु शक्तिषु ॥ १७९ ॥
शम्भोः कृष्णनवारम्भादे वह्निज्वालासु सप्तसु ।
एकस्यां प्रसहासंज्ञबृहत्यां भ्रूकुटावपि ॥ १८० ॥
क्षारकीटेऽपि सप्तानां मातृणामेकमातरि ।
अर्हत्तीर्थकराणां तु याः स्युः शासनदेवताः ॥ १८१ ॥
तासामन्यतमायां च कथयामास सज्जनः ।
पिप्पलीवृश्चिकाल्योश्च नील्यां कृष्णे तु जीरके ॥ १८२ ॥
काला मनश्शिलायां च कृष्णात्रिवृति च स्त्रियाम् ।
क्ली तु कालायसे कालं पुमांस्तु समये यमे ॥ १८३ ॥
मृत्यौ चापि महादेवे कार्ष्ण्ये त्रिषु तु तद्वति ।
काष्ठा स्त्री कालभेदे स्यादष्टादशनिमेषके ॥ १८४ ॥

१. 'नू' ख. पाठः. २. 'युक्ते च' क. घ. पाठः. ३. 'न' ख. पाठः. ४. त' क ग. घ. पाठः.

स्थित्याख्यमर्यादायां च दिशि चाप्युपदिश्यपि ।
दक्षिणोत्तरयोरन्यतरस्मिन् नयने रवेः ॥ १८५ ॥

आदित्ये परमावस्थोत्कर्षयोराजिसंज्ञिनः ।
समभूमिप्रदेशस्याप्यन्ते भूम्नि तु वारिणि ॥ १८६ ॥

क्ली तु दारुणि **कान्ता** तु प्रियङ्गुतरुयोषितोः ।
स्त्री पुमांस्तु धवे नान्दीवृक्षे चम्पकपादपे ॥ १८७ ॥

चम्पकप्रसवे तु क्ली तथा दमनके त्रि तु ।
प्रिये मनोज्ञे **काम**स्तु कन्दर्पे काम्यवाञ्छयोः ॥ १८८ ॥

गुग्गुलौ च निकामे तु क्ली स्यादनुमतेऽव्ययम् ।
**काम्यं** कामयितव्ये च कामसाधौ च मेद्यवत् ॥ १८९ ॥

क्ली तु ताम्रेऽथ **काण्डो**ऽस्त्री दण्डे नाले जले शरे ।
शक्तिसंज्ञेबले वर्गे स्तम्बेऽध्याये च कुत्सिते ॥ १९० ॥

इक्ष्वादेर्ग्रन्थिभेदे[२] द्रुप्रकाण्डेऽवसरेऽपि च ।
काण्डी तु हस्तिपिप्पल्यां स्त्री **कार**स्तु महीपतेः ॥ १९१ ॥

भागधेये क्रियायां ना स्त्री तु बन्धनवेश्मनि ।
कारा प्रसेविकायां च त्रि तु स्यात् करयोगिनि ॥ १९२ ॥

बन्धने नृस्त्रियोः **काश**स्त्विक्षुगन्धाख्यवीरुधि ।
अस्त्री स्त्रीपुंसयोः काशा दीप्तौ काशी तु सा स्त्रियाम् ॥ १९३ ॥

वाराणस्यामथो **कायः** शरव्ये निग्रहे तनौ ।
ना त्रिः कदेवते **क्षारः** पुनः क्षरणभस्मनोः ॥ १९४ ॥

गुडे काचाख्यमृद्भेदे स्वर्जिकाक्षारसंज्ञके ।
लवणेऽपि यवक्षारे तिक्तस्य लवणस्य च ॥ १९५ ॥

रसयोर्मिश्रणाज्जाते रसे तद्वति तु त्रिषु ।
**काव्यं** क्ली कालिदासादिग्रन्थे पुंसि तु भार्गवे ॥ १९६ ॥

---

'ज्ञे' ङ. पाठः. २. 'मध्ये द्रु' ख. ग. पाठः.

**काण**स्त्रिषु स्यादेकाक्षे मूषायां तु स्त्रियामियम् ।
काणा पुंसि तु शब्दे च गमने च निमीलने ॥ १९७ ॥

**क्षाम**स्तृणाग्नौ ना क्षीणे त्रिषु क्षामा स्त्रियां भुवि ।
क्ली त्विध्मप्रोक्षणे **कार्ष्णं** कृष्णसम्बन्धिनि त्रिषु ॥ १९८ ॥

**कार्यं** प्रयोजने क्लीबं कर्तव्ये त्रिरथास्त्रियाम् ।
**कांस्यं** स्यादाढके पानपात्रे घोषाख्यतैजसे ॥ १९९ ॥

**काको** द्वे वायसे तस्य समूहे क्ली पुमान् पुनः ।
लौल्ये काकी तु मृद्भेदे तुवरीसंज्ञके स्त्रियाम् ॥ २०० ॥

**कारिः** क्रियायां स्त्री त्रिस्तु शिल्पिनि स्त्री तु कर्तरि ।
**कारु**रिन्द्रे तु ना विश्वकर्मण्यप्यथ स द्वयोः ॥ २०१ ॥

भ्रात्यादपूर्वपुंयोगवैश्याजे मानवान्तरे ।
**कासूः** स्त्री व्याधिबुद्ध्योः स्याच्छक्तिसंज्ञायुधान्तरे ॥ २०२ ॥

त्रि तु वाग्विकले द्वे तु **कामी** सारसपक्षिणि ।
त्रि तु कामवति स्त्री तु कामिनी ललनान्तरे ॥ २०३ ॥

**क्रिया** स्त्री निष्कृतौ शिक्षाचिकित्सोपायकर्मसु ।
करणारम्भपूजासु चेष्टायां सम्प्रधारणे ॥ २०४ ॥

**क्रियं** तूत्पलमालायां प्रतिष्ठायामितीदृशम् ।
मेषराशौ तु पुल्लिङ्गं क्रियं ज्यौतिषिका विदुः ॥ २०५ ॥

**क्षिप्रं** तु पादाङ्गुष्ठस्य तर्जन्याश्चान्तरे नपुम् ।
असत्त्वेऽपि च शीघ्रार्थे त्रि तु स्यात् सत्त्वगामि चेत् ॥ २०६ ॥

**किञ्जाः** पुंभूम्न्युदीच्ये स्यान्नीवृद्भेदे स तु त्रिषु ।
कुत्सिताद्युद्भवेऽथो ना क्षुद्रजन्त्वन्तरे **क्रिमिः** ॥ २०७ ॥

तस्यापि लक्षणं केचिदाहुर्भूमिचरिष्णुताम् ।
अन्ये त्वन्तर्गतामाहुर्लाक्षायामथ स द्वयोः ॥ २०८ ॥

ऊर्णनाभे[1] करण्यां च जाते वैदेहकात् तथा ।
मनुष्यजातिभेदेऽथ **किरिर्द्वे** सूकरेऽथ ना ॥ २०९ ॥
धातुप्रभेदे किरतौ काले कश्चिदवोचत ।
**किष्कुः** प्रमाणभेदे स्याद् द्वादशाङ्गुलसम्मिते ॥ २१० ॥
वितस्त्याख्ये चतुर्विंशत्यङ्गुले हस्तसंज्ञके ।
शाकटायनहर्षौ तु मानद्रव्यमवोचताम् ॥ २११ ॥
छायायां च कुठारादिशस्त्रमुष्टौ[2] च नृस्त्रियोः ।
**क्षित्वा** ना केशवे वायौ क्षित्वरी तु स्त्रियां निशि ॥ २१२ ॥
कश्चिन्नद्यामिति प्राह **कीलस्तु** नरयोषितोः ।
ज्वालाशङ्कुकफोणिषु बाहौ पुंसि तु शङ्करे ॥ २१३ ॥
**कीरः** शुके द्वयोर्देशे कश्मीरेषु नृभूमनि ।
**क्षीरं** क्ली सलिले दुग्धेऽन्येऽर्थेचादिष्ववधीयते ॥ २१४ ॥
**क्लीबं** नपुंसकार्थे क्ली पुमांसं त्वपरे विदुः ।
त्रिषु विक्रमहीने स्याद् बलहीन इतीतरे ॥ २१५ ॥
**कीर्णः** पुंसि चुरीसंज्ञे जलस्थानान्तरे त्रि तु ।
विक्षिप्ते स्त्री त्वभिख्यायां **कीर्त्तिः** कीर्तयतौ तु ना ॥ २१६ ॥
**कुम्भः** पुंसि घटे मूर्धपिण्डे[3] सामोद्भवस्य च ।
वेश्यापतौ सोमदत्ते सौरिराशौ महत्तरे ॥ २१७ ॥
कामिलाख्यव्याधिभेदे द्रोणाख्यपरिमाणके ।
तस्य द्वये विंशतौ च खारीणां पञ्चविंशतौ ॥ २१८ ॥
स्त्रियां तु कुम्भी खार्यां स्यात् स्थालीभेदे च सज्जनः ।
दधिमन्थनगर्गर्यां ब्रूते स्माथ द्रुमान्तरे ॥ २१९ ॥
कट्फलाख्ये वारिपर्णीसंज्ञतोयतृणान्तरे ।
त्रिवृत्संज्ञलताजातौ पुनः कुम्भेति दृश्यते ॥ २२० ॥

---

१. 'भौ' ख. पाठः. २. 'स्त्रे' क. ग. घ. पाठः. ३. 'र्ध्नि' ङ. पाठः.

कटूफलादेस्तु मूले च प्रसवे च नपुंसकम् ।
यथाप्रयोगं बोद्धव्यं **कुटस्तु** कलशे पुमान् ॥ २२१ ॥

गृहे स्त्रीपुंसयोरेके कुटी कुट इति द्वयम् ।
अन्ये त्वाहुः क्षुद्रगृहे पल्लीसंज्ञे कुटी स्त्रियाम् ॥ २२२ ॥

द्वयोस्तु क्षत्रियाज्जाते कुक्कुटीसंज्ञयोषिति ।
मनुष्यजातिभेदे स्यादश्मकुट्टनवृत्तिके ॥ २२३ ॥

**कुडस्तु** ना वैश्रवणे क्ली घटे लाङ्गलेऽपि च ।
मनुष्यजातिभेदे तु पलिनीसंज्ञयोषिति ॥ २२४ ॥

शूद्राज्जाते शिशौ च स्यात् कुडी कुड इति द्वयोः ।
**कुली** तु बदरीकण्टकार्योर्ज्येष्ठस्वसर्यपि ॥ २२५ ॥

भार्यायां स्त्री नपि त्वे(न?त)दृषीणां जलतर्पणे ।
कुलं वंशे सजातीयगणे च स्यान्निकेतने ॥ २२६ ॥

तथा जनपदे द्वे तु मार्जारेऽथ **कुथा** त्रयी ।
मतङ्गजपरिस्तोमे ना तु दर्भे **कुशः** पुनः ॥ २२७ ॥

अस्त्री दर्भे रामसुते ना क्ली ह्रीबेरवारिणोः ।
कुशा विष्टुतिकाष्ठे स्त्री वल्गारज्जौ च वाजिनः ॥ २२८ ॥

अयोविकारे च कुशी केचित् त्वन्ये प्रचक्षते ।
लाङ्गलस्य मुखे फालसंज्ञे क्ली तूत्पले **कुवम्** ॥ २२९ ॥

द्वयोः पशौ **कुजस्तु** स्यात् पुमानङ्गारके तरौ ।
भूमिजे तु त्रि **कुञ्जस्तु** न स्त्री गह्वरदन्तयोः ॥ २३० ॥

हनौ लतादिपिहितोदरेऽथो पुंस्यृषौ क्वचित् ।
**कुब्जस्तु** गडुले त्रि स्यान्निखर्वे चापि सज्जनः ॥ २३१ ॥

गडौ त्वेव नरि प्राहामरदत्तोऽपि सज्जनः ।
**कुम्बा** सुगहनायां स्त्री वृतौ क्ली विदलेऽथ नप् ॥ २३२ ॥

**कुब्रं**[1] गृहे कर्मणि च फल्गुसङ्कटयोस्त्रिषु ।
द्वे गजेऽथास्त्रियां **कुष्ठं** गन्धद्रव्यौषधान्तरे ॥ २३३ ॥

---

१. 'ब्जं' क. घ. ङ. पाठः.

परिभाव्याह्वये व्याधिभेदे त्रि तु भुवि स्थिते ।
कुष्टः सामस्वराणां स्यात् सप्तानामादिमे पुमान् ॥ २३४ ॥
रुदिते क्ली त्रि तु क्रुष्टिक्रियायाः कर्मतां गते ।
कुण्डं नपुंसकं स्थाल्यां काञ्जिके वह्निगर्तके ॥ २३५ ॥
जलाशयविशेषे च देवतादेरथो पुनः ।
सज्जनः प्राह कुम्भेऽपि कुण्डी तु स्त्री कमण्डलौ ॥ २३६ ॥
कुण्डा तु जाते जारात् तु पतिवत्नीसुते द्वयोः ।
अविवाह्यासु जाते च कुल्या तु सरिति स्त्रियाम् ॥ २३७ ॥
नीरप्रणालिकायां च कृत्रिमाल्पसरित्यपि ।
कुलस्त्रियां कण्टकार्यामस्थ्नि तु क्ली पुमांस्तु सः ॥ २३८ ॥
रसभेदे कटोश्चापि कषायस्य च मिश्रणात् ।
जाते तद्वति तु त्रि स्यात् कुलीनेऽपि[1] नृभूम्नि तु ॥ २३९ ॥
नीवृद्भेदे दाक्षिणात्ये मध्यदेशस्थितेऽपि च ।
उदग्देशस्थिते चाथ कुत्सा स्त्री निन्दनेऽथ ना ॥ २४० ॥
अरत्न्याख्यप्रमाणे स्याद् वज्रेऽप्यृष्यन्तरेऽप्यथ ।
तदपत्येषु बहुषु गोत्राख्येषु द्वयोरथ ॥ २४१ ॥
क्षुद्रो दरिद्रे कृपणे नृशंसेऽल्पनिकृष्टयोः ।
त्रि क्षुद्रा स्त्री कण्टकारीवेश्याव्यङ्गानटीषु च ॥ २४२ ॥
सरघायां च ना त्वेष उत्सवेऽथ क्षुणः पुमान् ।
क्षोभे क्रोधे रुजि त्रिस्तु स्यादुन्मत्तेऽथ कुन्दवाक् ॥ २४३ ॥
शस्त्रमार्जकयन्त्रे ना अमाख्ये पादपान्तरे ।
शुक्लपुष्पाह्वये तस्य पुनर्नप् फलपुष्पयोः ॥ २४४ ॥
कुन्तिर्ना नृपभेदे तन्नीवृद्भेदे तु भूम्नि च ।
राज्ञस्तस्य स्त्र्यपत्ये स्त्री कुन्ती कुन्तिस्तु कैश्चन ॥ २४५ ॥

[1] 'तु नृ' ङ. पाठः.

कुतूसंज्ञे स्नेहपात्रे पेठेऽन्येषां न तन्मतम् ।
एलायां च कुणिस्तु स्यान्नान्दीवृक्षाख्यपादपे ॥ २४६ ॥
हस्ते च विकले पुंसि त्रि तु तद्वत्यथो कुटिः ।
नृस्त्री गृहेऽतिकुटिले कुट्टिः कुट्टयतौ पुमान् ॥ २४७ ॥
अयसि स्त्री कुरुस्तु स्याद् ऋत्विग्राजर्षिभेदयोः ।
ना नीवृदन्तरे त्वेष पुंभूम्न्यप्युत्तराह्वये ॥ २४८ ॥
वर्षे कुरोस्तु राज्ञः स्यात् स्त्र्यपत्ये स्त्री कुरूरथ ।
कुन्दुर्द्वयोर्मूषिके स्यात् पालक्यांसंज्ञके तु ना ॥ २४९ ॥
शाकभेदे कुमुत् तु त्रिर्गर्ह्यहर्षयुते स तु ।
गर्ह्ये हर्षे स्त्रियां क्ली तु कुमुदे स्त्री तु कुम्भिनी ॥ २५० ॥
भूमौ द्वे तु गजे नक्रे स तु कुम्भवति त्रिषु ।
कुण्डी त्वश्वे द्वयोः कुण्डवति त्रिः कुम्भवाक् पुनः ॥ २५१ ॥
द्वे सृगाले बके त्वन्यः शिवायां कुम्भरी स्त्रियाम् ।
कूटोऽस्त्री पुञ्जमायाघेष्वद्रिशृङ्गे शरान्तरे ॥ २५२ ॥
अयश्शलाकासंज्ञाके सीराङ्गे फालसंज्ञके ।
अयोघनेऽनृते दम्भे व्योम्नि निश्चलयन्त्रयोः ॥ २५३ ॥
एकं निश्चलयन्त्रेति केचिदर्थममन्वत ।
भग्नशृङ्गपशौ तु त्रिः कूर्चोऽस्त्री श्मश्रुपीठयोः ॥ २५४ ॥
भ्रूमध्ये कत्थने दर्भे तन्तुवायपरिच्छदे ।
तथा यतिपवित्रे च पादाङ्गुष्ठान्तरेऽपि च ॥ २५५ ॥
स्त्री तु चित्रकराणां स्यात् कूर्ची लेखनसाधने ।
कूचो द्वे हस्तिनि स्त्री तु कूची कैश्चन वर्णिता ॥ २५६ ॥
उदश्वितो विकारे च प्रमदायां च ना पुनः ।
कूपो भूषितकन्यायां दार्तुं गर्तोदपानयोः ॥ २५७ ॥

१. 'इक्या' क. ख. पाठः.

गुणवृक्षेऽल्पकूपे तु कूपी स्त्री कूप्यवाक् पुनः ।
क्ली पांसुलवणाभिख्यलवणे भेद्यवत् पुनः ॥ २५८ ॥

कूपसाधौ त्रि तु क्रूरो नृशंसे कठिनोष्णयोः ।
क्रुद्धे दरिद्रे घोरे च गुणमात्रे तु पुंस्ययम् ॥ २५९ ॥

उष्णे च कठिने च स्यात् पूगवृक्षे स्त्रियां तु सा ।
बदरीकण्टकार्योः क्ली त्वस्थि कूर्मस्तु कच्छपे ॥ २६० ॥

द्वयोर्गजस्य त्वङ्घ्रिस्थप्रदेशे ना नखात् परे ।
कृष्णं नपुंसकं सीसे मरिचे दुरितेऽयासि ॥ २६१ ॥

करमर्दफले चाथ पुमान् विष्णौ हुताशने ।
ध्वान्तपक्षे व्रीहिभेदे व्यासे मध्यमपाण्डवे ॥ २६२ ॥

बलाहके कलियुगे करमर्दाख्यपादपे ।
कालवर्णेऽप्यथो नैल्ययुक्ते चकितचेतसि ॥ २६३ ॥

वाच्यलिङ्गो द्वयोस्तु स्यात् सर्पे शूद्रे मृगान्तरे ।
काककोकिलयोराखुजातिभेदेऽप्यथ स्त्रियाम् ॥ २६४ ॥

द्रौपद्यामथ पिप्पल्यां राजिकासंज्ञसर्षपे ।
जलूकाजातिभेदेषु द्वादशस्वपि षट् स्मृताः ॥ २६५ ॥

सविषास्तेषु चैकस्मिन् द्राक्षातिविषयोरपि ।
हिरण्याद्यास्तु याः प्रोक्ताः सप्त जिह्वाः शिवागमे ॥ २६६ ॥

अग्नेस्तास्वपि चैकस्यां या दक्षिणदिशि स्थिता ।
कृतं तु निर्मिते त्रि स्याद् भक्ताय स्थितकिङ्करे ॥ २६७ ॥

क्लीबं त्वादियुगेऽन्नादिपकहव्येऽक्षदेविनाम् ।
अक्षपातप्रभेदे च स्तोमच्छन्दःप्रभेदयोः ॥ २६८ ॥

---

१. 'नापिप' क. ख. घ. पाठः.

---

* 'यवादि त्वकृतं हव्यं तण्डुलास्तु कृताकृतम् । अन्नादि कृतम्' (पु. ९१. श्लो. ९८.) इति वैजयन्ती ।

एतेषु युगसाधर्म्यादर्थेषु त्रिषु वर्तते ।
इत्येक आहुः पर्याप्ते क्रियायां कृत्यवाक् पुनः ॥ २६९ ॥

त्रिः क्रुद्धलुब्धभीतावमानितेष्वपरे पुनः ।
विद्विष्टेऽन्ये तु संरब्धे कर्तव्यप्रश्नितव्ययोः ॥ २७० ॥

कर्तनीये कृतिकृतकृत्यसाधावमुं पुनः ।
अजयो विद्विषि प्राह नब्लिङ्गं तु प्रयोजने ॥ २७१ ॥

स्त्री तु कृत्या क्रियायां स्याद् वैजयन्त्यां तु दैवते ।
अभिचारोत्थिते स्त्री च नप् चेत्यथ कृशध्वनिः ॥ २७२ ॥

तनुनि त्रिः पुमान् केतुग्रहेषु त्रि तु कृष्टवाक् ।
सामगीतिप्रकाराणां भेदेनैकेन संयुते ॥ २७३ ॥

प्राप्ते च कृष्टिक्रियया कर्षणे तु नपुंसकम् ।
कृच्छ्रं कष्टे त्वधर्मे क्ली तद्वति त्रिषु न स्त्रियाम् ॥ २७४ ॥

तपोमात्रे तथा प्राजापत्यसान्तपनादिषु ।
कृत्स्नं जले क्ली सर्वस्मिंस्त्रिः कृकस्तु मृगान्तरे ॥ २७५ ॥

द्वयोर्नाड्यौ कृषिस्तु स्त्री कृषिभूमौ च कर्षणे ।
धात्वोः कृषतिकर्षत्योः पुमान् कृष्टिस्तु कर्षणे ॥ २७६ ॥

मनुष्ये च स्त्रियां ना तु विपश्चिति कृतिः पुनः ।
पुमान् कृणत्तिकृन्ततयोः स्त्री क्रियायां कृतेऽपि च ॥ २७७ ॥

चतुरक्षरकेच्छन्दोभेदेऽशीत्यक्षरेऽपि च ।
कृविस्तु रूपे ना तन्तुवायद्रव्ये च कैश्चन ॥ २७८ ॥

पेठेऽन्यैस्तन्तुवाये द्वे स्त्री तु नापितभाण्डके ।
कर्त्रिकासंज्ञकेऽथ स्यात् क्षेमशब्दो नृशण्डयोः ॥ २७९ ॥

मङ्गले प्राप्तरक्षायां मोक्षे त्रिषु तु निर्भये ।
ना चण्डासंज्ञभैषज्ये केशी* तु स्त्रीत्यभाषत ॥ २८० ॥

१. 'ती' ङ. पाठः. २. 'षु' ग. पाठः. ३. 'त' क. ङ. पाठः, 'तं षु' ङ.
४. 'पि' क ख. पाठः. ५. 'कू' क. ङ. पाठः. ६. 'त्रि' ख. पाठः. ७. 'शे' ङ.

* 'चूडा केशी केशपाशी' (पु. १८१. श्लो. १०१.) इति वैजयन्ती ।

चूडायां यादवाचार्यो ना तु केशः शिरोरुहे।
रश्मौ भगे च क्लीबं तु ह्रीबेरे क्ष्वेडवाक् पुनः॥ २८१॥

लतायां[1] स्यात् सुविख्याता राजकोशातकीति या।
विषे ध्वनौ च ना यौधसिंहनादे तु सा स्त्रियाम्॥ २८२॥

क्ष्वेडा वंशशलाकायामपि क्षेत्रं पुनर्नपि।
लवणे स्यादूषरजे क्षेत्रसाधौ तु तत् त्रिषु॥ २८३॥

केशी केशवति त्रिः स्याद् दैत्यभेदे तु नाथ सा।
केशिनी स्त्री चोरपुष्पीसंज्ञस्तम्बेऽथ कोशवाक्॥ २८४॥

अस्त्री स्यात् कुड्मले दिव्ये विशेषे गेहदेहयोः।
धनौघे वेष्टकद्रव्ये पुस्तकासिपिधानयोः॥ २८५॥

शास्त्रे प्रजनने पेश्यां वृषणेऽपि च केचन।
कृमिभेदस्य नीडे च कौशेयप्रकृतौ तथा॥ २८६॥

कृताकृते हेमरूप्ये सुषिरे सज्जनस्त्वमुम्।
रन्ध्रे[2] चारङ्ग[3](?)इत्याह स्त्री तु कोशी विवक्षिते॥ २८७॥

तनुत्वे न पुमांस्त्वेष मेघे कोलं पुनर्नपि।
व्योषेऽर्धकर्षे तक्कोले शुण्ठ्यां च बदरीफले॥ २८८॥

स्त्रियां तु कोला पिप्पल्यां (शा?श)स्त्रे चव्याह्वयभेषजे।
ना तु भेलकसंज्ञे स्यात् प्लवे सौरौ द्वयोः पुनः॥ २८९॥

वराहे मूषिके त्रिस्तु खञ्जे कोष्ठुस्तु न स्त्रियाम्।
कुसूलेऽन्तर्गृहे चान्तःकुक्षौ स्वीयेऽप्यधीयते॥ २९०॥

कोको द्वे चक्रवाके च स्यादीहामृगसंज्ञके।
मृगान्तरे च ना त्वेष आदाने ना तु कोणवाक्॥ २९१॥

शनैश्चरेऽश्रौ लगुडे शब्दे कोणा तु नृस्त्रियोः।
वाद्यवादनदण्डे द्वे महिषे क्षोमवाक् पुनः॥ २९२॥

---

१. 'म्र' ख. ङ. पाठः. २. 'न्ध्र' क. घ. पाठः. ३. 'पा' ङ. पाठः.

*अट्टे नृशण्डयोः शण्डे त्वन्ये वस्त्रान्तरेऽब्रुवन् ।
क्षोभ्यं वज्राख्यलोहे क्ली क्षोभणीये तु भेद्यवत् ॥ २९३ ॥
क्रोडं क्ली कर्षमाने स्यादुत्सङ्गे द्वे तु सूकरे ।
क्रोडा न ना स्यादुरसि स्यात् तु पुंसि शनैश्चरे ॥ २९४ ॥
योजनस्य तु तुर्यांशे क्रोशो ना क्रोशनेऽथ नप् ।
सामान्तरेषु क्रोष्टा तु द्वे सृगालेऽथ सा स्त्रियाम् ॥ २९५ ॥
क्रोष्टी शुक्लविदार्यां स्यात् क्रौञ्चस्तु कुङ्क्गे द्वयोः ।
द्वीपभेदे तृतीयेऽस्य जम्बुद्वीपस्य पुंस्ययम् ॥ २९६ ॥
गिरिभेदे च शण्डस्तु सामभेदेषु केषुचित् ।
सम्बन्धिमात्रे तु कुञ्चो लिङ्गमस्य विशेष्यवत् ॥ २९७ ॥
क्षौद्रं तु सारघे क्लीबं क्षुद्रसम्बन्धिनि त्रिषु ।
कौशं कुशस्थलाभिख्यनगरे नप्यथ त्रिषु ॥ २९८ ॥
स्यात् कुशस्य विकारादौ कौम्भं त्वाज्ये दशाब्दिके ।
क्ली त्रिस्तु कुम्भसम्बन्धे कौन्ती तु स्त्र्यौषधान्तरे ॥ २९९ ॥
हरेणुसंज्ञे कुन्तस्य पुनः सम्बन्धिनि त्रिषु ।
खगः पुंसि रवौ वायौ शरसङ्ग्रामयोरथ ॥ ३०० ॥
चातके पक्षिमात्रे च द्वे त्रिर्व्योमादिगामिनि ।
खड्गो ना सायके द्वे तु गण्डकाख्यमृगान्तरे ॥ ३०१ ॥
यादोभेदे च मकरसंज्ञेऽथो खण्डमास्त्रियाम् ।
अर्धे गुडविकारे च कश्चित् स्वादुद्रवेऽभ्यधात् ॥ ३०२ ॥
अब्धिजे लवणे क्लीबं भेद्यलिङ्गं तु खण्डिते ।
खषो व्रात्याच्छूद्रपूर्वक्षत्रियाजे नरान्तरे ॥ ३०३ ॥
†डोम्बीचण्डालजे च द्वे प्राणिभेदेऽथ खप्पवाक् ।
बलात्कारे च कूपे च ना दुर्मेधसि तु त्रिषु ॥ ३०४ ॥

१. 'न्ध. ङ. पाठः.

† 'चण्डालात् पुल्कसी डोम्बम्' (पु. ७६. श्लो. ४९.) इति वैजयन्ती ।

**खरः** शराख्यस्तम्बे ना ककुभाह्वयपादपे ।
रक्षोभेदे दशास्यस्य प्रवीरे दण्डनायके ॥ ३०५ ॥

हविर्धानाख्यदेशस्य पुरस्ताद् दक्षिणस्य या ।
वितर्दिर्यज्ञदेशस्था तस्यामुष्णगुणे तथा ॥ ३०६ ॥

कठिनत्वे च कार्कश्ये रसभेदे च मिश्रणात् ।
जाते रसानां तिक्ताम्लकषायलवणात्मनाम् ॥ ३०७ ॥

त्रिस्त्वे[1]षामुष्णतादीनां गुणानां द्रव्य आश्रये ।
एकैकस्य रसान्तानां चतुर्णामपि मन्वते ॥ ३०८ ॥

शुष्कपूगफले तु क्ली लताभेदे तु सा स्त्रियाम् ।
खरा स्याद् देवताडाख्ये रासभे तु द्वयोरथ ॥ ३०९ ॥

**खलं** भूस्थानयोस्तक्रविशेषे क्वथिते च नप् ।
निष्पीडितरसे कल्के पिण्याकादावथ त्रिषु ॥ ३१० ॥

नीचे क्रूरे दुर्जने च पुंश्चल्यां तु स्त्रियां खला ।
फलग्रहणदेशे तु क्षेत्र[2]स्य क्ली नरि त्वमुम् ॥ ३११ ॥

अस्मिन्नर्थे वैजयन्त्यामाह पुंसि तु संयुगे ।
**खल्या** तु खलवृन्दे स्त्री खलाय तु हिते त्रिषु ॥ ३१२ ॥

**खजस्तु** पुंसि मन्थाने त्रिस्तु व्योमादिखार्थजे ।
**खञ्जो** ना लशुने द्वे तु मर्त्यजात्यन्तरे तथा ॥ ३१३ ॥

विमादन्तावसायिन्यां जाते खोडे तु स त्रिषु ।
**खनिः** खनतिधातौ ना स्त्री तु स्यादाकरे निधौ ॥ ३१४ ॥

गर्ते तु कश्चिदाहाथो **खलिः** स्त्री पिष्टतण्डुले ।
घनद्रवे द्रव्यभेदे जलपक्के परे पुनः ॥ ३१५ ॥

पिण्याके **खरुशब्दस्तु** गीतभेदे स्मरे हरे ।
दर्पे च ना द्वे पुरुषे कश्चिद् हसे तु स त्रिषु ॥ ३१६ ॥

---

१. 'स्ते' क. ङ. पाठः. २. 'त्रे क्लीबे न' क. ख. पाठः.

खङ्गी खङ्गवति त्रि स्याद् गण्डकाख्यमृगे द्वयोः ।
खण्डी खण्डवति त्रिः स्याद् वनमुद्गे तु पुंस्ययम् ॥ ३१७ ॥

खातं क्ली पुष्करिण्यां स्यात् खनने चाथ तत् त्रिषु ।
खननक्रियया प्राप्ते ख्यातिः कीर्तिधियोः स्त्रियाम् ॥ ३१८ ॥

ना तु ख्यारूपयोर्धात्वोः खिद्रो ना शशलाञ्छने ।
क्ली तु विघ्ने घरे त्वेनमुपतापे प्रचक्षते ॥ ३१९ ॥

खिलं त्वप्रहते स्थाने त्रिषु स्यात् तु नपुंसकम् ।
विध्यर्थवादमन्त्रेषु खेटं त्वस्त्री पुरेऽल्पके ॥ ३२० ॥

सज्जनस्त्वाह नद्यद्रिमध्यस्थे नगरे तथा ।
ना तु ग्रामविशेषे स्याद् ग्रामधानाह्वये कफे ३२१ ॥

अजयस्तु मृगव्ये च भेद्यलिङ्गं तु कुत्सिते
खेयं तु परिखायां क्ली खनितव्ये ऽयथो नरि ॥ ३२२ ॥

खेलो वेणौ स्त्रियां खेला लीलायामथ खोडवाक् ।
ना कुलाये[1] त्रिपुटके त्रि तु खञ्जेऽथ गव्यवाक् ॥ ३२३ ॥

रागद्रव्यान्तरे मौर्व्यां क्ली स्त्री तु निवहे गवाम् ।
गव्या गव्यूतिसंज्ञे चाप्यध्वमानेऽथ गोहिते ॥ ३२४ ॥

सर्वगोसम्भवे च त्रिर्ग्रहस्तु स्यान्नवस्वपि ।
सूर्यादिषु विशेषाच्च राहौ निर्बन्धने तथा ॥ ३२५ ॥

आदाने चोपरागे च सोमपात्रान्तरेऽपि च ।
उलूखलनिभे वन्द्यां पिशाचादौ तु स द्वयोः ॥ ३२६ ॥

गण्डः कपोले ना गर्वे स्याद् विस्फोटकवर्मणोः ।
बालाया भूषणेऽश्वस्य ग्रीवाया भूषणेऽपि च ॥ ३२७ ॥

ज्योतिःशास्त्रेषु ये योगाः सप्तविंशतिरीरिताः ।
विष्कम्भः प्रीतिरित्याद्यास्तेषामन्यतमेऽप्यसौ ॥ ३२८ ॥

---

१. 'ल' क. ग. ङ. पाठः. २. 'क' क. ग. ङ. पाठः.

चतुष्टये कपर्दीनां द्वे तु खङ्गाह्वये मृगे।
अजयस्य त्विदं ग्रन्थे दृश्यते साध्वसाधु वा॥ ३२९॥

गण्डको रुजि विद्यायां खङ्गे पदचतुष्टये।
**गङ्गा** तु स्त्री सुरागेह आकरेऽन्यस्त्ववोचत॥ ३३०॥

कोशेऽपि स्यात् तु पुंस्येष भाण्डागारेऽथ **गर्जवाक्**।
द्वे गजे गर्जने त्वक्ली गर्जा ना तु **गदो** रुजि॥ ३३१॥

कृष्णस्याप्यनुजे स्त्री तु गदा प्रहरणान्तरे।
**गद्यं** त्वपादबन्धेषु ग्रन्थेषु क्ली त्रिषु त्वदः॥ ३३२॥

गदितव्ये **गया** तु स्त्री पुण्यक्षेत्रान्तरेऽथ ना।
धने गृहेऽप्यपत्ये तु द्वे **गरस्तु** नृलिङ्गकः॥ ३३३॥

ऋषिभेदे निगरणे विषे च कृतकेऽथ नेप्[1]।
जले गरा तु स्त्री देवताडसंज्ञलतान्तरे॥ ३३४॥

**गर्दा** स्त्री द्रवधारायां धमनीषु च वाचि ना।
**गर्तं** तु क्ली गर्तौ ना तु प्रकारे त्रि तु ढौकिते॥ ३३५॥

ग्रामादौ ढौकितवति तथातीतेऽपि सज्जनः।
गीतिप्रकृतिशब्देषु ये तालव्याः स्थिता अचः॥ ३३६॥

तेषामायीति शब्दोऽयं विकारो यत्र गीयते[2]।
गीतिकाले स शब्दोऽयं छन्दोगैरुच्यते गतः॥ ३३७॥

**गडुर्ना** पृष्ठगं[3]ग्रन्थौ ब्रूतेऽमुं शाकटायनः।
घाटामस्तकयोर्मध्ये मांसपिण्ड इति स्फुटम्॥ ३३८॥

वाक्पतिस्त्वमुमध्यैष्ट वेश्योरःस्थकिणे अमी।
कुब्जे तु त्रिरथो **गन्त्री** स्त्रीलिङ्गा शकटान्तरे॥ ३३९॥

गन्ता तु यातरि त्रि स्याद् **गलन्ती** तु स्त्रियामियम्।
कर्कर्यां च्यवमाने च भुञ्जाने च गलत् त्रिषु॥ ३४०॥

---

१, 'न' ख. ग. पाठः. २. 'दी' क. ख. ग. पाठः. ३. 'क' क. ङ. च. पाठः,

गरुत् तु गरुडे सूर्ये तेजस्यपि पुमानथ ।
द्वयोः स्यान्मक्षिकाभेदे पक्षिमात्रेऽप्यथ स्त्रियाम् ॥ ३४१ ॥

तृणधान्यविशेषेऽथ काञ्चने स्यान्नृशण्डयोः ।
ग्राहोऽवहारसंज्ञे द्वे यादोभेदे पुमांस्तु सः ॥ ३४२ ॥

निर्बन्ध इति केऽप्याहुराचार्यस्य प्रयोगतः ।
मुनित्रयमते त्वस्य साधुत्वं नोपलभ्यते ॥ ३४३ ॥

अत्रार्थे ग्राम्यवाक् तु त्रिर्ग्रामीणे स्त्री लतान्तरे ।
घोषसंज्ञे स्वल्पफले ग्राम्याथो गालवाङ् नरि ॥ ३४४ ॥

गलने मदनाभिख्यपादपे तत्फले तु नप् ।
बडिशेऽप्यथ गानं क्ली गीतौ शब्देऽप्यथ स्त्रियाम् ॥ ३४५

प्रौष्ठपद्यां पौर्णमास्यां गानी गातुस्तु पुंस्ययम् ।
अन्ने स्त्री तु पृथिव्यां स्याद् देवजात्यन्तरे पुनः ॥ ३४६ ॥

गन्धर्वाख्ये द्वयोर्ग्राहिशब्दस्तु त्रिर्ग्रहीतरि ।
कपित्थे तु पुमान् ना तु गिरिः स्यान्नगमेघयोः ॥ ३४७ ॥

प्लक्षे गिरीयकक्रीडागुडके कन्दुके परे ।
गवां च व्याधिभेदे स्याद् गृणातौ गिरतावपि ॥ ३४८ ॥

गीर्णौ तु स्त्र्यथ गीतं क्ली गाने गानस्य कर्मणि ।
त्रि स्त्री तु गीता योगस्य पट्टेऽन्यस्त्वाह कश्चन ॥ ३४९ ॥

योगग्रन्थान्तरे गुञ्जा त्वक्ली स्याद् गुञ्जने स्त्रियाम् ।
कृष्णलायां वाद्यभेदेऽप्यथ गुल्मो नृशण्डयोः ॥ ३५० ॥

हृदयग्रन्थिसंज्ञे स्याद् व्याधिभेदेऽपि वीरुधि ।
बलानां सज्जने सैन्यभेदे सभ्ये[2]ऽपि केचन ॥ ३५१ ॥

घट्टे च शुल्कसंज्ञेऽन्ये[1] त्वायस्थाने प्रचक्षते ।
गुच्छो ना स्तबके धान्यस्तम्बे वीरुत्सु सप्तसु ॥ ३५२ ॥

---

१. 'रविदग्धे ल' ग. पाठः. २. 'स्त्यं' क. ग. घ. ङ. पाठः.

एकस्यां हारभेदे च द्वात्रिंशद्यष्टिकेऽथ सा ।
गुच्छा स्त्री माषधान्ये च गवीधौ[1] च गुच्छः पुनः ॥ ३९३ ॥
पिण्डे चेक्षुविकारे च वकुलाख्यमहीरुहे ।
गोले चेत्यपरे[2] स्त्री तु स्नुहीगुलिकयोर्गुडा ॥ ३९४ ॥
गुहा स्त्री पृश्निपर्णीति प्रसिद्धायां च वीरुधि ।
गह्वरे पर्वतस्यापि स्कन्दे तु स पुमान् गुहः ॥ ३९५ ॥
शृङ्गिबेरपुरस्थाननिषादाधिपतावथ ।
गुह्यं शिश्ने भगे क्ली त्रि गोपनीये रहस्यपि ॥ ३९६ ॥
गुन्द्रा फलिन्यां स्त्री भद्रमुस्तके क्षुद्रधान्यके ।
*गवीधुसंज्ञे ना त्वेष स्तम्बभेदे शराह्वये ॥ ३९७ ॥
गुरुर्बृहस्पतौ बुद्धमुनौ पित्रादिके तथा ।
पुरोहिते च गोधूमेऽप्युपनीत्यादिकारिणि ॥ ३९८ ॥
स्त्री तु मातृप्रभृतिषु गुर्वी दभ्रि तु तन्नपि ।
लग्नान्नवमराशौ च प्राहुः साम्वत्सरा इदम् ॥ ३९९ ॥
नीलिकासंज्ञलोहे च त्रिषु तु स्याच्चतुर्ष्वपि ।
दुर्जरे बृहति ख्याते लघुनः प्रतियोगिनि ॥ ३६० ॥
एष्वर्थेषु यदा स्त्र्यर्थस्तदा गुर्वीति वा गुरुः ।
गृहाः पुंभूम्नि निलये भार्यायां चैतयोः पुनः ॥ ३६१ ॥
गृहं क्लीबेऽपि नप्त्वेव मेषप्रभृतिराशिषु ।
विशेषाल्लग्नतस्तुर्ये राशौ साम्वत्सरा विदुः ॥ ३६२ ॥
औपासनाग्नौ शैलेयेऽप्यथ[3] गृह्यं नपुंसके ।
स्मार्तकर्मविधिग्रन्थभेदे त्रिस्त्वस्वतन्त्रके ॥ ३६३ ॥

---

१. 'विधौ' ख. पाठः. २. 'धर्मे चे' ख. पाठः. ३. 'थ्व' ग. पाठः.

---

* 'गुन्द्रा कुंत्रफला गुच्छा.........गवेधुश्च गवेधुका' (पु. १२८. श्लो. ६१)इति वैजयन्ती । 'गुन्द्रा गवेधुकायाम्' इति बृहदभिधानम्. 'स्त्री गवेधुर्गवेधुका' इति सिंहः ।

पैक्ष्ये च गृहसक्तेषु मृगपक्षिषु चाथ ना ।
औपासनाग्नौ गृह्या तु स्त्रीलिङ्गार्थे बहिर्भवेत् ॥ ३६४ ॥
स्त्रियामथ द्वयोर्गृत्सः शुनि च ब्राह्मणेऽपि च ।
त्रि तु मेधाविनि गृध्नुर्ध्वनिस्तु पशुषु द्वयोः ॥ ३६५ ॥
नाभिलाषे गृही तु त्रिर्गृहवत्यथ स द्वयोः ।
गृहस्थे कीटभेदे तु गृहिणी स्त्री यदाह्वयः ॥ ३६६ ॥
गृहकारीत्यथो गेयं क्ली गाने गातरि त्रिषु ।
गातव्येऽप्यथ गेष्णो[2] ना साममात्रे तनोरपि ॥ ३६७ ॥
अङ्गयोरुभयोः स्यात् तु त्रिषु रङ्गोपजीविनि ।
गोत्रो ना भूधरे मेघे क्ली तु नाम्नि कुले बले ॥ ३६८ ॥
कुत्सितार्थे च[3] गोत्रा तु स्त्री भूमौ गोगणे त्रि तु ।
गोत्रातर्यथ गोपस्त्रिर्गोपाले ना तु गोपने ॥ ३६९ ॥
गोष्ठाध्यक्षे बहूनां च ग्रामाणामधिकारिणि ।
शारिबायां तु गोपी स्त्री द्वे मनुष्येऽथ गोप्यवाक् ॥ ३७० ॥
त्रिषु रक्ष्ये गूहनीये द्वे तु स्याद् दाससूनुषु ।
गोला तु गोदावर्याख्यनदीभेदे स्त्रियामियम् ॥ ३७१ ॥
नैपाल्यां बालरमणकाष्ठेऽप्यथ नपुंसकम् ।
काञ्जिके ना तु पिण्डेऽथ गोधा प्राण्यन्तरे स्त्रियाम् ॥ ३७२ ॥
निहाकासंज्ञकेऽथो नप् स्त्री च हस्तघ्नसंज्ञके ।
ज्याघातवारणे गोदः पुनर्गोदातरि त्रिषु ॥ ३७३ ॥
ना क्रीडायां मतौ गोदौ ह्रदभेदौ कयोरपि ।
ग्रामे तु तत्समीपस्थे गोदौ नित्यं द्वितायुतौ ॥ ३७४ ॥
गोदा तु गोदावर्यां स्त्री गोष्ठः सामान्तरे पुमान् ।
गोस्थाने तु नृशण्डोऽर्थे गोष्ठी तु सदसि स्त्रियाम् ॥ ३७५ ॥

१. 'द्धु' ग. पाठः, 'त्सु' ख. पाठः. २. 'गोष्णा ना' क. ग. घ. ङ. पाठः. क. ग. घ. ङ. पाठः. ४. 'गोपनी' ङ. पाठः.

**गोमान्** गोस्वामिनि त्रि स्यान्नदीभेदे तु गोमती ।
**गोधुक्** तु पुंसि मेरौ त्रिर्गोपाले गोश्च दोग्धरि ॥ ३७६ ॥

**गौरस्तु** ना विरिञ्चे द्वे धववृक्षेऽसनद्रुमे ।
शुक्लपीतारुणगुणेष्वेतद्युक्तेषु तु त्रिषु ॥ ३७७ ॥

अयजस्त्वाह शुद्धेऽपि स चैको लक्ष्यवेदिनाम् ।
क्लीबमत्रोक्तविटपिद्वयस्य फलपुष्पयोः ॥ ३७८ ॥

उशीरे च द्वयोस्तु स्यान्मृगभेदेऽथ सा स्त्रियाम् ।
गौरी शिवासरस्वत्योः प्रियायां वरुणस्य च ॥ ३७९ ॥

अर्हत्तीर्थकराणां तु याः स्युः शासनदेवताः ।
तासामन्यतमायां च कथयामास सज्जनः ॥ ३८० ॥

अजातार्तवकन्यायां तीक्ष्णार्जकहरिद्रयोः ।
**घनो** ना मुस्तके मेघे सङ्घाते लोहमुद्गरे ॥ ३८१ ॥

मुद्गरेऽन्येऽपि काठिन्ये कफगन्धेऽभ्रके तथा ।
भिक्षायाः परिमाणे च हन्तकारद्वयात्मके ॥ ३८२ ॥

विस्तारे कठिने तु त्रिर्विपुले मूर्तसान्द्रयोः ।
कफस्थगन्धयुक्ते च क्ली तु वाद्यान्तरे मुखे ॥ ३८३ ॥

वाद्यवृत्तिप्रभेदे च लोहे तमरकाह्वये ।
**घटा** स्त्री घटने गोष्ठ्यां हस्तिसङ्घटनेऽपि च ॥ ३८४ ॥

वृन्दमात्रे परे दोहपात्रभेदे तु सा घटी[1] ।
तैलादिभाजने स्वल्पकाले नाडिद्वयात्मके ॥ ३८५ ॥

मुहूर्ताख्येऽथ ना कुम्भराशौ द्रोणाख्यमानके ।
नृस्त्रियोस्तु घटी कुम्भे **घ्राणा** तु स्त्रीनपुंसकम् ॥ ३८६ ॥

नासायां स्याद् त्रिराघ्राते घ्रातौ तु नपि नी पुनः ।
**घासिर्युद्धे** हुताशे च गर्ताभाविति केचन ॥ ३८७ ॥

1. 'डी' ख. पाठः.

*त्रि तु बह्वाशिनि घृतं त्वाज्ये तोये च नप् परे ।
पुंस्यप्याहुर्घृणिस्तु स्यान्ना स्त्रियामपि केचन ॥ ३८८ ॥

रश्मौ ज्वाले निदाघेऽह्नि वीच्यां घोणा तु सा स्त्रियाम् ।
नासिकायां हयप्रोथे जलस्योपरि गत्वरे ॥ ३८९ ॥

कुम्भीरमक्षिकासंज्ञे क्षुद्रजन्तावथो नरि ।
*इत्वरे घूर्णने चाथ घोरास्त्रिषु भयानके ॥ ३९० ॥

कष्ट इत्यपरे द्वे तु सृगाले क्ली तु कुङ्कुमे ।
घोलस्तु ना कपाले स्यात् क्ली दण्डाहतके तु सः ॥ ३९१ ॥

मर्त्यजात्यन्तरे वैश्यघर्घरीजे द्वयोरथ ।
घोष आभीरपल्लौ ना शब्दे वाचि स्वरे परे ॥ ३९२ ॥

ब्रह्मवालुकसंज्ञे च विषभेदे लतान्तरे ।
कोशातक्याह्वये शब्दवर्णधर्मेऽप्यथो स्त्रियाम् ॥ ३९३ ॥

कंसाख्यलोहे चन्द्रस्तु ना कर्पूरशशाङ्कयोः ।
काम्पिल्लाख्यद्रुमे बर्हिमेचकेऽप्यजयोऽब्रवीत् ॥ ३९४ ॥

सुन्दरे तु त्रिषु ज्ञेयं क्ली त्वारण्यकसामनि ।
अत्र हेत्यृक्समुद्भूते कुमुदे रजतेऽप्यथ ॥ ३९५ ॥

नृशण्डः कनके स्त्री तु चन्द्रार्घ्यायामथ स्त्रियाम् ।
पूष्णो रश्मिसहस्रस्य शतानि त्रीणि रश्मयः ॥ ३९६ ॥

हिमोत्सर्गाय कथितास्तेषु चक्रं तु नप्यदः ।
पुंस्यप्येके रथाङ्गे च संसारे सैन्यराष्ट्रयोः ॥ ३९७ ॥

जलावर्ते चये वृत्ते मण्डले धनलोहयोः ।
काव्यालङ्कारभेदे च विषमे माक्षिकेऽपि च ॥ ३९८ ॥

दद्रुसंज्ञव्याधिभेदे व्यूहदम्भप्रभेदयोः ।
धर्मचक्रादिके शस्त्रभेदे च द्वे तु पक्षिणि ॥ ३९९ ॥

---

१. 'पुनः' क. ग. घ. पाठः. २. 'पु' क. घ. पाठः. ३. 'थ' ग. पाठः. ४. 'ज्ञे' ग. पाठः. ५. 'पं' ख. पाठः.

---

* 'शङ्करे' इति स्यात् ।

चक्रवाकाह्वयेऽथ स्त्री चर्चा चार्चिक्यचिन्तयोः ।
मार्जारकर्णिकासंज्ञदेव्यां मार्ष्टौ तु कश्चन ॥ ४०० ॥

स्यात् पुंश्चल्यां च पार्वत्याः पुनर्नामसु सज्जनः ।
चर्चिकेत्याह चर्चस्तु राजराजस्य पुंस्ययम् ॥ ४०१ ॥

नवानां निधिभेदानामेकस्मिन्निति निश्चितः ।
**चण्डा** स्त्रियां स्याद् दुष्पुत्रसमाख्ये भेषजान्तरे ॥ ४०२ ॥

स्त्र्येव चण्डी तु दुर्गायां त्रिषु त्वत्यन्तकोपने ।
**चम्पा** स्त्री नगरीभेदे वृक्षभेदे तु पुंस्ययम् ॥ ४०३ ॥

**चक्रो** ना सर्पसत्रस्य सर्पभेदेऽपि[1] यष्टरि ।
व्यथने चिक्कणे तु स्यात् क्लीबं पूगतरोः फले ॥ ४०४ ॥

**चरं** चराचरे त्रिर्ना चारे स्त्री युवतौ चरी ।
**चलं** चलाचले त्रिर्ना तुरुष्क इति विश्रुते ॥ ४०५ ॥

निर्यासभेदे वायौ च पुंश्चल्यां तु चला स्त्रियाम् ।
विद्युत्यथ **चरिर्वा**यौ चरतौ ना पशौ द्वयोः ॥ ४०६ ॥

चरणाख्यक्रियायां स्त्री यवसेऽप्यथ चाटुनि ।
**चटुः** स्त्रीशण्डयोः पुंसि त्वयं पशुपिचण्डके ॥ ४०७ ॥

चपले तु त्रिषु स्त्री तु **चञ्चुस्त्रो**टौ पतत्रिणः ।
एरण्डे नाथ **चर्मी** ना भूर्जद्रौ शङ्करस्य च ॥ ४०८ ॥

भृत्ये भृङ्गिरिटाभिख्ये स तु चर्मवति त्रिषु ।
तथा फलकपाणौ च **चक्री** तु नरि केशवे ॥ ४०९ ॥

द्वे कुलाले गृहस्थे च तौलिके भुजगेऽपि च ।
त्रि तु स्याच्चक्रवन्मात्रे **चार**स्तु स्यान्नरि स्पशे ॥ ४१० ॥

बन्धे प्रियालवृक्षेऽथ तत्फले क्लीबमङ्गणे ।
**चारी** तु स्त्री नाट्यनान्द्यां गयाम्रस्य च सेचने ॥ ४११ ॥

---

१. 'द्रु' ग. पाठः.

आर्योपजीविभेदे तु चाटौ ना चटनेऽपि च ।
मिश्रवर्णे कृष्णहरित्सिते तद्वति तु त्रिषु ॥ ४१२ ॥

चान्द्री स्त्री पौर्णमास्यां स्याच्चन्द्रसम्बन्धिनि त्रिषु ।
चारुर्बृहस्पतौ पुंसि चन्द्रिकायां तु सा स्त्रियाम् ॥ ४१३ ॥

ऊहापोहक्षमायां[1] च बुद्धौ चार्वी त्रिषु त्वयम् ।
सुन्दरे चित्रवाक्ये च चाटुस्तु स्त्रीनपुंसकम् ॥ ४१४ ॥

राजादिस्तुतिवाक्ये ना त्वयं पशुपिचण्डके ।
दर्व्यग्रे केचन प्राहुर्दर्व्यां त्वेवाह सज्जनः ॥ ४१५ ॥

चित्रं नपुंसकं पुण्ड्रे स्यादालेख्येऽप्यथ त्रिषु ।
आश्चर्ये कर्बुराभिख्यवर्णयुक्तेऽप्यथो पुमान् ॥ ४१६ ॥

देवतानुक्रमे प्रोक्त[2] आखुराजे चिरन्तने ।
कर्बुराख्यगुणेऽथ स्त्री चित्रा हेमन्तरात्रिषु ॥ ४१७ ॥

पशुकामेष्टिभेदे च विश्रुते श्रुतिशालिनाम् ।
कृष्णात्रिवृल्लताभेदे न्यग्रोधीसंज्ञभूरुहे ॥ ४१८ ॥

गोदुम्बाख्यलताजातौ सुभद्राधुनिभेदयोः ।
वेदशालिमुखे चापि नक्षत्रे चन्द्रदैवते ॥ ४१९ ॥

तद्युक्ते कालमात्रेऽन्ये तत्कालोत्पन्नयोषिति ।
द्वयोस्तु पाठीनाभिख्यमत्स्यभेदेऽथ चिल्लवाक् ॥ ४२० ॥

क्लिन्नेऽक्षिण च त्रिः क्लिन्नाक्षेऽप्यथ द्वे विहगान्तरे ।
*आतापिसंज्ञेऽथो चिल्ली शाकजात्यन्तरे स्त्रियाम् ॥ ४२१ ॥

मारिषाख्ये तथाङ्गे च भ्रूसंज्ञेऽथ चिता स्त्रियाम् ।
चित्यायां क्ली तु चयने चितेस्तु त्रिषु कर्मणि ॥ ४२२ ॥

---

१. 'क्रियायां' ङ. पाठः. २. 'चो' क. ग. घ. ङ. पाठः.

---

* "स्वामी तु--आतपति—इति विगृह्णन् 'आतापी' इति पाठं मन्यते" इति भानुजीदीक्षितः ।

**चितिस्तु** स्त्री समूहे स्याच्चितायां चयनेऽपि च ।
ज्ञाने च चेततौ त्वेष धातौ स्यान्नरलिङ्गकः ॥ ४२३ ॥

**चीनो** ना पीतमुद्गे स्याद् काककङ्गुद्रुमान्तरे ।
मदनाख्ये तथोदीच्यनीवृद्भेदे तु भूम्नि च ॥ ४२४ ॥

तद्देशराजेषु पुनर्मृगयोश्चापि पुंस्त्रियोः ।
व्यवस्थयाथ मृगयोर्लक्षणं चैवमभ्यधुः ॥ ४२५ ॥

ताम्रवर्णो मृगो यः स हरिणः स्याद् स एव यः ।
सितक्रोडः स चीनः स्यादित्येकः प्रोक्तलक्षणः ॥ ४२६ ॥

अन्यः कपोतवर्णो यस्त्रिंशदङ्गुलेमानकः ।
इत्यङ्कितोऽथ मदनफले क्लीबमयस्यपि ॥ ४२७ ॥

**चीरं** क्लीच्छिद्रवस्त्रे च वल्कले च स्त्रियां त्वसौ ।
झिल्लिकासंज्ञकीटे स्याच्चीरी **चुक्र**स्तु ना रसे ॥ ४२८ ॥

अम्लाख्ये बीजपूरेऽम्लवेतसे च निमन्त्रणे ।
गुञ्जिकायां द्वयोस्तु स्यात् सुन्दरेऽथ नपुंसकम् ॥ ४२९ ॥

यन्मस्त्वादिशुचौ भाण्डे सक्षौद्रगुडकाञ्जिके ।
त्रिरात्रं धान्यराशिस्थं तत्र चिञ्चाफलेऽपि च ॥ ४३० ॥

त्रिस्त्वम्लरससंयुक्ते चाङ्गेर्यां तु स्त्रियामियम् ।
**चुम्र**शब्दः पुमान् नाशे विदीर्णे तु त्रिषु स्मृतः ॥ ४३१ ॥

**च्युतिः** स्त्री च्यवने योनौ वायौ च च्योततौ तु ना ।
**चूषा** गजवरत्रायां स्त्री स्त्रीशण्डस्तु चूषणे ॥ ४३२ ॥

**चूर्ण**मस्त्री वासयोगे धूलौ क्षारान्तरे त्रि तु ।
दग्धेऽथ **चूर्णिः** स्त्रीलिङ्गा ग्रन्थभेदे कपर्दके ॥ ४३३ ॥

ना तु चूर्णयतौ द्वे तु चूचुर्जात्यन्तरे नृणाम् ।
किरात्यां शम्बराज्जाते वैदेहादिति केचन ॥ ४३४ ॥

पुल्कसादपरे क्ली तु चेलं वस्त्रेऽधमे त्रिषु ।
चैत्रः पुंसि वसन्तस्य प्रथमे मास्यथ स्त्रियाम् ॥ ४३५ ॥
तत्स्थायां पौर्णमास्यां स्याच्चैत्री भेला तु चित्रया ।
नक्षत्रेण युते कालभेदे चित्राह्वये पुनः ॥ ४३६ ॥
काले जाते च स यदि स्यादस्त्यर्थस्ततश्च सः ।
पारिशेष्याद् यथायोगं विज्ञेयो नपि पुंसि वा ॥ ४३७ ॥
चैत्यं चिताङ्के बुद्धाण्डे याज्ञिकाज्याधिवासने ।
देवालये च क्लीबं स्यादुद्देशद्रौ तु केचन ॥ ४३८ ॥
पुंस्यप्याहुरथो चैद्याश्चेदिनीवृति केचन ।
पुंभूम्नीत्याहुरेष द्वे चेदिराजस्य पुत्रयोः ॥ ४३९ ॥
चोलस्तु पुंसि कूर्पासे करमर्दाख्यपादपे ।
तत्फले क्ली दाक्षिणात्ये नीवृद्भेदे नृभूमनि ॥ ४४० ॥
तद्राजे नास्य सन्ताने द्वयोर्जानपदेषु च ।
गृहच्छदिःषु न स्त्री स्याच्चोक्षस्तु त्रिषु सुन्दरे ॥ ४४१ ॥
गतिभेदे तु नाथ स्याच्चूडाकरणकर्मणि ।
चौलं क्ली त्रि तु चोलस्य विकारादावथो नपि ॥ ४४२ ॥
पुंस्यप्येके छत्रमुष्णवारणे स्त्री तु भेषजे ।
मिसिसंज्ञे द्रोणिकाख्यस्तम्बे कुस्तुम्बुरुण्यपि ॥ ४४३ ॥
छत्रा छात्रस्तु शिष्ये ना मधुभेदे नपुंसकम् ।
छागो ना करुणाभिख्यपादपे छगले द्वयोः ॥ ४४४ ॥
छिद्रं रन्ध्रेऽपराधे च दूषणे त्वजयोऽब्रवीत् ।
एतेषु क्लीबलिङ्गं स्यात् त्रिषु तुच्छिद्रवत्यर्दः ॥ ४४५ ॥
छिन्नं (व्रणे ? [‡]वृक्णे) त्रिषु क्ली तु निश्शारे दध्नि सा पुनः ।
छिन्ना गुलूच्यां स्त्री [1]छेकः पुनर्ना मृगपक्षिषु ॥ ४४६ ॥

---

१. 'पि' क. ग. घ. पाठः.

---

‡ 'कृत्ते लूनच्छिन्नदातवृक्णच्छात,.. ' (पु. २०५. श्लो. १०२

गृहासक्तेषु वैदग्ध्ययुक्ते तु त्रिषु स स्मृतः ।
जयस्तु पीतमुद्गे ना नान्दीवृक्षे पुरन्दरे ॥ ४४७ ॥

पुरन्दरसुते जित्यां होमभेदेषु केषुचित् ।
दुर्गायां तु जया स्त्री स्याद् पार्वत्यां त्वजयोऽब्रवीत् ॥ ४४८ ॥

अन्यत्रापि क्वचिद् देवीविशेषेष्वपि दृश्यते ।
अर्हत्तीर्थकराणां तु याः स्युः शासनदेवताः ॥ ४४९ ॥

तासामन्यतमाया च कथयामास सज्जनः[1] ।
जयस्य हेतुभूतायां विद्यायामपि कुत्रचित् ॥ ४५० ॥

तृतीयायां तथाष्टम्यां त्रयोदश्यां तिथिष्वपि ।
शमीद्रुमे हरीतक्यामग्निमन्थाख्यपादपे ॥ ४५१ ॥

वचाजीरकतर्कारीष्वथ स्तम्बान्तरे जपा ।
रक्तपुष्पे जपाख्येऽथो उपांशूच्चारणे पुमान् ॥ ४५२ ॥

शब्दस्याथ जवः पुंसि वेगे त्रिषु तु तद्वति ।
जवा तु स्त्री रक्तपुष्पस्तम्बभेदे जपाह्वये ॥ ४५३ ॥

जन्योऽपवादे नात्रार्थेऽमरदत्तोऽब्रवीन्नपि ।
जनवादे तु पुंस्येनं सिंहः क्लीबेऽजयोऽपठेत्[2] ॥ ४५४ ॥

क्ली युद्धे जनितव्ये च त्रि तूत्पादयितव्यके ।
जनितर्यपि जामातुः स्निग्धेषु ज्ञातयस्तु[3] ये ॥ ४५५ ॥

भृत्याश्चापि नवोढायास्तेषु चान्ये तु[4] केचन ।
विगीतेऽपि[5] द्वयोस्त्वेष मातृवाहककीटके ॥ ४५६ ॥

जम्भस्तु दंष्ट्रापार्श्वस्थदन्ते ना भुक्तिपादयोः ।
दैत्यभेदे च जम्बीरतरौ क्लीबं तु तत्फले ॥ ४५७ ॥

---

१. 'ज्जनः' क. ग. घ. ङ. पाठः. २. 'ठी' क. ग. घ. पाठः. ३. 'श्च' ग. पाठः.
४. 'षु' ग. ङ. पाठः. ५. 'च' क. ग. पाठः.

विदारणे तु वक्त्रस्य जम्भा स्त्री स्त्री **पुनर्जटा** ।
केशसन्दर्भभेदे च मांसीसंज्ञौषधान्तरे ॥ ४५८ ॥

तरोः शिफायां च जटीं त्वीकारान्तं प्रचक्षते ।
द्रोणाख्यपरिमाणस्य चत्वारिंशत्यथ त्रिषु ॥ ४५९ ॥

जटो जटावति त्रिस्तु **जडो**ऽनालोच्यकारिणि ।
शीतले स्तब्धनिर्बुद्ध्योः पङ्कगन्धिजले तु नप् ॥ ४६० ॥

पुंसि शीतगुणेऽथाह्वाजयस्तोये **जलं** नपि ।
*जले तु त्रिषु **जपस्तु** द्वयोः स्याद् विप्रभेकयोः ॥ ४६१ ॥

**जर्णो** ना पादपे चन्द्रे [1]कर्वे पक्षिणि तु द्वयोः ।
त्रिषु वृद्धेऽथ **जर्तो** ना स्वाङ्गे प्रजननाह्वये ॥ ४६२ ॥

योनिरोम्ण्यपरे कश्चिदाभीरे च **जनः** पुनः ।
जनने जननायां च प्रतिवेशविवाहयोः ॥ ४६३ ॥

राजन्यबन्धावप्राज्ञे मनुष्ये त्विति सज्जनः ।
क्लीबं दमनके प्राणिद्यूते चाथ जनी स्त्रियाम् ॥ ४६४ ॥

जतुकृत्संज्ञवल्ल्यां च स्नुषातिबलयोरपि ।
**जनिस्तु** पत्न्यामुत्पत्तौ वरयोषिति च स्त्रियाम् ॥ ४६५ ॥

जायतौ तु पुमांस्त्री तु **जम्बूर्**जम्बूटपादपे ।
तत्फले जम्बु जम्बूश्च नस्त्रियोः स्यादथ द्वयोः ॥ ४६६ ॥

चतुष्पाज्जातिभेदेऽथ **जत्रुर्ना** घर्ममेघयोः ।
क्लीबेऽवसानेऽससन्धौ **जन्युस्तु** द्वे शरीरिणि ॥ ४६७ ॥

अपत्ये च पुमांस्त्वेष प्रादुर्भावे प्रजापतौ ।
पितर्यपि **जगत्** तु क्ली[1] जगतीति स्त्रियामपि ॥ ४६८ ॥

१. 'तु' ग. पाठः.

'अनेडमूकस्तु जडो जलो मूक......' (पु. २०२. श्लो. १४) इति वैजयन्ती ।

लोके स्त्री तु जगत्यष्टाचत्वारिंशत्स्वरादिषु।
छन्दोभेदेषु सुरभौ पृथिव्यां चाथ तत् त्रिषु॥ ४६९॥

त्रसे चराचरे चापि मनुष्ये तु[1] द्वयोरथ।
जटावति जटी त्रि स्यात् प्लक्षवृक्षे तु पुंस्ययम्॥ ४७०॥

जवी वेगवति त्रिः स्याद् द्वे तु वातप्रमीमृगे।
जालं गवाक्षभेदे क्ली पुष्पक्षारकवृन्दयोः॥ ४७१॥

आनाये कपटे चापि भारताद् दक्षिणे क्वचित्।
वर्षात् स्यादन्तरद्वीपे मर्त्यजात्यन्तरे पुनः॥ ४७२॥

‡विप्रीवैदेहजे द्वे स्यात् पटोल्यां तु स्त्रियामियम्।
जाली जारस्तु नादित्ये तथैवोपपतावथ॥ ४७३॥

अविवाह्यासु कन्यासु या स्यात् कन्याप्रसूतिजा।
कन्या तस्यां स्त्रियां जारी हिमवद्दुहितर्यपि॥ ४७४॥

क्लीबं तु रक्तकुमुदे जातं त्वस्त्री कदम्बके।
त्रिरुत्पन्ने जन्मनि क्ली जामिस्तु स्त्री कुलस्त्रियाम्॥ ४७५॥

तृणेऽङ्गुलौ च स्वसरि नीवृद्भेदे च कुत्रचित्।
जामि तु क्ली जलेऽभ्यासात् समानगुणवस्तुनः॥ ४७६॥

आलस्ये चेतसो जानुस्त्वस्त्री द्वात्रिंशदङ्गुले।
मानभेदेऽप्यूरुजङ्घासन्धौ चाप्यथ जालिवाक्॥ ४७७॥

त्रिषु जालवति द्वे तु दाशे स्यात् स्त्री तु जालिनी।
पिप्पल्यां चित्रशालायां जिह्मं तु कुटिले त्रिषु॥ ४७८॥

अलसे क्ली तु पापे द्वे सर्पे क्ली तु जितं जये।
त्रिषु तु स्वीकृते तत् स्याद् युद्धभग्नाभिभूतयोः॥ ४७९॥

---

१. 'षु' ख. ग. पाठः.

‡ 'जालं वैदेहकाद् विप्रा' (पु. ७४. श्लो. ३३) इति तु वैजयन्ती

जिष्मी द्वे शकुनौ काश्चित् त्वाह ना क्रोधकालयोः ।
इति जिष्णुस्तु ना विष्णाविन्द्रे मध्यमपाण्डवे ॥ ४८० ॥

अग्नौ च जित्वरे तु त्रिर्जित्वा त्विन्द्रेऽपि योद्धरि ।
ना स्त्री तु जित्वरी नद्यां वाराणस्यां च वाणिजाः ॥ ४८१ ॥

जीवो ना गीष्पतौ जन्तौ क्षेत्रज्ञे त्रि तु जीवति ।
त्रये प्राणे स्त्री तु मौर्व्यां जीवन्त्याख्यलतान्तरे ॥ ४८२ ॥

स्याज्जीवनक्रियायां तु नृस्त्री छन्दोन्तरे पुनः ।
द्विषष्टिस्वरके क्लीबं जीरस्त्वग्न्यन्नयोः पुमान् ॥ ४८३ ॥

अजाज्यां तु नृशण्डः स्याद् द्वे त्वश्वे जीर्विवाक् पुनः ।
टङ्के ना शकटे द्रव्ये गुल्मे चाथ द्वयोः पशौ ॥ ४८४ ॥

मद्गौ च चटके चाथ जीवन् स्यात् प्राणति त्रिषु ।
जीवन्ती तु स्त्रियां जीवासंज्ञशाकलतान्तरे ॥ ४८५ ॥

ज्योतिष्मतीगुडूच्योश्च जूर्णस्तु स्यान्नृलिङ्गकः ।
वज्रेऽपि यावनालेऽपि त्रि तु वृद्धे स्त्रियां पुनः ॥ ४८६ ॥

जूर्णा स्याद् बल्बजेष्वेषा जूर्णिस्तु स्त्री ज्वरे क्रुधि ।
शरीरे च पुमांस्त्वेष आदित्ये च विरिञ्चने ॥ ४८७ ॥

समीरणे हुतवहे भेद्यलिङ्गं[2] तु सत्वरे ।
ज्येष्ठस्तु पूर्वजे वृद्धतमे शस्ततमे त्रिषु ॥ ४८८ ॥

त्रपुह्रीबेरयोस्तु क्ली स्याल्लोहे नीलिकाह्वये ।
अपि द्वयोस्तु हंसेऽथ ज्येष्ठा स्त्री शम्भुशक्तिषु ॥ ४८९ ॥

नवस्वेकत्र चालक्ष्मीगृहगोलिकयोरपि ।
इन्द्रदैवतनक्षत्रेऽप्यथ ज्यैष्ठी स्त्रियामियम् ॥ ४९० ॥

ज्येष्ठानक्षत्रसंयुक्तपौर्णमास्यां पुमांस्तु सः ।
शुक्रमासे त्रि तु ज्येष्ठसम्बन्धिन्यथ जैत्रवाक् ॥ ४९१ ॥

---

१ 'पा' ख. पाठः, वाजिनाम्' ग. पाठः. २. 'ज्ञस्तु' क. ग. घ. ङ. पाठः.

क्ली द्यूते जयनेऽथ त्रिर्जेयशीले स्त्रियां पुनः।
जैत्र्यास्फोताख्यवल्ल्यां स्याद् विष्णुक्रान्तान्यनामनि ॥ ४९२ ॥
ज्योतिरात्मनि सूर्येऽग्नौ हविर्होमार्चिर्दीप्तिषु।
ग्रहनक्षत्रतारासु नक्षत्रेऽपि विशेषतः ॥ ४९३ ॥
विलोचने धने पुत्रे सामभेदेषु केषुचित्।
ज्योतिष्टोमाख्ययज्ञे च क्लीबं दीप्तौ तु वा स्त्रियाम् ॥ ४९४ ॥
नित्यं पुमांसमग्नौ चामरदत्तोऽन्वशादिदम्।
पुन्नपुंसकलिङ्गस्तु ज्योतिष्टोमे मतो मम ॥ ४९५ ॥
ज्यौत्स्नी तु स्त्री पटोल्यां स्याज्ज्योतिष्मद्रजनावपि।
त्रि तु ज्योत्स्नावति स्त्री तु झषा नागबलाह्वये ॥ ४९६ ॥
भैषज्ये ना तु विपिने द्वे मत्स्ये मकरेऽपि च।
झरो ना निर्झरे स्त्री तु झरा स्याज्झरणे त्रि तु ॥ ४९७ ॥
झटो झटितरि द्वे तु शूद्रामैत्रेयजे नरे।
टङ्कोऽस्त्री परशौ शैलशृङ्गे पाषाणदारणे ॥ ४९८ ॥
मुद्रितोन्मानभेदे च टङ्कणे चाथ नृस्त्रियोः।
मृगभेदे व्यवस्थाने[3] ना तु कश्मीरविश्रुते ॥ ४९९ ॥
महीरुहान्तरेऽथ स्यात् फले तस्य नपुंसकम्।
तलश्चपेटे तालाख्यद्रुमे शीतगुणे च ना ॥ ५०० ॥
त्रि तु तद्वति शण्डे तु तालसंज्ञतरोः फले।
पाताले समदेशे च चतुर्भागे पलस्य च ॥ ५०१ ॥
पाणिना दक्षिणेनैव वीणातन्त्र्याश्च ताडने।
अजयस्तु पठत्येनं कार्यबीजे घनेऽपि च ॥ ५०२ ॥

---

१. 'षा' ख. घ. ङ. पाठः. २. 'प्य' ख. पाठः. ३. 'तो' ग. पाठः. ४ 'नं का' ङ. पाठः.

---

¶ 'अग्नेर्भ्राजन्ते अर्चयः' इति श्रुतेरिदन्तोऽपि।

अधःस्वरूपयोस्त्वस्त्री हस्ताग्रे तु तला तलम् ।
इति स्त्रियां च शण्डे चाप्यथ लिङ्गत्रये तटम् ॥ १०३ ॥
प्राहुर्जलाशयप्रान्ते तीरे त्वन्येऽद्रिसानुनि ।
तङ्कः सम्भावनायां च भयेऽप्यस्त्री ततं पुनः ॥ १०४ ॥
वीणादिवाद्ये क्ली ना तु पितरि त्रि तु विस्तृते ।
व्याप्ते त्रयं तु त्रितये त्रिस्त्रिवेद्यां त्रयी स्त्रियाम् ॥ १०५ ॥
नपुंस्त्री त्रयाणां वृन्दे स्यात् त्रसं तु त्रिषु जङ्गमे ।
त्रसी तु स्त्री त्रासभेदे यस्मिन् सति दिशां भ्रमः ॥ १०६ ॥
गन्तुं विवेकशून्यत्वादित्येवं कश्चिदब्रवीत् ।
त्र्यश्रा स्त्रियां त्रिवृत्संज्ञवल्ल्यां त्र्यश्रौ तु सा त्रिषु ॥ १०७ ॥
त्वचं तु क्ली सूत्कटाख्यगन्धद्रव्येऽथ वल्कले ।
त्वचा स्यान्नृस्त्रियोर्ना तु तटिस्तटतिधातुके ॥ १०८ ॥
सूनायां तु स्त्रियां ना तु तरिर्वैश्वानरोनले ।
स्त्री चर्मवृतपेडायां नावि चाथ तनुः स्त्रियाम् ॥ १०९ ॥
असृग्धरायां लमाख्यराशौ वपुषि सा पुनः ।
तन्वीति पिप्पलीसंज्ञभेषजे ना तु पादपे ॥ ११० ॥
नान्दीवृक्षाह्वये त्रिस्तु विरलेऽल्पे कृशेऽपि च ।
तन्तुस्तु सूत्रे ना यज्ञसंस्थायां चाथ स द्वयोः ॥ १११ ॥
एकत्र भेदे भेदानां मण्डल्याह्वयभोगिनाम् ।
ग्राहाख्ययादोभेदे च सामभेदे पुनर्नपि ॥ ११२ ॥
स(र्वेन्नि?र्वाग्नि)चित्याया: पुच्छे पक्ष्याकारस्य वस्तुनः ।
छुरिकायां च खड्गादिमुष्टौ चाप्यस्त्रियामथ ॥ ११३ ॥
तप्ता स्याद् भास्करे पुंसि भेद्यलिङ्गं तु तापके ।
त्वष्टा प्रजापतौ वह्नौ देवतक्षणि तक्षणि ॥ ११४ ॥

---

१. 'टी' ङ. पाठः. २. 'रेऽन' क. ख. ग. पाठः. ३. 'देहे च सा' ग. पाठः.
४. 'त्रिसया:' ङ. पाठः. ५. 'स्तु' क. ख. पाठः.

विष्णवग्रजे माध्यमिकदेवे दिनकरे च ना ।
त्रि तु त्वक्षितरि स्यात् तु तक्षा ना वर्धकौ स तु ॥ ९१५ ॥
विप्रीकरणजे मर्त्यजातिभेदे द्वयोस्तथा ।
आयोगवे च वृत्तिश्चेत् तक्षणं तस्य ना पुनः ॥ ९१६ ॥
तक्षा दीपे ज्वरे सूर्य आतपे क्ली तु पुत्रयोः ।
तपस्तु नपि कृच्छ्रादौ धर्मसन्तापयोरपि ॥ ९१७ ॥
लग्नान्नवमराशौ च प्राहुः सांवत्सरा इदम् ।
शिशिरर्तौ त्वचि प्राह शाश्वतः पुन्नपोः पुनः ॥ ९१८ ॥
माघमासे तमस्तु क्ली पापे नरकशोकयोः ।
गुणत्रयस्यान्यतमे साङ्ख्यानां प्रकृतौ बले ॥ ९१९ ॥
अज्ञाने ज्वलति ध्वान्ते रात्रौ राहौ तु ना तेमाः ।
तालः कालक्रियामाने तृणराजाख्यपादपे ॥ ९२० ॥
अङ्गुष्ठमध्यमामाने चपेटे त्रपुसेऽपि च ।
इषुभेदे च नाथ स्त्री ताली दृढदलाह्वये ॥ ९२१ ॥
तृणद्रुमे तामलकीसौराष्ट्रीमुसलीषु च ।
प्रतितात्यामथ क्लीबं हरिताले फलेषु च ॥ ९२२ ॥
अत्रोक्तस्थावराणां स्यात् कांस्यताल्यां तु तत् त्रये ।
तारस्तु शुद्धमुक्तायां मुक्ताशुद्धौ च तारणे ॥ ९२३ ॥
रदेऽपि सज्जनः प्राह तारा तु स्यान्नरास्त्रियोः ।
नक्षत्रे नेत्रमध्ये च रजते तु नृशण्डयोः ॥ ९२४ ॥
त्रिषु तूच्चैस्तरे शब्दे विशदेऽप्यथ पङ्कजे ।
प्रणवे च नपि स्त्री तु तारा योषिति वालिनः ॥ ९२५ ॥
सुगतस्य च ताम्रं तु स्यात् क्लीबं शुल्बरूपयोः ।
ना शुल्बवर्णसदृशे वर्णे तद्वति तु त्रिषु ॥ ९२६ ॥

---

१. 'वा' क. ख. घ. ङ. पाठः. २. 'मतः' ङ. पाठः. ३. 'क्षु' क. घ. पाठः. 'तु कार' ग. पाठः. ५. 'कू' ख. ङ. पाठः.

ताम्रा तु स्त्री कृष्णलाख्यवल्ल्यां तार्क्ष्यस्तु ना रथे ।
गरुडे शैलजे विष्णौ विष्णोर्वामनविग्रहे ॥ ९२७ ॥

सौवर्चलाख्यलवणे पुनः क्लीं द्वे तुरङ्गमे ।
तान्तस्तु मासे ना तान्तिमति तु त्रिः पुमान् पुनः ॥ ९२८ ॥

विस्तारे तानशब्दोऽथ गीतिधर्मे नपुंसकम् ।
तापस्तप्तौ पुमान् स्त्री तु तापी स्यान्निम्नगान्तरे ॥ ९२९ ॥

ताडो ना ताडने ताडी स्त्री तालीसंज्ञपादपे ।
तार्णं भारतवर्षस्थद्वीपभेदे नपुंसकम् ॥ ९३० ॥

तृणसम्बन्धिनि त्रिः स्यात् त्राको धर्मे नृलिङ्गकः ।
त्रि स्याच्छरणदेशीये त्वाष्ट्रस्तु क्षपके पुमान् ॥ ९३१ ॥

अरत्नीनां च यूपस्य स्यादरत्नौ चतुर्दशे ।
त्वाष्ट्री तु स्त्री सूर्यपत्नीभेदे त्वष्टुः पुनस्त्रिषु ॥ ९३२ ॥

सम्बन्धिमात्रे यस्यापि त्वष्टा स्याद् देवतात्र च ।
अपत्ये तु द्वयोस्त्वष्टुरथ तापिर्नृलिङ्गकः ॥ ९३३ ॥

दैत्यभेदे तापयतौ नदीभेदे तु केचन ।
स्त्रीति पातरि तु त्राता त्रिर्ना तु सितसर्षपे ॥ ९३४ ॥

तिक्तस्तु पर्पटे पुंसि पटोले गुग्गुलावपि ।
विरसाख्यरसे षण्णां रसानां कटुकेऽपि च ॥ ९३५ ॥

गन्धे च सुरभावेतद् गुणत्रययुते त्रिषु ।
स्त्री तिक्ता कटुरोहिण्यां तिष्यस्तु नरि मारुते ॥ ९३६ ॥

महादेवे कलियुगे वह्नौ पुष्याख्यतारके ।
तद्युक्ते कालसामान्ये तज्जाते तु त्र्यथ स्त्रियाम् ॥ ९३७ ।

तिष्यामलक्यां तिग्मस्तु वज्रे चोष्णगुणेऽपि च ।
त्रि तु तद्वति तीक्ष्णे च तेजिते च त्रिकं तु नप् ॥ ९३८ ॥

---

१. 'कावके' ग. पाठः, 'क्षचके' ख. पाठः.

पृष्ठवंशाधरे त्रिस्तु त्रयाणां निवहेऽथ ना ।
शालङ्कायनसंज्ञेषु मुनिभेदेषु भूम्नि च ॥ १३९ ॥

तिर्यक् तु साचिभेदे त्रिर्नरं त्वाह पशुष्वमुम् ।
त्रिवृत् स्त्री त्रिवृतासंज्ञलताभेदेऽथ पुंसि सः ॥ १४० ॥

नवसङ्ख्यात्मके स्तोमे त्रि तु स्तोत्रे च तद्वति ।
तद्युक्तेऽप्यर्हरादौ स्याद् रज्ज्वादौ त्रिगुणे तथा ॥ १४१ ॥

तीर्थमस्त्री पुण्यजले पुण्यक्षेत्रेऽध्वरे भगे ।
जलावगाहमार्गे च मन्त्राद्यष्टादशस्वपि ॥ १४२ ॥

शास्त्रे निदाने योग्ये च स्त्रीपुष्पे दर्शनेष्वपि ।
उपाध्यायेऽप्युपाये च प्राहाचार्यकुलेऽपरः ॥ १४३ ॥

नदीष्वन्योऽथ तीक्ष्णोऽस्त्री विषे क्लीबं तु संयुगे ।
गरे चाप्यजयोऽवादीर्लोहे कालायसाह्वये ॥ १४४ ॥

अयोभेदे परे पुंसि त्वौष्ण्ये तीक्ष्णार्जकाह्वये ।
स्तम्बे च चारभेदे चातिहिंस्राकारधारिणि ॥ १४५ ॥

सूर्येऽथ स्त्री वचायां स्यात् तीक्ष्णा त्रिर्निशितोष्णयोः ।
आत्मत्यागिनि च तीव्रं तु त्रि(तू ? ष्ट्र )त्कृष्टनितान्तयोः ॥ १४६ ॥

उष्णे च क्ली त्वसत्त्वेऽथ तीरं कूले नपुंसकम् ।
तीरी तु शरभेदे स्त्री योऽल्पो वेगसमन्वितः ॥ १४७ ॥

तुङ्गस्तु पुंसि पुन्नागद्रुमे प्रांशौ तु स त्रिषु ।
स्त्रियां तु तुङ्गा स्याद् वंशरोचनासंज्ञभेषजे ॥ १४८ ॥

अजगन्धाह्वयस्तम्बे पुनस्तुङ्गी पुमान् पुनः ।
तुग्रो यवे वरिष्ठे तु त्रिरन्नाकाशयोस्तु नपु ॥ १४९ ॥

तुत्थं रसाञ्जने क्लीबं नीलीसंज्ञौषधौ तु सा ।
सूक्ष्मैलायां च तुत्था स्त्री रथचक्रस्य तु स्त्रियाम् ॥ १५० ॥

---

१. 'व्यवहारादौ र' ग. पाठः. २. 'का' ग. पाठः. ३. 'च' क. घ. पाठः. ४. न्यपि च' क. च. ङ. पाठः. ५. 'क' क. ख. घ. पाठः.

**तुम्बा** नाभावलाब्वां तु तुम्बी तुम्बं तु तत्फले ।
क्लीबं **तुच्छं** तु शून्ये त्रिष्वसुखे तु नपुंसकम् ॥ ९९१ ॥

**तुञ्जस्तु** दाने वज्रे च बलादानादिके च ना ।
तुञ्जा तु रक्षणे स्त्री स्याद्धिंसायां तु नरस्त्रियोः ॥ ९९२ ॥

**तुभस्तु** व्यथिते त्रि स्यान्नान्दीवृक्षे तु पुंस्ययम्
**तुष्टस्तु** नान्दीवृक्षे ना तुष्टौ क्ली तद्वति त्रिषु ॥ ९९३ ॥

**तुषस्तु** पुंसि धान्यानां त्वचि तत्सदृशे तथा ।
हिरण्यादेश्च शकले विभीतकतरावपि ॥ ९९४ ॥

तत्फले क्ली **तुटिस्तु** स्त्री पुंस्यप्येके प्रचक्षते ।
वाद्यभेदे लवे चाल्पकालभेदे च संशये ॥ ९९५ ॥

सूक्ष्मैलायां च ना त्वेष तुटतौ स्त्री पुन**स्तुरिः** ।
तन्तुवायोपकरणभेदे पुंसि तु वारिधौ ॥ ९९६ ॥

तुतोर्तिधातौ च क्ली तु **तूयं** तोये द्रुते त्रिषु ।
**तूर्यो**ऽस्त्री वाद्यनिर्घोषे स तु वाद्ये नपुंसकम् ॥ ९९७ ॥

**तूरो** ना वाद्यनिर्घोषे गतित्वरणहिंसयोः ।
पुनः स्त्रीपुंसयोस्तूरा **तूषं** तु स्यान्नपुंसकम् ॥ ९९८ ॥

वासोदशायां तूषा तु तुष्टौ स्त्रीपुंसयोरथ ।
**तूर्ण** त्रिषु स्यात् त्वरिते हिंसिते क्ली तु हिंसने ॥ ९९९ ॥

**तृप्तं** तु नपि षट्षष्टिस्वरे छन्दोन्तरे तथा ।
तृप्तौ त्रि तु स्यात् प्रीते च सुहिते चाथ **तृप्रवाक्** ॥ ९६० ॥

क्ली पापदुःखयोर्ना तु पुरोडाशे **तृणं** पुनः ।
क्लीबं स्यान्मल्लिकाभेदे सुरूपासंज्ञकेऽथ तत् ॥ ९६१ ॥

दूर्वायवेक्षुप्रभृतिक्षुद्रस्थावरजातिषु ।
नृशण्डयोरथ पुमांस्तेरः कतकपादपे ॥ ९६२ ॥

क्ली तु तस्य फले वक्रेऽप्यथ तैलो नृशण्डयोः ।
तिलस्नेहे तिलस्य त्रिः सम्बन्धिन्यथ तोग्म†वाक् ॥ ९६३ ॥

हरियवे ना हरितवर्णे चाथ त्रि तद्वति ।
क्ली त्वभ्रे कर्णमूलेऽथ तोडं सशिखमुण्डने ॥ ९६४ ॥

क्लीबेऽपनयने पुंसि दण्डोऽस्त्री निग्रहे मथि ।
आज्ञायां शासने राज्ञां हिंसायां लगुडे नृपे ॥ ९६५ ॥

सेनायां वृक्षशाखायामथ दक्षः प्रजापतौ ।
प्राचेतसे बले पुंसि त्रिषु चारुणि पेशले ॥ ९६६ ॥

कुक्कुटे तु द्वयोः स्त्री तु भुवि दक्षा दशा पुनः ।
परमायामवस्थायामवस्थामात्रकेऽपरे ॥ ९६७ ॥

आयुषो दशमांशेऽन्ये विपाके कर्मणः परे ।
दीपवर्तौ च वर्तौ च वस्त्रस्यान्ये तु मन्वते ॥ ९६८ ॥

अस्मिन्नर्थे स्त्रियां भूम्नि पुंभूम्न्यन्येऽथ दंशवाक् ।
दशनाख्यक्रियायां ना मक्षिकायां तु स द्वयोः ॥ ९६९ ॥

वन्यायां स्त्री तु तज्जातिभेदे दंश्यल्पकेऽथ ना ।
दन्तः स्याद् दशने शैलकटकेऽन्यस्त्ववोचत ॥ ९७० ॥

दंष्ट्रायां हस्तिनश्चेति दन्ती तु स्थावरान्तरे ।
नागदन्तीसमाख्ये स्त्री दत्तं तु नपि हेमनि ॥ ९७१ ॥

त्रिषु विश्राणिते दभ्रः पुनश्चन्द्रसमुद्रयोः ।
ना त्रि त्वल्पे च कुशले दलभं तु नपि वल्कले ॥ ९७२ ॥

गोत्रकृत्यृषिभेदे ना दर्वशब्दस्तु राक्षसे ।
द्वयोर्देशविशेषे तु पुंभूम्न्यप्यथ दस्मवाक् ॥ ९७३ ॥

---

१. 'णोऽग' क. ख. घ. ङ. पाठः.

---

† 'तोक्मं कर्णमले पुंसि हरिते च हरियवे' इति तु मेदिनी । 'कर्णमूलेऽभ्रहरितोस्तोक्मं तोक्मो हरियवः' (पु. २३३. श्लो. ३८) इति वैजयन्ती ।

[1]पुंसि वह्नौ च वज्रे च त्रि तूपक्षयकारिणि ।
द्रवो नर्मणि निर्यासे द्रवणे च पलायने ॥ १७४ ॥

पुंसि स्त्री तु द्रवा नद्यां त्रिर्धनप्रतियोगिनि ।
दरः शङ्खे भये श्वभ्रे छिद्रमात्रे तु सज्जनः ॥ १७५ ॥

नृशण्डः कन्दरे तु स्त्री दरी स्वल्पार्थके पुनः ।
दरोऽव्ययमिति प्राहुर्दलं तु क्ली तरुच्छदे ॥ १७६ ॥

न स्त्री भागेऽथ ना द्वन्द्वः समासे चार्थचोदिते ।
नृशण्डस्तु युधि क्ली तु रहस्ये मिथुनेऽपि च ॥ १७७ ॥

युग्मे च भेद्यलिङ्गं तु युग्मावयववस्तुषु ।
दाधिस्तु पुंसि श्रीपिष्टसंज्ञनिर्यासवस्तुनि ॥ १७८ ॥

क्ली तु क्षीरविकारे स्याद् विप्रप्रियमिति श्रुते ।
दर्विः समुद्रे चक्रे च ना स्त्री तु प्रतिकीलके ॥ १७९ ॥

दस्युस्तु द्वे चतुष्षष्टौ मर्त्यजात्यन्तरेषु ये ।
चौर्यादिदोषदुष्टत्वाद् भवेयुः सद्बहिष्कृताः ॥ १८० ॥

तेषु ना तु रिपौ त्रिस्तु तस्करेऽथ द्रवत् त्रिषु ।
पलायके द्रावके च द्रवन्ती तु स्त्रियामियम् ॥ १८१ ॥

[2]न्यग्रोधीसंज्ञकस्तम्बे दरत् तु स्त्री भये हृदि ।
नद्यां प्रपाते चेत्येके विष्ठायामिति कश्चन ॥ १८२ ॥

हिमवत्तट इत्यन्ये राजभेदे तु पुंस्ययम् ।
तस्यैव पुमपत्येषु भूम्नि देशस्य भूपतेः ॥ १८३ ॥

दण्डी पुंसि यमे द्वाःस्थेऽप्यथ दण्डवति त्रिषु ।
द्वे शुके द्वे तु दंष्ट्री स्यात् सर्पे प्राहाल्ययादसि ॥ १८४ ॥

वराहे मूषिके व्याघ्रेऽप्यथ दंष्ट्रावति त्रिषु ।
दासो भृत्ये द्वयोः स्त्री तु षडश्रासंज्ञवीरुधि ॥ १८५ ॥

---

१. 'श' ख. पाठः. २. 'षु' ख. पाठः.

स्याद् दासी नीलझिण्ट्यामप्यथ दाशो द्वयोरयम् ।
भृत्यकैवर्तयोस्तत्र स्त्र्यर्थे दाश्यथ नृस्त्रियोः ॥ ९८६ ॥

दाने (द्वे ! च) स्त्री तु दाशात्र दशायोगिनि तु त्रिषु ।
दान्त(स्तु ! त्रि) दमिते दान्तियुक्ते दान्तविकारके ॥ ९८७ ॥

स्त्र्यर्थे तु पूर्वयोर्दान्ता वाच्ययोरुत्तमे पुनः ।
स्त्र्यर्थे दान्ती दमनके पुनर्दान्तौ च तन्नपि ॥ ९८८ ॥

दाक्षस्त्रिर्दक्षसम्बन्धिन्यपत्यर्थे तु स्त्रियामियम् ।
कपिलायां भवेद् दाक्षी दायस्तु त्रिषु दातरि ॥ ९८९ ॥

ना तु दाने विभक्तव्यपित्रादिद्रविणे तथा ।
अजयस्त्वाह सोल्लुण्ठभाषिते रक्षणादिषु ॥ ९९० ॥

यौतकादिधने चाथ दात्व आयुक्तके त्रिषु ।
ना यज्ञेऽन्यस्तु दाने क्लीत्याह दाकस्तु दातरि ॥ ९९१ ॥

त्रिर्द्वे तु यजमाने स्याद् दानुस्तु त्रिषु दातरि ।
द्वयोस्तु यजमाने ना त्वर्के वातेऽप्यथो नपि ॥ ९९२ ॥

पुंस्यप्यन्ये दारु काष्ठे क्ली पुनर्देवदारुणि ।
दार्वी दारुहरिद्रायां स्त्री द्विजस्तु द्वयोर्भवेत् ॥ ९९३ ॥

ब्रह्मक्षत्रियविट्स्वण्डजातेषु दशनेषु ना ।
द्विजा तु स्त्री हरेण्वाख्यगन्धद्रव्ये द्विकं पुनः ॥ ९९४ ॥

मनआत्मद्वये क्लीबं काके तु द्वे स तु त्रिषु ।
सङ्के द्विपरिमाणे स्याद् द्वाभ्यां क्रीतादिकेष्वपि ॥ ९९५ ॥

दिग्धस्तु विषलिप्तेषौ त्रिषु लिप्तप्रवृद्धयोः ।
क्ली स्यादुपचये स्नेहेऽप्याहेदं वैजयन्तिका ॥ ९९६ ॥

दिव्यं क्ली व्योम्नि लशुने गाने तन्त्रीसमुद्भवे ।
प्रत्यये च त्रि तु दिवि भवे दिष्टस्त्वनेहसि ॥ ९९७ ॥

---

१. 'ध्मा' ग. पाठः, 'घ्रा' ङ. पाठः.

ना क्ली संवदने दैवे कृतान्तेऽपि धनञ्जयः ।
दैवाद् भेदेन पठति दानभूषणयोरपि ॥ ९९८ ॥
यन्मृत्तिकाम्भसा स्नानं तत्रापि त्रि तु भाषिते ।
दत्ते च दि(ष्ट? ष्टि)स्तु पुमान् प्रमाणेऽष्टाङ्गुलेऽथ सः ॥ ९९९ ॥
स्त्री दानोक्तिसुखेषु स्यादथामित्रे द्विषत् पुमान् ।
त्रिस्तु द्वेष्टरि मर्त्ये तु द्विपाद् द्वे द्व्यङ्घ्रिके त्रिषु ॥ ६०० ॥
दीनस्तु पुंसि पुन्नागे केतक्यां च त्रिषु त्वयम् ।
दरिद्रे कृपणे क्षीणे दीर्णा तु ककुभि स्त्रियाम् ॥ ६०१ ॥
त्रिषु भिन्ने च भीते च दीर्णे दीप्ता तु विद्युति ।
स्त्रियां प्रज्वलिते तु त्रि दीप्यस्तु नरि जीरके ॥ ६०२ ॥
खराश्वासंज्ञभैषज्ये त्रि तु दीपयितव्यके ।
द्वीपोऽस्त्रियामन्तरीपसंज्ञेऽन्तर्वारिणस्तटे ॥ ६०३ ॥
जलाशयविशेषे तु द्वीपी स्त्रीति प्रचक्षते ।
दीर्घं त्रिष्वायते मात्राद्वयकालस्वरे तथा ॥ ६०४ ॥
क्ली तु स्यादुभयोः साम्नोः सर्वेष्वेवर्गगीतयोः ।
द्वीपिर्द्वे श्वापदे काले पुमान् दुग्धं तु नप्यदः ॥ ६०५ ॥
क्षीरे गवादिके तु त्रिः कृतदोहे तथैव तत् ।
पयःप्रभृतिके चाथ दुर्गं क्ली नरके वने ॥ ६०६ ॥
राष्ट्रे तु ना परे त्वाहुर्दुष्प्रापनगरे नरम् ।
अन्ये क्ली दुर्गमे तु त्रिः कात्यायन्यां तु सा स्त्रियाम् ॥ ६०७ ॥
दुर्गा द्रुणी तु कच्छप्यां स्त्री मौर्व्यां तु द्रुणाथ नप् ।
द्रुणं धनुषि दुःखं तु क्ली व्यथायामथ त्रिषु ॥ ६०८ ॥
तत्साधने द्युतिस्तु स्त्री प्रभाभिगमकान्तिषु ।
पुमांस्तु द्योततौ ना तु द्युवार्कस्वर्गराजसु ॥ ६०९ ॥

---

१. 'भा' ख. ङ. पाठः. २. 'षु' क. घ. पाठः. ३. 'तु' क. ग. घ. ङ. पाठः. ४. 'ब' ख. पाठः. ५. 'दी' क. घ. पाठः.

अभिगन्तरि तु त्रिः स्यादित्येके दूतवाक् पुनः ।
द्वे सन्देशहरे शुके तु ना दूती तु सा स्त्रियाम् ॥ ६१० ॥

सञ्चारिकायामित्येके दूष्यं तु स्थूलपूययोः ।
क्ली (तु? त्रि) दूषयितव्येऽथ दृढं क्ल्ययउशीरयोः ॥ ६११ ॥

दृढा स्त्रियामामलक्यां तमालक्यां तथौषधौ ।
तालमूलीसमाख्यायां त्रि तु स्थूलेऽधिके भृशे ॥ ६१२ ॥

बलवत्यप्यथ श्लेष्मसंज्ञे चर्मविकारके ।
नृशण्डयोरथो दृश्या स्त्री सेवायामथ त्रिषु ॥ ६१३ ॥

दर्शनीये भूषणे क्ली दृष्टं तु त्रिषु वीक्षिते ।
ज्ञाते क्लीबं तु भूपानां भये स्वपरचक्रजे ॥ ६१४ ॥

ऐहिकार्थेऽप्यथो देवः पुमान् खड्गे महीपतौ ।
नाट्योक्तिविषयक्ष्मापे चक्षुरादीन्द्रियेषु च ॥ ६१५ ॥

स्त्री तु राजकुलोद्भूतराजपत्न्यां तथा पुनः ।
महिष्यां नाट्यभाषास्थनृपतेर्मेघमूर्वयोः ॥ ६१६ ॥

गुडूचीस्पृक्कयोर्देवी सुरे तु द्वे पुमान् पुनः ।
देष्णो बाहौ द्वयोस्तु स्याद् यजमानेऽथ स त्रिषु ॥ ६१७ ॥

सुरूपे दानशीले च देवा तु नरि देवरे ।
अमौ च केचन त्वाहुः स्त्री पितृव्यस्त्रियामिति ॥ ६१८ ॥

देशी तु ना गुरौ त्रिस्तु केचिन्मार्गोपदेशके ।
स्त्री तु प्रदेशिनीनाम्न्यामङ्गुल्यां देशिनी भवेत् ॥ ६१९ ॥

द्वेषी तु निम्बवृक्षे ना द्वेषशीले तु भेद्यवत् ।
शत्रौ च दैत्यं तु क्लीबमुशीरे ना विभीतके ॥ ६२० ॥

द्वे दैतेये स्त्री तु दैत्या मुरासंज्ञकभेषजे ।
दैष्टं क्ली याज्ञिकानां स्याद् प्रोक्षण्यासादने त्रि तु ॥ ६२१ ॥

---

१. 'त' ख. २. 'दू' क. घ. पाठः.

सम्बन्धिनि स्याद् विष्टस्य दिष्टयाय विधौ नपि ।
दैवं त्रिर्दैवसम्बन्धे द्रोणा स्त्री चतुराढके ॥ १२२ ॥

दारुपात्रविशेषेऽथ काकजात्यन्तरे द्वयोः ।
अश्वत्थामस्तु ताते ना शाकस्तम्बान्तरे तथा ॥ १२३ ॥

स्त्री तु द्रोणी द्रोणपुष्पीसंज्ञस्तम्बे गिरिप्लवे ।
शैलस्य शिलयोः सन्धौ द्रवभाण्डे तथापरे ॥ १२४ ॥

आहुः काष्ठाम्बुवाहिन्यां द्रोहस्तु द्रोहणे पुमान् ।
द्रे तु विप्रखषीजाते मर्त्यजात्यन्तरे विदुः ॥ १२५ ॥

**दोषो** वातादिके दुष्टौ गुणस्य प्रतियोगिनि ।
ना दोषा तु भुजायां स्त्री स्यात् त्वाकारान्तमव्ययम् ॥ १२६ ॥

रात्रावथ रजन्यामित्यस्मिन्नर्थे परे विदुः ।
द्योतस्तु द्योतनायां ना दीप्तौ द्योता तु सा स्त्रियाम् ॥ १२७ ॥

ज्ञेया पिङ्गलकेशादिकन्यायां सुरभावपि ।
धर्मोऽस्त्री सुकृते साम्ये स्वभावे लग्नराशितः ॥ १२८ ॥

राशौ तु नवमे प्राहुर्मौहूर्ता नॄ तु सोमपे ।
न्यायाचारयमाहिंसाखड्गचापेषु राज्ञि च ॥ १२९ ॥

प्रधानशेषे सत्ये च श्रुतौ दण्डविनिर्णये ।
सतां तु सङ्गतेऽप्येनमजयः समुपादिशत् ॥ १३० ॥

ध्वजं त्वस्त्री पताकायां चिह्ने पूर्वदिशो गृहे ।
शिश्नेऽथ तालवृक्षे ना वृक्षमात्रे तु सज्जनः ॥ १३१ ॥

धन्यः पुण्यवति त्रि स्याद् धनस्य च निमित्तके ।
धन्या लताबृहत्यां स्त्री कुस्तुम्बुरुणि चाप्यथ ॥ १३२ ॥

१. 'नॄ' क. ख. घ. ङ. पाठः.

धवो ना धवने पत्यौ योषितामजयः पुनः ।
प्रभुमात्रेऽब्रवीदेनं तदसन्मूलहानितः ॥ ६३३ ॥

धुरन्धराख्यद्रौ क्ली तु तत्फले द्वे तु मानवे ।
धरो ना भूधरे तूले कार्पास्यां स्त्री पुनर्धरा ॥ ६३४ ॥

भूमीगुडूच्योर्धत्रस्तु ना वृक्षे[1]ऽर्केऽप्यथो नपि ।
गृहे नभसि सूत्रे च धत्रा तु दिवि सा स्त्रियाम् ॥ ६३५ ॥

धनुशब्द उकारान्तः प्रियालाख्यद्रुमे पुमान् ।
क्ली तु तस्य फले पापेऽप्यथ धर्ता त्रि धारके ॥ ६३६ ॥

ना तु धर्मे धन्व तु क्ली चापे व्योम्न्यथ शाश्वतः ।
स्थलेऽप्याह मरौ पुंसि ध्वजी तु ध्वजसंयुते ॥ ६३७ ॥

त्रिः शौण्डिके च ध्वजिनी सेनायां स्त्री धनी तु ना ।
कुबेरे त्रिस्तु धनवन्मात्रे वार्धुषिके तथा ॥ ६३८ ॥

धन्वी तु ना धनूराशौ धानुष्के तु भवेत् त्रिषु ।
धनुर्नृशण्डश्चापे क्ली चतुर्हस्तप्रमाणके ॥ ६३९ ॥

धाना स्त्री भूरुहां बीजे कुस्तुम्बुरुणि चाप्यसौ ।
भ्रष्टे यवे भूमनि च हर्षनन्दी त्ववोचत ॥ ६४० ॥

धाना यवानां भ्रष्टानां स्थूलचूर्ण इतीदृशम् ।
क्ली दोने धोरणे पाने धान्यं तु स्त्रीनपुंसकम् ॥ ६४१ ॥

कुस्तुम्बुरुणि सस्ये क्ली ध्वाङ्क्षस्तु बककाकयोः ।
द्वयोस्तत्रापि च स्त्र्यर्थे ध्वाङ्क्षी ध्वाङ्क्षा तु नृस्त्रियोः ॥ ६४२ ॥

स्याद् घोरवाशिते धात्रः पुनर्द्वे कितवेऽथ सा ।
धात्री स्त्र्यामलकीभूम्योरुपमातरि चाथ ना ॥ ६४३ ॥

ध्वाङ्क्षिर्ध्वाङ्क्षतिधातौ स्याद् स्त्री तु स्याद् घोरवाशिते ।
धाता तु ना विरिञ्चे त्रिः पिबे धातरि धर्तरि ॥ ६४४ ॥

---

१. 'के' ग. पाठः. २. 'मा' क. पाठः. ३. 'वा' ग. पाठः.

धिष्ण्यस्तु याज्ञिकानां ना वह्निभेदेषु केषुचित् ।
तेषां स्थानेषु चान्ये तु वह्निमात्रे प्रचक्षते ॥ ६४५ ॥

शुक्राङ्गारकयोः क्ली तु नक्षत्रे स्थानगेहयोः ।
अजयस्तु बलेऽप्येतत् स्वनिघण्टावचीकृतत् ॥ ६४६ ॥

आसनेऽथ स्त्रियां धिष्ण्या स्यादुल्कायामथो पुमान् ।
धीरोऽब्धौ मन्थरे तु त्रिर्धृतिमद्विदुषोरपि ॥ ६४७ ॥

स्त्री तु धीरा गुडूच्यां स्याद् धीवा व्याधौ पुमान् द्वयोः ।
मत्स्ये कश्चित् तु देवे द्वे त्रि तु कर्मकरे स्त्रियाम् ॥ ६४८ ॥

धीवरीत्याह ना तु स्याद् ध्रुवः शम्भुविरिञ्चयोः ।
औत्तानपादौ कीलेऽथ त्रिर्नित्ये निश्चले स्फुटे ॥ ६४९ ॥

ध्रुवा तु स्त्री सालपर्ण्यां गीतिस्रुग्भेदयोर्भुवि ।
धूर्त्तः पुंसि महादेवे नीपे कुरवकेऽपि च ॥ ६५० ॥

धुर्धूरे च प्रसूने तु क्लीबमेषां महीरुहाम् ।
अयोमयेऽपि पत्राङ्गे भेद्यलिङ्गं तु वञ्चके ॥ ६५१ ॥

धूको व्याधौ नरीत्येके कामिलायां तु केचन ।
धूका स्त्रीत्यभ्यधुर्धृष्टिर्धर्षणे स्त्री पुमांस्त्वयम् ॥ ६५२ ॥

रश्मौ धृ(षु?ष्णु)*र्ना सन्तापे शैले चोरे[2] तु स त्रिषु ।
प्रगल्भे वैजयन्त्यां तु धृष्टे चेत्याह ना पुनः ॥ ६५३ ॥

धृत्वा विष्णौ गिरावब्धौ यतिनि स्त्री तु धृत्वरी ।
भूमौ धेनुस्तु हस्तिन्यां नवसूतगवीगिरोः ॥ ६५४ ॥

स्त्री क्ली तु सामभेदे स्याद् धोतस्तु नरि मारुते ।
शठे तु त्रिर्नटः पुंसि टुण्डु[3]वृक्षे द्वयोः पुनः ॥ ६५५ ॥

---

१. 'करत्' ग. पाठः. २. 'पा' ङ. पाठः. ३. 'डु' ख., ङ. पाठः.

---

* 'धृष्णुर्धृष्टे प्रगल्भे च' (पु. २२८. श्लो. ९) इति वैजयन्ती ।

शैलकिनि नटी तु स्त्री स्याद् विद्रुमलताह्वये ।
भैषज्य इति कोऽप्याह परे त्वेतदसाध्विति ॥ ६५६ ॥

तृतीयवर्गोपान्त्यत्वात् तस्येत्याहुर्नडी हि सा ।
नडः पुंस्यृषिभेदेऽथ नृशण्डो धमनाह्वये ॥ ६५७ ॥

स्तम्बे व्रात्यात् क्षत्रपूर्वक्षत्रियाजे नरे द्वयोः ।
नडी तु विद्रुमलतासंज्ञे स्याद् भेषजे स्त्रियाम् ॥ ६५८ ॥

नदो नामरदत्तेन शब्दे ख्यातः सरस्वति ।
स्तोतर्यपि नदी तु स्त्री निम्नगायां नतं पुनः ॥ ६५९ ॥

वक्रे नमस्कृते च त्रिर्बन्धुरेऽप्यथ तन्नपि ।
अगुरौ तगरे* चैव गन्धद्रव्यप्रभेदयोः ॥ ६६० ॥

नैमनेऽप्यथ नन्दा स्त्री स्नुहिसंज्ञमहीरुहे ।
तिथिषु प्रतिपत्षष्ठ्योरेकादश्यां तिसृष्वपि ॥ ६६१ ॥

पार्वत्यां चाथ ना पूर्वराजभेदेषु केषुचित् ।
गोपालाधिपभेदेऽपि नन्दनाख्ये तु कर्मणि ॥ ६६२ ॥

नृस्त्रियोरथ नग्नः स्यात् पुंसि वैतालिकादिषु ।
दिगम्बरे तु त्रिः शास्त्रप्रोक्ताभिरहिते तथा ॥ ६६३ ॥

नरः पुंस्यर्जुने विष्णोरवतारान्तरे नये ।
मनुष्यजातौ तु द्वे स्यात् स्त्र्यर्थे नारीति तत्र च ॥ ६६४ ॥

नपुंसकं तु सलिले नखरे तु नखोऽस्त्रियाम् ।
क्ली तु शुक्त्याख्यभैषज्ये नक्रस्तु ग्राहसंज्ञके ॥ ६६५ ॥

द्वयोर्जलचरे प्राह शाकटायन इत्यमुम् ।
ग्राहादन्यत्र कुम्भीरेऽमरसिंहादयोऽभ्यधुः ॥ ६६६ ॥

१. 'द' क घ. ङ. पाठः, 'ग' ग. पाठः.

* 'नन्द्यावर्ते तु तगरः' (पु. ६१, श्लो. १९५) इति वैजयन्ती ।

**नवस्तु** ना स्तुतौ त्रिस्तु नवीने स्त्री तु सा नवा ।
कार्पासीसंज्ञके गुल्मे **नष्टस्तु** त्रिस्तिरोहिते ॥ ६६७ ॥

पलायिते मृते चाथ नष्टा स्त्री स्पृष्टमैथुना ।
या कन्यका भवेत् तस्यां **नान्दिस्तु** स्त्री सुखे तथा ॥ ६६८ ॥

भेरीसंज्ञकवाद्येऽथ देवदेवस्य शूलिनः ।
प्रतीहारे नृलिङ्गः स्याद् धातावपि च नन्दतौ ॥ ६६९ ॥

**न्यङ्कु**र्गुरुकुलेवासिशिष्ये मुन्यन्तरे च ना ।
मृगभेदे द्वयो**र्नप्ता** पुनर्दौहित्रपौत्रयोः ॥ ६७० ॥

पौत्रपुत्रेऽपि च द्वे स्याद् द्वेऽपत्ये तदनन्तरे ।
**नपादेष** तकारान्तः सर्पे दान्तं नपाद्ध्वनिम् ॥ ६७१ ॥

प्रमादात् सज्जनो दृष्ट्वा सर्पेऽपत्येऽभ्यभाषत ।
**नन्दी** नन्दीश्वरे माषे नाख्यनान्द्याश्च पाठके ॥ ६७२ ॥

ना नन्दिनी तु स्त्री गौर्यां हरीतक्यां ननान्दरि ।
सूक्ष्मैलायामयोध्यायां प्रशस्ते वास्तुभूतले ॥ ६७३ ॥

**नभः** (क्लीबाश्रयोः स्वर्गे[1] स्वर्गाश्रयोः क्लीबं) सूर्ये वारिणि चाथ तत्
नभसी इति तु द्यावापृथिव्योरास्त्रियां पुनः ॥ ६७४ ॥

श्रावणे मासि वर्षास्वप्यजयस्तु पठत्यमुम् ।
वृद्धेऽपि त्रिषु तत्र स्यादथ **नाको** नृलिङ्गकः ॥ ६७५ ॥

सूर्येऽन्तरिक्षे तु स्वर्गेऽप्येनं केचिन्नृशण्डयोः ।
पुत्रयोस्तु द्वयो**र्नागः** पुनर्ना नागकेसरे ॥ ६७६ ॥

मेघे च नागदन्त्यां च नागवल्ल्यां च कश्चन ।
अस्त्री तु वङ्गे सीसे च द्वे तु ग्राहाख्ययादसि ॥ ६७७ ॥

गजे सर्पे त्रि तु स्थूले तस्मिंस्त्वर्थे स्त्रियां यदा ।
तदा नागीति ङीषि स्यान्नाथस्त्विन्द्रे पुमांस्त्रि तु ॥ ६७८ ॥

१. 'स' क. ख. घ. ङ. पाठः.   २. 'बु' ङ. पाठः.

प्रभौ स्त्रीपुंसयोस्तु स्याद् याच्ञैश्वर्यादिकेष्वयम् ।
नाली त्रयी धान्यकाण्डे नाला चाब्जादिदण्डके ॥ ६७९ ॥

क्ली तु रन्ध्रे च शेफे च नादो ना स्तोतरि ध्वनौ ।
नदसम्बन्धिनि त्रिः स्यान्नाद्यं घोषाख्यलोहके ॥ ६८० ॥

नृत्ते तौर्यत्रिके च क्ली त्रि तु नाटयितव्यके ।
नारं क्ली भारताद् वर्षाद् दक्षिणे प्रतिजानके ॥ ६८१ ॥

कस्मिंश्चिदन्तरद्वीपे[1] त्रि तु स्यान्नरयोगिनि ।
नारीति योषित्तिन्त्रिण्योः स्त्री स्याल्लिङ्गं त्वनिश्चितम् ॥ ६८२ ॥

आपो नारा इति प्रोक्ता इत्यत्राथान्यलिङ्गकः ।
नायो नेतरि ना त्वेष प्रापणे स्त्री त्वथो दिशि ॥ ६८३ ॥

नायी नाभिस्तु जन्त्वङ्गे यस्य संज्ञा प्रतारिका ।
रथचक्रस्य मध्यस्थपिण्डिकायां च ना पुनः ॥ ६८४ ॥

आद्यक्षत्रियभेदेऽन्त्यमनौ[2] मुख्यमहीपतौ ।
वर्षे तु भारते क्लीबं नाम तु क्लीबमम्भसि ॥ ६८५ ॥

अस्त्री तु प्रातिपदिके संज्ञायां चाव्ययं पुनः ।
प्राकाश्योपगमादीनामर्थानां द्योतकं विदुः ॥ ६८६ ॥

निष्कोऽस्त्री हेम्नि दीनारे साष्टकर्षशते पले ।
अजयः शाश्वतश्चैनं हेम्न एव पलेऽपठीत् ॥ ६८७ ॥

वक्षोभूषान्तरे कर्षे सज्जनस्तु रहस्यपि ।
त्रि तु निर्गतकाद्येषु[3] निजं तु त्रिः सनातने ॥ ६८८ ॥

आत्मीये च स्वभावे तु क्ली पुंसि त्वात्मनि स्मृतम् ।
निभं तु स्यान्नपि व्याजे तत् तूत्तरपदं त्रिषु ॥ ६८९ ॥

सदृशे निष्ठ्यशब्दस्तु मर्त्यजात्यन्तरे द्वयोः ।
अन्त्यीशबरजे निष्ट्या पुनः स्वातौ स्त्रियामथ ॥ ६९० ॥

---

१. 'रे' क. ख. ङ. पाठः. २. 'मु' क. ग. ङ. पाठः. ३. 'न्ये' क. पाठः.

**नीली** स्त्र्योषधिभेदे स्यात् कालीसंज्ञे पुमांस्तु सः ।
कार्ष्ण्ये शौक्ल्ये च गुणयोस्त्रि तु तद्वति तत्र च ॥ ६९१ ॥

स्त्र्यर्थे नीलैव वस्त्रे स्याद् संज्ञायां तु द्वयं भवेत् ।
नीला नीली च नील्येव प्राणिनि स्यादथो पुमान् ॥ ६९२ ॥

**नीचः** शनैश्चरे नीचैःस्वरे च त्रि तु तद्वति ।
वामने च निकृष्टे च **नीडं** त्वस्त्री कुलायके ॥ ६९३ ॥

गृहे[1] च **नीथ**[2]शब्दस्तु पूर्वराजे कचिन्नरि ।
द्वे ब्राह्मणे धर्मशीले पुनस्त्रिरथ **नीक**[3]वाक् ॥ ६९४ ॥

द्वे ज्ञातौ च खगे[4] चाथ **न्युब्जो** भव्याह्वये तरौ ।
ना तत्फले तु क्ली त्रिस्तु कुब्जेऽधोमुख एव च ॥ ६९५ ॥

वैजयन्त्यां तु ना व्याधावित्युक्तं ***न्यूङ्ख**वाक् पुनः ।
षट्स्वोङ्कारेषु ना त्रिस्तु सुन्दरेऽथाजयोऽवदत् ॥ ६९६ ॥

अतिप्रिये द्वयोस्तु स्तः सूतमागधयोः पृथक् ।
**नूधा** (नूधाश्च स? **अनूधाश्च**) प्रोक्तौ सकारान्तौ मनीषिभिः ॥ ६९७ ॥

**नेत्रं** नाड्यां तरोर्मूले वस्त्रे दृशि मथो गुणे ।
क्ली पुंसि चान्ये **नेप**स्तु नये वृक्षे पुरोहिते ॥ ६९८ ॥

ना त्रिस्तु भृतके **नेम**स्त्वन्ने वज्रे पुरोहिते ।
अर्धे च ना त्रिः सदृशे समीपे चाथ खे[5] नपि ॥ ६९९ ॥

**नेत्वं** द्यावापृथिव्योश्च पुमांस्तु शशलाञ्छने ।
**नेता** भव्यतरौ पुंसि तत्फले क्ली त्रि सारथौ ॥ ७०० ॥

---

१. 'की' ङ. पाठः. २. 'ड' क. ग. घ. पाठः. ३. 'च' ङ. पाठः. ४. 'ह्रे' ख. पाठः. ५. 'केनचित्' ङ. पाठः.

* 'न्युङ्खः सम्यङ्मनोज्ञे च साम्नः षट्प्रणवेऽपि च' इति तु मेदिनी

नीतिक्रियाकर्त्तरि च प्रभौ चाथ नृशण्डयोः ।
पद्मं सरोरुहे क्लीबं सङ्ख्याभेदे तथेन्द्रिये ॥ ७०१ ॥

गजबिन्दुष्वष्टकायां नागराजान्तरे तु ना ।
निधिभेदे व्यूहभेदे वर्णे पीतसितासिते ॥ ७०२ ॥

त्रि तु तद्वति पद्मा तु लक्ष्मीभार्ग्योः स्त्रियामियम् ।
तथैव पद्मचारिण्यां कश्चित् त्वाहाप्यविश्रुतम् ॥ ७०३ ॥

स्याद् पद्मनालिकायामित्यथ सामान्तरे प्लवः ।
उडुपे प्लवने मेघे जलपूरेऽप्यथ द्वयोः ॥ ७०४ ॥

चण्डाले मर्कटे भेके पक्षिजात्यन्तरे तथा ।
यस्याख्या शर्कटबिल* इत्यथ स्यात् त्रि[3] पक्षिषु ॥ ७०५ ॥

श्वेतवारलपर्यन्तहंससारसकादिषु ।
सौश्रुतोक्तेषु कैवर्तीमुस्तके तु नपुंसकम् ॥ ७०६ ॥

परं प्रकृष्टे द्विषति पूर्वार्वाक्प्रतियोगिनोः ।
अन्यस्मिन् केवले दूरे त्रिषु ना परमात्मनि ॥ ७०७ ॥

शण्डः परार्धसंज्ञायाः सङ्ख्याया द्विगुणात्मनि ।
सङ्ख्यायां वैजयन्ती तु तत्सङ्ख्येयेषु वस्तुषु ॥ ७०८ ॥

वा त्रिष्वित्याह पथ्यं तु त्र्यनपेते पथो हिते ।
यागाङ्गेषु च नित्येषु विष्टुत्यादिषु मन्वते ॥ ७०९ ॥

ऋक्सामेषु तथा दाशरात्रिकेष्वथ सा स्त्रियाम् ।
जातिच्छन्दोविशेषेऽस्य स्यादार्याख्यस्य चान्तरे ॥ ७१० ॥

गणेषु त्रिषु यस्यादावर्धयोर्दृश्यते यतिः ।
बृहतीच्छन्दसो भेदे यस्य स्याद् द्वादशाक्षरम् ॥ ७११ ॥

१. 'द्मः' ख. ग. पाठः. २. 'कबि' ग. पाठः. ३. 'त्रिषु' ग. पाठः.

* दात्यूहश्चाथ शकटाबिले प्लवपरिप्लवौ (पु. २७. श्लो. १२) इति तु वैजयन्ती ।

उपोत्तमं पदं पादास्त्वयोऽन्येऽष्टाक्षराः स्मृताः ।
हरीतक्यां च पथ्याथो गायत्र्यादिषु सप्तसु ॥ ७१२ ॥

छन्दस्सु नप्यथो पद्या स्त्री मार्गे वृषले द्वयोः ।
क्ली पादबद्धग्रन्थे[1] स्यात् त्रिः पद्यं पदसाधुनि ॥ ७१३ ॥

पदाङ्कयोग्यदेशे च यच्चाकरणकं स्वयम् ।
पादस्य वेधकं तत्र शर्करादावथो नपि ॥ ७१४ ॥

पत्रं पुंस्यपि चान्येषां पक्षिपक्षे तरुच्छदे ।
वाहने छुरिकायां च पर्णं तु क्ली तरुच्छदे ॥ ७१५ ॥

पलाशवृक्षप्रसवे पलाशाख्यतरौ तु ना ।
पलं नृशण्डयोर्मांसे मानेऽप्यक्षचतुष्टये ॥ ७१६ ॥

प्रस्थोऽस्त्री गिरिसानौ च कुडुबानां चतुष्टये ।
प्रज्ञा बुद्धौ स्त्रियां त्रिस्तु विदुषि प्रश्नवाक् पुनः ॥ ७१७ ॥

त्रि पुराणे छन्दासि तु क्लीबं पञ्चाशदक्षरे ।
पङ्कोऽस्त्री कर्दमे पापे पण्डा स्त्रीपुंसयोर्गतौ ॥ ७१८ ॥

तत्त्वबुद्धौ स्त्रियामेव पुमानेव नपुंसके ।
पक्कं तु क्वथिते नाशोन्मुखे परिणते त्रिषु ॥ ७१९ ॥

अजयस्तु खलेऽप्याह तस्यार्थश्चिन्त्यतां बुधैः ।
क्लीबं तु पचने विद्याच्छृतक्षीरे[2]जदध्नि च ॥ ७२० ॥

पटस्तु वस्त्रे केचित् तु सुवस्त्रे पुन्नपुंसकम् ।
पटी तु स्त्री विशिष्टे स्यात् पटे प्रावरणात्मके ॥ ७२१ ॥

इति काश्चित् प्रियालाख्यतरौ ना क्ली तु तत्फले ।
पच्छः शिलायां ना त्रिस्तु पादपीठेन गन्तरि ॥ ७२२ ॥

---

१, 'न्यः' क. ख. घ. ङ. पाठः. २. 'रे च द' ग. पाठः.

पार्ष्टिसंज्ञे[1] तु पच्छी स्त्री भवेद् वारुटकान्तरे ।
पन्नं स्कन्ने त्रिषु क्ली तु जिह्वायां पद्रवाक् पुनः ॥ ७२३ ॥
पुंसि ग्रामनिवेशे त्रिः शून्ये पर्वस्तु ना हरे ।
इक्ष्वादीनां तु काण्डस्थग्रन्थिमध्ये नपुंसकम् ॥ ७२४ ॥
पर्विः[2] काके द्वयोर्हिंस्रे पुनस्त्रिषु पतिस्तु ना ।
पाणिग्राहे च पततिधातौ चाथाजयोऽब्रवीत् ॥ ७२५ ॥
गतौ मूलेऽप्यथो पत्नी भार्यायां स्त्री त्रि तु प्रभौ ।
वृद्धादिस्तु पतिर्यस्यास्तत्रान्यार्थसमासके ॥ ७२६ ॥
वृद्धपत्नी वृद्धपतिरित्याद्यं रूपमुन्नयेत् ।
ग्रामादेश्च यदा[3] स्त्र्यर्थः स्वामित्वेन विवक्ष्यते ॥ ७२७ ॥
ग्रामपत्नी ग्रामपतिरित्याद्यं तत्र च द्विधा ।
पत्तिः पुनः स्त्रियां ज्ञेया पतने पदनेऽपि च ॥ ७२८ ॥
एकेभैकरथत्र्यश्वपञ्चपद्गबले तथा ।
लेपेन कृतलेखायां बाह्वादौ पतिके[4] तु ना ॥ ७२९ ॥
पठिस्तु विदुषि त्रिः स्यान्ना तु वेदस्य पाठके ।
स्त्रियां फैलकिकायां[5] स्यादल्पायां युद्धकारिणाम् ॥ ७३० ॥
पचिस्तु नाग्नौ पचतौ बुभुक्षायां तु सा स्त्रियाम् ।
पणिस्तु वणिजि त्रि स्याद् धातौ ना पणनार्थके ॥ ७३१ ॥
पपीस्तु सूर्ये रश्मौ च ना हस्तिनि तु स द्वयोः ।
पटुः पुंसि पटोल्याख्यवल्लीजातौ रसान्तरे ॥ ७३२ ॥
लवणाख्ये तद्वति तु त्रिषु निर्व्याधिशूरयोः ।
अमन्ददक्षयोश्चान्ये विशदप्रज्ञ ऊचिरे ॥ ७३३ ॥
अन्यो विस्पष्ट आचष्टे ब्रूते त्वजयशाब्दिकः ।
तीक्ष्णे च निस्त्वरे चैषु यदा स्त्र्यर्थेऽस्य वर्तनम् ॥ ७३४ ॥

---

१. 'ष्टी' ख. पाठः, 'ष्णि' ग. पाठः. २. 'ल्मिः' क. घ. पाठः. ३. 'दात्यर्थे स्वा' क. घ. पाठः. ४. 'दि' ख. ङ. पाठः. ५. 'पलह्निका' ख. ङ. पाठः.

तदा पट्वी पटुरिति क्ली तु स्याल्लवणद्वये ।
ऊषाख्ये सैन्धवाख्ये चेत्येवं नानाब्रुवन् बुधाः ॥ ७३५ ॥

**प्रत्यक्** प्रतीच्येऽभिमुखे प्रतीच्यभिमुखे त्रिषु ।
देशे पुंसि प्रतीची तु पश्चिमायां दिशि स्त्रियाम् ॥ ७३६ ॥

प्रथमापञ्चमीसप्तम्यर्थेष्वेषोऽपि वाव्ययम् ।
**पर्व** सर्वेऽपि चाचार्याः क्लीबमन्ये समामनन् ॥ ७३७ ॥

भाष्यकारस्तु भगवान् योगसूत्रे प्रयुक्तवान् ।
गुणपर्वाणि इत्येवं षष्ठीतत्पुरुषे नरम् ॥ ७३८ ॥

विषुवादाववसरे पञ्चदश्यां तथोत्सवे ।
प्रतिपत्पञ्चदश्योश्च सन्धौ ग्रन्थिद्वयान्तरे ॥ ७३९ ॥

इक्षुवेण्वादिदण्डानां ग्रन्थौ त्वेवेति केचन ।
**पट्वा** वत्से द्वयोः पुंसि त्वन्ये[1] गत्यवमानयोः ॥ ७४० ॥

**पत्री** पुंसि शरे द्वे तु श्येने सर्वखगेष्वपि ।
पत्रिणी तु स्त्रियां पत्न्याः कनिष्ठस्वसरि स्मृता ॥ ७४१ ॥

**पत्रं** तु (यत्रे[2] यस्यापि?) तत्र[3] स्याद् भेद्यलिङ्गकम् ।
**पद्मी** द्वयोर्गजे पद्मवति तु त्रिः स्त्रियां पुनः ॥ ७४२ ॥

पद्मिनी सरसीलक्ष्म्योः पद्मस्तम्बेऽथ **पक्षिवाक्** ।
द्वे खगे पण्डिते तु त्रिः पक्षवत्यथ पक्षिणी ॥ ७४३ ॥

पक्षाभ्यामिव याहोभ्यां रात्रिर्युक्तात्र सा स्त्रियाम् ।
**प्राणास्तु** पुंस्यसुष्वेके त्वस्मिन्नर्थे प्रचक्षते ॥ ७४४ ॥

बहुत्वमस्याथ बले वायुवायुविशेषयोः ।
द्वन्द्वानां प्रथमे साम्नि चक्षुरादीन्द्रियेषु च ॥ ७४५ ॥

शशाख्यभेषजेऽर्थे त्रिः पूर्णे क्लीबं तु पूरणे ।
त्रयी तु भाजने **पात्री** क्ली तु योग्ये[4] स्रुगादिके ॥ ७४६ ॥

---

१. 'न्यो' क. घ. पाठः. २. 'स्य' ङ. पाठः. ३. 'य' क. ख. घ. ङ. पाठः. ४. 'तु' क. ख. घ. ङ. पाठः.

आढके पण्डिते वित्ते नद्याः कूलद्वयान्तरे।
प्रधानाङ्गे च सुगुणे **पार**स्तु नरि पारणे ॥ ७४७ ॥

क्ली नद्यादेः परे तीरे घटीसंज्ञे तु गोदुहाम्।
दोहपात्रे स्त्रियां पारी **पाल**स्तु त्रिषु पालके ॥ ७४८ ॥

ना त्राणे जडकन्यायां पुनः पाली स्त्रियामियम्।
अस्त्री द्रोणाह्वये दारुपात्रे **पाक**स्तु पर्वते ॥ ७४९ ॥

पक्तौ परिणतौ दैत्यभेदे सूर्ये तरोः फले।
करमर्दतरौ पुंसि तत्फले तु नपुंसकम् ॥ ७५० ॥

शिशौ द्वे त्रिः प्रशस्येऽथ **पातं** त्रिस्त्रातशुष्कयोः।
ना तु राहौ च पतने क्ली तु त्राणे च शोषणे ॥ ७५१ ॥

**पाप**स्तु कुत्सिते क्रूरे त्रिषु क्लीबं तु दुष्कृते।
विभीतकफले चाथ विभीतकतरौ पुमान् ॥ ७५२ ॥

**पाशो** ना पाशनायां सुब्धातोः पाशयतेर्घञि।
रज्ज्वादिप्रान्तविन्यस्तग्रन्थिभेदे तथा पुनः ॥ ७५३ ॥

मृगपक्ष्यादिबन्धार्थयन्त्रभेदे च तत्कृते।
अन्ये त्वाहुः परः कर्णात् सुकर्णे केशतश्चये ॥ ७५४ ॥

स्त्री तु केशाच्छिखायां स्यात् केशपाशिन्यथ त्रिषु।
याप्ये प्रत्ययसंज्ञः स स्वार्थिको निहतस्वरः ॥ ७५५ ॥

**पाठो** ना पठने स्त्री तु प्राचीनाख्यलतान्तरे।
पाठा **पार्श्वं** तु न स्त्री स्यात् पर्शुवृन्दात्मके तनोः ॥ ७५६ ॥

कक्षाधोवयवे किञ्च वक्रोपायेऽन्तिकेऽथ ना।
आर्हतानां तीर्थकरभेदे पा(र्श्वौ? र्श्व्यौ) तु ते स्त्रियौ ॥ ७५७ ॥

द्यावापृथिव्योः **पानं** तु त्राणशोषणयोर्नपि।
पीतौ च ना तु निःश्वासवायौ **प्रायः** पुनः पुमान् ॥ ७५८ ॥

१. 'तौ' ग. पाठः. २ 'तौ घ' ग. पाठः.

बाहुल्येऽप्यशनत्यागे मृतौ प्रगमने तथा ।
बाल्यादिवयसि त्रिस्तु तुल्येऽर्थे प्राच्यवाक् पुनः ॥७५९॥
प्राग्दक्षिणे शरावत्या देशे ना प्राग्भवे त्रिषु ।
**पाक्यं** तु त्रिपु पक्तव्ये क्लीबं तु विडसंज्ञके ॥७६०॥
लवणे भूमिलवणसंज्ञे च लवणेऽथ नप् ।
**प्राध्वं** स्याद् दूरमार्गे च बन्धने चेति मन्वते ॥७६१॥
प्रवणे तु त्रिरित्येवं केचिदन्ये तु मन्वते ।
आनुकूल्यार्थकं प्राध्वमव्ययं चेत्यथ स्त्रियाम् ॥७६२॥
**पार्ष्णिरुन्मत्तनायां** स्यात् पादग्रन्थेरधोऽपि च ।
पुमांस्तु पृतनाकक्ष्यां पाण्डुस्तु नरि राजनि ॥७६३॥
धृतराष्ट्रानुजे पाण्ड्यदेशराजान्तरेऽपि च ।
शालिजात्यन्तरे रोगभेदे खर्जूरपादपे ॥७६४॥
वर्णभेदे तद्वति तु त्रिः खर्जूरफले तु नप् ।
**पातुः** पुंसि विरिञ्चेऽन्यस्त्वाह रक्षितरि त्रिपु ॥७६५॥
**प्रावी** तु पक्षिमृगयोर्द्वयोरथ नपुंसकम् ।
**पाथिर्ज्योतिषि** नद्यां च स्वर्गे चन्द्रेऽप्यथास्त्रियाम् ॥७६६॥
सूर्ये **प्रियस्तु** करुणसंज्ञवृक्षे धवे त्रि तु ।
वल्लभे सुन्दरे स्त्री तु प्रियाभीप्सितयोषिति ॥७६७॥
**पिङ्गो** मण्डलिसर्पाणां प्रभेदे महिषे द्वयोः ।
ना पिशङ्गाह्वये वर्णे ऋषिभेदे च सर्षपे ॥७६८॥
पिशङ्गवर्णयुक्ते तु त्रि स्त्रियां पिङ्गलाह्वये ।
**पिङ्गा** पक्ष्यन्तरे भ्रमरीतिसंज्ञे च लोहके ॥७६९॥
**पिण्डो** गुडेरके† पुंसि सङ्घाताजीवयोरपि ।
अजयस्तु निवापेऽपि शब्दवित् प्राब्रवीदमुम् ॥७७०॥

१. 'र्थेऽर्थे' क. घ. ङ. पाठः २. 'ल्पे' ख ग. पाठः. ३. 'दिदम्' ग. पाठः.

† 'पिण्डो गुडेरकः । गण्डोरश्च गडोलश्च' (पु. १६७. श्लो. १०१) इति तु वैजयन्ती ।

पुङ्गले बोलसंज्ञे च भेषजे वपुषि त्वमुम् ।
पुमांसं कश्चिदाह स्म शण्डं पिण्डी त्वियं स्त्रियाम् ॥ ७७१ ॥

भक्तपिण्डे देवपीठेऽप्यथ रोमपुटे **पिटः** ।
कण्डोले च पुमान् क्ली तुच्छदिषेोऽवयवान्तरे ॥ ७७२ ॥

पिटाटिकाह्वये **पिच्छा** पुनः शल्मलिवेष्टके ।
यवाग्वामोदनोद्भूतमण्डे प्राह तु सज्जनः ॥ ७७३ ॥

सर्वपिच्छिलमण्डेषु पक्षिपक्षे तु नप्यदः ।
पिच्छस्तु गुणभेदे स्याद् यद्वान् पिच्छिल उच्यते ॥ ७७४ ॥

शाकटायन इत्याह **पि**ञ्**या** पुनरियं स्त्रियाम् ।
पौर्णमास्यां त्रि तु पितृदैवते पितुरागते ॥ ७७५ ॥

पितृसाध्वादिके चाथ पत्तुं पतितुमेष्टरि ।
**पित्सं** त्रिर्विहगे तु द्वे **पीत**स्तु नरि गन्धके ॥ ७७६ ॥

हरिद्रावर्णसदृशे वर्णे तद्वति तु त्रिषु ।
पिबतेः पीयतेश्चापि क्रियायाः कर्मतां गते ॥ ७७७ ॥

क्ली तु पीतिक्रियायां स्याद् हरिद्रायां तु सा स्त्रियाम् ।
पीताथ **पीथ**शब्दस्तु क्लीबं क्षीरे जलेऽपि च ॥ ७७८ ॥

बालपेयघृते तु स्यादन्ये तु नवनीतके ।
अग्नौ च **पीति**स्त्वश्वे द्वे क्रियायां पिबतेः स्त्रियाम् ॥ ७७९ ॥

**पीतु**र्ना भास्करे बालघृतपानार्थभाजने ।
चक्षुषि द्वे तु विहगे **पीलु**स्तु नरि पादपे ॥ ७८० ॥

ज्ञेयो गुडफलाभिख्ये काण्डे पुष्पेऽथ सज्जनः ।
वृक्षे कट्फलनाम्न्याह ब्रूते त्वजयशाब्दिकः ॥ ७८१ ॥

फालास्थिखण्डकेऽप्येनं द्वे त्विभे **पीयुवाक्** तु ना ।
आदित्ये किरणे काले स्यादुलूके तु स द्वयोः ॥ ७८२ ॥

१. 'द्व' ग. पाठः. २. 'त्रा' क. ख. घ. ङ. पाठः.

पुष्यस्तु ना कलियुगे नक्षत्रे तिष्यनामनि ।
तद्युक्ते कालसामान्ये त्रिस्तु जातेऽत्र नप् पुनः ॥ ७८३ ॥

वैरूपाष्टकवर्गस्य स्यादन्त्ये साम्नि तत् तथा ।
कूश्माण्डस्य फले पुण्यं पुनः क्ली जलपुष्पयोः ॥ ७८४ ॥

व्योम्नि हेम्नि तथा धर्मे[1] (व्रु ? व्र)ते च शुभकर्मणि ।
गङ्गार्घ्ययोस्तु पुण्या स्त्री मनोज्ञे तु त्रि पावने ॥ ७८५ ॥

अजयस्तु मनोज्ञात् तं भेदेनाह मनोहरे ।
पुण्ड्रं तु तिलके न स्त्री पुमानिक्ष्वन्तरे क्रिमौ ॥ ७८६ ॥

पुष्पगुल्मेऽतिमुक्ताख्ये नीवृद्भेदे तु भूम्नि च ।
वरेन्द्रीसंज्ञकेऽथ स्याद् धवलायां गवि स्त्रियाम् ॥ ७८७ ॥

पुण्ड्रा पुष्पं तु कुसुमे क्लीबमन्ये तु पुंस्यपि ।
आर्तवे योषितां ना तु विकासे स्त्री तु पुष्प्यसौ ॥ ७८८ ॥

भेषजे तु बलाख्येऽथ कर्तरीनाम्नि पत्रिणाम्[2] ।
स्यात् पुङ्खोऽवयवे पुंसि श्येनपक्षिणि तु द्वयोः ॥ ७८९ ॥

पुत्रस्तु तनये पुंसि पुत्री दुहितरि स्त्रियाम् ।
पुटी[3] त्रयी करण्ड्यां क्ली नगरे ना समुद्गके ॥ ७९० ॥

द्वे नृजात्यन्तरे शूद्रकवटीजे प्लुतं पुनः ।
प्लवने क्लीबमश्वस्य गतिभेदेऽप्यथ त्रिषु ॥ ७९१ ॥

तद्वत्यश्वे त्रिमात्रे च वर्णे सिक्तेऽप्यथास्त्रियाम् ।
पुस्तो लेख्ये क्लि लेप्यादिकर्मणि द्वे तु पुल्कवाक् ॥ ७९२ ॥

दर्वीकराख्यभुजगभेदे[4] कीटकृमिष्वपि ।
कीटेषु च पुरं तु क्ली पुंस्यन्ये गेहदेहयोः ॥ ७९३ ॥

---

१. 'न्ये तद्धर्मे च' ग. पाठः. २. 'णः' क. ग. घ. ङ. पाठः. ३. 'टिस्त्र' ख. ङ. पाठः. ४. 'भेदे कृ' ख. ङ. पाठः.

ध्यामाख्यभेषजस्तम्बे सर्वतोभद्रकादिषु ।
शैवागमप्रसिद्धेषु मण्डलेष्वपि ना तु सः ॥ ७९४ ॥

गुग्गुलौ नगरे त्वेषा पुरी लिङ्गत्रये द्वयोः ।
मर्त्यजात्यन्तरे शूद्रमहिषीजेऽथ केचन ॥ ७९५ ॥

आहुः पुरिमिकारान्तामपि स्त्री नगरे बुधाः ।
कश्चित् तु पुंसि राश्याह ना तु शैलान्तरे पुरुः ॥ ७९६ ॥

गङ्गाद्वारप्रदेशस्थे मनुष्ये तु द्वयोरयम् ।
महति त्रिषु नैरुक्ताः पुनर्बहुषु मन्वते ॥ ७९७ ॥

पूर्वा स्त्रियामिन्द्रदिशि त्व्यपरप्रतियोगिनि ।
दिग्देशकालविषयेष्वग्रप्रथमयोरपि ॥ ७९८ ॥

पुराणे पुंबहुत्वे तु पूर्वजेष्वेष वर्तते ।
पितामहादिष्वथ ना पूज्यः स्याच्छ्वशुरे त्रि तु ॥ ७९९ ॥

पूजनीयेऽथ पूरो ना नद्याः सलिलबृंहणे ।
पुनर्नवायां नृस्त्री तु पूर्तौ पूरी तु सा स्त्रियाम् ॥ ८०० ॥

वंशवाद्येऽथ पूर्तं क्ली खातादौ पुण्यकर्मणि ।
त्रि तु पूर्णे रक्षिते च पूर्णं तु सलिले नपि ॥ ८०१ ॥

पूर्तौ च पौर्णमास्यां तु पूर्णा स्त्री स्यात् तिथिष्वपि ।
पञ्चमीदशमीपञ्चदशीषु तिसृषु त्रि तु ॥ ८०२ ॥

पूरिते च समग्रे च प्रवदन्ति मनीषिणः ।
आकर्णकर्षणे चेषोः पूगस्तु निवहे पुमान् ॥ ८०३ ॥

क्रमुकेऽद्रौ च केचित् तु पूगीमर्थेऽत्र मन्वते ।
स्त्रियां तस्य फले क्लीबं पूषस्तु नरि पादपे ॥ ८०४ ॥

ब्रह्मदारुसमाख्येऽथ पूषा स्त्रीपुंसलिङ्गकः ।
वृद्धिक्रियायां पूतिस्तु तृणजात्यन्तरे पुमान् ॥ ८०५ ॥

---

१. 'ख्ये' ख. ङ. पाठः. २. 'नि' क. ख. घ. ङ. पाठः.

दुःखदुर्गन्धयोश्च स्याद् दुर्गन्धवति तु त्रिषु ।
पवनाख्यक्रियायां तु स्त्री कुन्त्यां तु **पृथा** स्त्रियाम् ॥ ८०६ ॥

त्रयोदशाङ्गुले त्वेष माने पुंसि मुनीरितः ।
मुनिवाक्यविरुद्धत्वात् पृथो हस्ततले जगे[1] ॥ ८०७ ॥

व्याख्यात्रा येन तेनैतदसम्यगभिभाषितम् ।
**पृश्नि**र्ना किरणे स्वर्गे सूर्ये देवान्तरेषु च ॥ ८०८ ॥

क्लीबं तुन्ने च साम्नोश्च बृहद्भिरिति गीतयोः ।
त्रिषु त्वल्पवपुर्जन्तौ बिन्दुचित्रपशावपि ॥ ८०९ ॥

विराजः पृश्नय इति त्वत्र वर्णनिबन्धनः ।
बिन्दुमत्त्वनिमित्तो वा प्रयोग इति संशयः ॥ ८१० ॥

**पृथुः** पुंस्यादिराजन्यभेदे वैन्य इति श्रुते ।
अन्यत्रापि क्वचित् पक्ष्ये वासुदेवस्य राजनि ॥ ८११ ॥

राज्ञस्त्रिशङ्कुसंज्ञस्य जनकेऽप्यनरण्यजे ।
विस्तीर्णे तु त्रि तत्रापि पृथुः पृथ्वीति वा स्त्रियाम् ॥ ८१२ ॥

स्त्री तु पृथ्वी पृथिव्यां स्यादुभयं कृष्णजरिके ।
पृथुः पृथ्वी च बाष्पाख्यभेषजे पृथुरेव सा ॥ ८१३ ॥

मर्कटे तु द्वयोः क्ली तु **पृषत्** पुण्ड्रे तु (?) विप्रुषि ।
तथा दध्युपसिक्ताज्ये पशुगात्रस्थबिन्दुषु ॥ ८१४ ॥

तन्तुवायस्य तन्त्रे च मृगभेदे तु स द्वयोः ।
त्रयी तु **पेटी** पेडायां पेटिकायां च सा पुनः ॥ ८१५ ॥

पेटा दास्यां स्त्रियामेव **पेया** तु विरलात्मनि ।
यवाग्वां त्रिस्तु पातव्ये रक्षितव्येऽथ नृस्त्रियोः ॥ ८१६ ॥

**प्रेङ्खा** प्रेङ्खोलने च स्यादासन्द्यां च द्वयोः पुनः ।
दासे **प्रेत**स्तु मृतके त्रि द्वे भूतान्तरेऽथ नप् ॥ ८१७ ॥

---

१. 'ले' ग. पाठः.

**पेत्वं** तप्ते भुवो भागे द्वे तु मेषे परः पुनः ।
पशौ गालितमुष्केऽमुं व्याचष्टे तदसद् विदुः ॥ ८१८ ॥
**पेरुर्ना** भास्करे शैले समुद्रे द्वे तु पक्षिणि ।
कलविङ्काह्वयेऽथ स्यात् **प्रेम** प्रेमा च न स्त्रियाम् ॥ ८१९ ॥
स्नेहे केलौ च दासे तु **प्रेष्यो** द्वे भेद्यवत् पुनः ।
प्रेषितव्येऽथ **पोतो** ना यानपात्रे द्वयोः पुनः ॥ ८२० ॥
शिशौ दशाब्दद्विरदे पुत्रयोरपरे विदुः ।
चतुष्पदां तु तरुणे केचिदन्ये प्रचक्षते ॥ ८२१ ॥
**प्रोथोऽस्त्री** हयघोणायां त्रिः प्रिये यूनि तु द्वयोः ।
**प्रोष्ठः** पुंस्यृषभे प्रोष्ठी शफर्यां स्त्र्यथ **पौरवाक्** ॥ ८२२ ॥
बलभद्रे श्वेतशालौ ना क्ली तु ध्यामकाह्वये ।
भेषजे पुरवास्यादिपुरसम्बन्धिनि त्रिषु ॥ ८२३ ॥
**पौषस्तु** तैषमासे ना सामभेदे नपुंसकम् ।
पौषी तु पौर्णमास्यां स्त्री संयुक्ता पुष्यभेन या ॥ ८२४ ॥
**पौंस्नं** पुंसवने क्लीबं पुंसः सम्बन्धिनि त्रिषु ।
**फलं** फाले धने बीजे निष्पत्तौ भोगलाभयोः ॥ ८२५ ॥
सस्ये हेतुकृते चर्मसंज्ञशस्त्रनिवारणे ।
शस्त्राणां च मुखेऽत्रोक्तस्थावराणां[3] प्रसूनयोः ॥ ८२६ ॥
[4]क्ली पुंस्यप्यपरे ना तु करमर्देऽथ सा स्त्रियाम् ।
कार्पास्यां लवलीराजकोशातक्योः फलाथ सा ॥ ८२७ ॥
कोशातक्यां फलिन्यां च ताम्रादिफलके तथा ।
फली स्यादजयस्त्वाह मत्स्यभेदेऽपि शब्दवित् ॥ ८२८ ॥
**फल्गु** तु त्रिष्वसारे स्त्री काकोदुम्बरिकाह्वये ।
वृक्षभेदे त्रि तु **फली** फलयुक्ते स्त्रियां पुनः ॥ ८२९ ॥

---

१. 'सैं' ग. पाठः. २. 'ब्दे' ङ. पाठः. ३. 'प्रो' ग. घ. पाठः.
४. 'क्लीबं पुंस्यप' ग. पाठः.

कोशातक्यां च फलिनी प्रियङ्ग्वाह्वयपादपे ।
**फालो** लाङ्गलकूटे ना श्वेतार्के दाडिमे तथा ॥ ८३० ॥
निष्पत्तौ शरणेऽथ क्ली तक्कोले च फलस्य तु ।
विकारादौ त्रि **फुल्लं** तु त्रये विकसने त्रि तु ॥ ८३१ ॥
आश्चर्ये स्याद् विकसितेऽप्यथो विशरणे नपि ।
निष्पत्तौ चाथ शण्डे स्यात् पुंसि चैत्यपरे विदुः ॥ ८३२ ॥
**बलं** रूपेऽस्थनि स्थौल्ये शक्तिरेतश्चमूष्वथ ।
बलभद्रे यावकाख्ययवभेदे च नाथ तम् ॥ ८३३ ॥
कश्चिद् दैत्यान्तरेऽप्याह तदसाध्विव लक्ष्यते ।
दैत्ये दन्त्यौष्ठ्यवर्णादिर्वलशब्दस्य दर्शनात् ॥ ८३४ ॥
त्रिषु तु स्याद् बलवति स्त्री तु वाट्यालके बला ।
पिप्पल्यां च परे त्वेनं काके प्राहुर्द्वयोरिति ॥ ८३५ ॥
अन्ये तु तदसत् प्राहुर्दन्त्यौष्ठ्यादित्वसङ्करात् ।
**बक**स्तु ना दाल्भ्यमुनावेकचक्रापतावपि ॥ ८३६ ॥
द्वे तु कह्वाह्वये पक्षिभेदे जात्यन्तरे नृणाम् ।
पुल्कसीक्षत्रियोद्भूते **बभ्र**स्त्वृष्यन्तरे पुमान् ॥ ८३७ ॥
सूर्ये स्वर्गे द्वयोस्तु स्याद् ब्राह्मणे तुरगेऽपि च ।
**बलिः** पूजोपहारे ना भागधेये नृपस्य च ॥ ८३८ ॥
प्राणनार्थकधातौ च दैत्यभेदेऽथ नृस्त्रियोः ।
देवतार्चनतूर्येऽथ बाभ्रिर्द्वे श्येनकाकयोः ॥ ८३९ ॥
**बभ्रुर्ना** केशवे पूर्वराजभेदर्षिभेदयोः ।
अग्नौ कडारवृषभे धने वर्णे च पिङ्गले ॥ ८४० ॥
त्रि तु तद्वति खल्वाटे द्वे त्वोतौ नकुलेऽपि च ।
बभ्रूः कपिलगव्यां स्त्री बन्धुर्ना स्वजने स्वरे ॥ ८४१ ॥

---

१ 'क' ख. ङ. पाठः. २. 'दालमु' क. घ, 'दाह्यमु' ख, 'गार्ह्यमु' ग. पाठः. ३. 'विं' ख. ङ. पाठः, 'लि' क. घ. पाठः. ४. 'षु' ग. पाठः.

लग्नाच्चतुर्थराशौ च बन्धुं सांवत्सरा विदुः ।
मेघलिङ्गं त्वधिक्षेप्ये बन्धुनीति तु सूत्रकृत् ॥ ८४२ ॥
शब्दस्वरूपानिष्ठत्वे प्राहेत्याहुर्बहुस्तु ना ।
व्रतान्तहोमवह्नौ स्याद् भेद्यलिङ्गं तु वाच्ययोः ॥ ८४३ ॥
त्रित्वादिसङ्ख्यासङ्ख्येये महार्थेऽप्यत्र च स्त्रियाम् ।
यदा वृत्तिस्तदा बह्वी बहुरित्यपि वा द्वयम् ॥ ८४४ ॥
ब्रह्मा रुद्रहृषीकेशविरिञ्चार्केन्दुवह्निषु ।
यज्ञे विप्रे च भृग्वादिष्वृत्विग्भेदे च पुंस्ययम् ॥ ८४५ ॥
क्लीबं तु वेदे मन्त्रेऽन्ने खेऽध्यात्मात्मतपस्सु च ।
मोक्षे जपे धने चाथ बलभद्रे ब(ले?ली)¶ पुमान् ॥ ८४६ ॥
कारवेल्लविशेषे च बृहत्कर्कोटकाह्वये ।
शोणाम्लाने नालिकेरे माषधान्ये च मज्ञि च ॥ ८४७ ॥
षष्ठे शरीरधातूनां बलयुक्ते(पु?तु) स त्रिषु ।
बर्हिस्तु क्ली कुशे यज्ञे जले व्योम्नि महत्यपि ॥ ८४८ ॥
ना त्वग्नौ बाणशब्दस्तु बलिपुत्रासुरे पुमान् ।
इक्ष्वाकोश्च प्रपौत्रे स्यात् तथैवानोकहान्तरे ॥ ८४९ ॥
ककुभाख्ये नृशण्डस्तु शरतद्भेदयोरथ ।
बाणा नृस्त्री नीलझिण्ट्यां बालस्तु शिशुमूर्खयोः ॥ ८५० ॥
त्रिर्ना तु नालिकेरेऽथ पञ्चवर्षगजे द्वयोः ।
बाला तु मल्लिकाभेदे हरिद्रायां च सा स्त्रियाम् ॥ ८५१ ॥
ब्राह्मं त्रिर्ब्रह्मसम्बन्धे स्त्री तु सप्तसु मातृषु ।
एकस्यां दिशि चोर्ध्वायां ब्रह्मरीत्याख्यलोहके ॥ ८५२ ॥
मत्स्याक्ष्याख्यतृणस्तम्बे वाचि ब्राह्मी पुमान् पुनः ।
रात्रेः स्यात् पश्चिमे यामे पुमांस्त्वश्रुणि बाष्पवाक्[1] ॥ ८५३ ॥

१. 'त्का' ख, ग, पाठः.

¶ 'नालिकेरे तु लाङ्गली । दाक्षिणात्योऽप्फलोऽबालः सुतङ्गः कूर्चकेसरः । सदाफलो बली च' (पु. ६३. श्लो. २२०,२२१) इति वैजयन्ती ।

मुखतोयादिसंभूते धूमाभासे च वस्तुनि ।
शाकभेदे च बाष्पी तु स्त्रीलिङ्गा भेषजान्तरे ॥ ८५४ ॥

हिङ्गुपत्र्याह्वये बाधा न क्ली दुःखनिषेधयोः ।
ना तु क्षुद्रफले पूगे बले चाथ प्रवाहणे ॥ ८५५ ॥

बाहा नृस्त्री स्त्रियां बाहौ बाह्यं तु त्रिर्बहिर्भवे ।
क्ली तु स्वकल्पिते नृत्ते बाढं तु स्याद् भृशे त्रिषु ॥ ८५६ ॥

क्लीबं त्वनुमतौ च स्यात् प्रतिज्ञायां च धिक् पुनः ।
अवश्यमर्थे देवानांप्रियः प्राह हलायुधः ॥ ८५७ ॥

बाहुः पुरुषभेदे ना क्वचिन्नृस्त्री पुनर्भुजे ।
प्रमाणभेदे षट्त्रिंशदङ्गुलेऽप्यब्रवीन्मुनिः ॥ ८५८ ॥

गृहादिद्वारपार्श्वस्थयाज्ञिकख्यातदारुषु ।
बिम्बोऽस्त्री मण्डलसमप्रतिमामुखलक्ष्मसु ॥ ८५९ ॥

प्रतिबिम्बे तत्प्रकृतौ समानत्वोपधानयोः ।
आदर्शे स्त्री तु बिम्बी स्यादोष्ठीसंज्ञलतान्तरे ॥ ८६० ॥

क्ली तु तस्याः फले द्वे तु कृकलासान्तरे विदुः ।
यो नानावर्णभाक् तस्मिन्नथ बिल्वः पुमान् द्रुमे ॥ ८६१ ॥

श्रीफलाख्ये फले त्वस्य क्ली मानेऽपि पलाह्वये ।
बिन्दुर्ना विप्रुषि पशुशरीरस्थपृषत्सु च ॥ ८६२ ॥

लवेऽन्योऽवयवेऽप्यन्यो वैजयन्त्यां तु दृश्यते ।
नश्यत्प्रसूतियोपायां स्त्रीलिङ्गो दृश्यते पुनः ॥ ८६३ ॥

पुल्लिङ्गोऽमरकोशस्य शेषे सारस्वतोदिते ।
बीजो ना यावशूकाख्ये यवक्षारान्तरे तथा ॥ ८६४ ॥

धान्ये स्याद् वंशजे तु त्रिर्बीजी बीजवति त्रिषु ।
ताते तु पुंसि बुद्धो ना सुगते त्रि तु पण्डिते ॥ ८६५ ॥

१. 'न्या' क. ख. घ. ङ. पाठः.

ज्ञातरि ज्ञायमाने च पुंल्ले च क्ली तु बोधने ।
विद्वद्बोद्ध्रोश्चिषु बुधो ना तु चान्द्रमसायनौ ॥ ८६६ ॥

अजयस्तु सुरेऽप्याह तत्र न्यायाद् द्वयोर्भवेत् ।
बुधा तु धिषणायां स्त्री वृद्धिसंज्ञे च भेषजे ॥ ८६७ ॥

मुण्डीसंज्ञतृणस्तम्बे बुसं त्वस्त्री कडङ्गरे ।
मलनिष्पूतधान्यस्य कडङ्गर इति स्मृतम् ॥ ८६८ ॥

गोकरीषेन्धने तु स्त्री बुसा क्लीबं तु वारिणि ।
बुस्तः प्रहसने पुंसि धनुष्कोटौ नपुंसकम् ॥ ८६९ ॥

मूषायां तु बुका स्त्री स्याच्छिवमल्ल्यां तु ना बुकः ।
बृहत् त्वारण्यके साम्नि त्वामिद्धीत्यृक्समुद्भवे ॥ ८७० ॥

क्ली त्रिर्महति तत्रापि स्त्र्यर्थे स्याद् बृहतीत्यथ ।
प्रसहासंज्ञवार्ताक्यामिति केचिदथापरे ॥ ८७१ ॥

सर्वेऽपि क्षुद्रवार्ताक्यां छन्दोभेदेषु केषुचित् ।
षट्त्रिंशदक्षराद्येषु गन्धर्वाधिपतेरपि ॥ ८७२ ॥

विश्वावसोः स्त्री वीणायां बृहती पठति त्विमाम् ।
अजयो वा(पि?चि) च क्लीबं पुनर्बोलामिति ध्वनिः ॥ ८७३ ॥

साज्ये मधुनि तक्कोले ना तु स्यादम्भसां भ्रमे ।
जायौ गन्धरसाभिख्ये मषौ लेखनिकोद्भृते ॥ ८७४ ॥

बोधिस्त्वर्थे स्त्रियां सम्यग्ज्ञाने च द्वे तु कुक्कुटे ।
अश्वत्थे तु पुमान् बुद्धे त्वप्यमुं सज्जनोऽपठीत् ॥ ८७५ ॥

भगः पुनः स्मृतो यत्ने यशोवीर्यार्कभूतिषु ।
कान्तीच्छाज्ञानवैराग्यधर्मैश्वर्यतपस्सु च ॥ ८७६ ॥

धैर्यसौभाग्यमाहात्म्यधनशुक्रश्रुतेषु च ।
बुद्धौ चांदित्यभेदानामेकस्मिन्नपि नाथ नप् ॥ ८७७ ॥

---

१. 'सद्भवे' क. ख. घ. पाठः.

योनौ केचित् त्वभेदेन मन्यन्ते पुन्नपुंसकम् ।
सूर्यतद्भेदयोस्त्वेष पुमानेव न संशयः ॥ ८७८ ॥
भङ्गस्तु ना तरङ्गे स्याद् भञ्जने च स्त्रियां पुनः ।
मातुलान्याह्वये धान्ये भङ्गा भद्रस्तु नोक्षणि ॥ ८७९ ॥
गजभेदे द्वयोः क्ली तु सामभेदे शुभे सुखे ।
एतयोस्त्वर्थयोरेकयुक्ते बृहति च त्रिषु ॥ ८८० ॥
साधौ च स्त्री तु भद्रा स्याद् दूर्वाशारिबयोस्तथा ।
रास्नायां चाथ पक्षस्य त्रयः स्युस्तिथिपञ्चकाः ॥ ८८१ ॥
तेषां द्वितीयतिथिषु भवस्तु प्राप्तिसत्तयोः ।
शम्भौ जन्मनि संसारे शुभेऽप्याह तु सज्जनः ॥ ८८२ ॥
कोपेऽथ भवितर्येष त्रि भण्डं तु नपुंसकम् ।
कोशस्थेऽर्थे धनवतां हास्यकारिणि तु त्रिषु ॥ ८८३ ॥
भण्डी मण्डूकपर्णाख्यतृणस्तम्बे§ स्त्रियामियम् ।
परिहासे तु भण्डा स्त्रीपुंसयोर्भक्तवाक् पुनः ॥ ८८४ ॥
सेवायामोदने क्ली त्रिः सेविते भक्तिमत्यपि ।
भटस्तु योधे ना मर्त्यजातिभेदे तु स द्वयोः ॥ ८८५ ॥
नटीविप्रोद्भवे भव्यः पुनर्ना पादपान्तरे ।
[1]कर्मरङ्गाह्वये क्ली तु फले तस्य धने तथा ॥ ८८६ ॥
कल्याणाख्यगुणे च स्याद् भेद्यलिङ्गं तु तद्वति ।
योग्ये भवितरि प्राप्ये भवितव्ये तु तन्नपि ॥ ८८७ ॥
भ्रमिः स्त्री भ्रमणे धात्वोर्भ्रमतौ भ्राम्यतौ च ना ।
भरुस्तु भर्तरि त्रिर्ना वर्णे भर्तृ[2] त्रि पोष्टरि ॥ ८८८ ॥
स्वामिधारकयोर्ना तु पाणिग्राहे भवत् पुनः ।
सर्वनाम त्रि पूज्ये स्यात् स्त्र्यर्थे तत्र भवत्यसौ ॥ ८८९ ॥

---

१. 'नागर' ख. पाठः. २. 'र्ता तु पो' ग. पाठः.

---

§ 'मण्डूकपर्ण्यां भण्डीरी भाण्डी योजनवल्ल्यपि' (पु. ५७. श्लो. १४५) इति तु वैजयन्ती ।

त्रि त्वेव जायमाने च विद्यमाने च तत्र च।
स्त्र्यर्थत्वे स्याद् भवन्तीति ना तु गोत्रस्य कर्तरि ॥ ८९० ॥
ऋषिभेदे भवन्ती[1] तु स्त्रीलिङ्गा लट्श्रुतौ स्मृता।
भसत् तु स्त्री दकारान्ता विष्ठायां गुह्यकोष्ठयोः ॥ ८९१ ॥
आस्ये तु क्लीबमाचार्याः केचिदेनं[2] प्रचक्षते।
भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु ॥ ८९२ ॥
पदार्थमात्रे सत्तायामात्मयोनिस्वभावयोः।
केचित् त्वात्मनि योनौ च प्रीतिसंस्कारजन्मसु ॥ ८९३ ॥
शृङ्गारादे रसस्यापि कारणे चान्तरात्मनि।
नाट्योक्तिविषये प्राज्ञे पुंसि त्रिषु तु मानिनि ॥ ८९४ ॥
भवसम्बन्धिनि बुधे भवितर्यपि ना पुनः।
भागो भाग्ये तुरीयांशे रूपकार्धेऽशमात्रके ॥ ८९५ ॥
भगसम्बन्धिनि पुनस्त्रि क्ली सामान्तरेऽथ नप्।
भाग्यं जन्मान्तरकृते शुभे कर्मणि चाशुभे ॥ ८९६ ॥
अशुभे च शुभे चापि कर्ममात्रे परे विदुः।
भक्ताख्ये तु त्रि वृद्ध्यायलाभशुल्कोपदात्मना ॥ ८९७ ॥
दीयते यत्र भागोऽसौ तत्र तत्रापि साधुनि।
भार्या स्त्री सहधर्मिण्यां ना त्वादिक्षत्रियान्तरे ॥ ८९८ ॥
भारसाध्वादिके तु त्रिर्भासस्तु द्वे खगान्तरे।
शकुन्ताख्ये नृस्त्रियोस्तु दीप्तौ सामान्तरे तु नप् ॥ ८९९ ॥
भामस्तु क्रुधि ना स्त्री तु भामा योषित सा त्रि तु।
ईर्ष्यावत्यथ भात्रं[3] क्ली पोषे त्रिषु तु यो नरः ॥ ९०० ॥
भृतिं गृहीत्वा वसति तत्र भर्तुश्च योगिनि।
भाण्डं क्लीबममत्रेऽश्वभूषणे भूषणे तथा ॥ ९०१ ॥

---

१. 'न्तीति स्त्री' ग. पाठः. २. 'नत्' क. ख. पाठः. ३. 'भावसं' ग. पाठः.

वणिङ्मूलधनेऽन्ये तु पण्ये केचिदुपस्करे ।
भाण्डी तु स्त्री शिरीषद्रौ भण्डसम्बन्धिनि त्रिषु ॥ ९०२ ॥

भ्राजो ना श्लोकभेदेषु क्वचित् सामान्तरे तु नप् ।
भाष्यं तु क्ली विवरणग्रन्थजात्यन्तरे यथा ॥ ९०३ ॥

महाभाष्यादि तत्र स्याद् भाषणीये तु भेद्यवत् ।
भानुर्ना भास्करे घस्रे नृस्त्रियोस्तु गभस्तिषु ॥ ९०४ ॥

भास्वानिन्दौ रवौ पुंसि भेद्यलिङ्गं तु भास्वरे ।
भास्वतीति स्त्रियां नद्यामुषस्यप्यथ भिल्लवाक् ॥ ९०५ ॥

नृजातिभेदे शबरान्निष्ट्यपूर्वान्ध्रिकासुते ।
द्वयोः स्यात् सज्जनस्त्वाह पुंल्लिङ्गं पक्कणे त्रि तु ॥ ९०६ ॥

भिन्द्र[1] स्याददृढे क्ली तु व(स्त्रे?ज्रे)ऽन्यो दरणेऽवदत् ।
भिक्षुः पुंसि परिव्राजि त्रि तु भिक्षणशीलके ॥ ९०७ ॥

चतुर्थकालाशिनि च भिंदुस्तु नरि मन्मथे ।
वज्रे च घुणसंज्ञे तु क्रिमौ द्वे ना तु भीमवाक् ॥ ९०८ ॥

शम्भौ च भीमसेने च त्रि तु क्रूरे भयानके ।
भीष्मः शान्तनवे पुंसि भेद्यलिङ्गं भयानके ॥ ९०९ ॥

भीरुः पुंसीङ्गुदतरौ स्त्रियां †चोर्वारुयोषितोः ।
योषिद्भेदे परे त्रिस्तु कातरेऽथ भुजः पुमान् ॥ ९१० ॥

भूर्जसंज्ञद्रुमे नृस्त्री बाहौ भूमानगोचरे ।
पदार्थभेदे च भुरिक् पुनः स्त्री बाहुकन्दयोः ॥ ९११ ॥

उक्ताद्युत्कृतिपर्यन्तच्छन्दस्स्वेकाक्षराधिके ।
छन्दोभेदे वसायां च कश्चित् तु भुवि चावदत् ॥ ९१२ ॥

---

1. 'घं' क. घ. ङ. पाठः.

---

† 'तूर्वा' इति पाठः स्यात् ।

अन्यस्तु राजनि पुमानित्याह क्ली तु भूतवाक् ।
महाभूतेषु भवनक्रियायां प्राप्तिसत्ययोः ॥ ९१३ ॥

न्याय्ये प्राणिनि चान्यस्तु वाच्ययोरेतयोस्त्रिषु ।
अतीततुल्यलब्धेषु देवयोन्यन्तरे पुनः ॥ ९१४ ॥

नृशण्डो मातरि त्वस्य भूता स्त्री भूरिवाक् पुनः ।
प्रचुरे त्रिषु हेम्न्यस्त्री भूर्णिस्तु स्त्री भृतौ तथा ॥ ९१५ ॥

कश्चित् तु धरणौ भ्रूते त्रि तु भ्रमणशीलके ।
द्वयोस्तु भृङ्गो धूम्याटे भ्रमरे च पुमान् पुनः ॥ ९१६ ॥

भृङ्गराजे परस्त्वाह भृङ्गारेऽन्यो लवङ्गके ।
अन्ये तु वर्णभेदे त्रिः पुनस्तद्वति नप् पुनः ॥ ९१७ ॥

त्वक्पत्रसंज्ञभैषज्ये भृत्यो दासे द्वयोः स्त्रियाम् ।
भृत्या स्याद् वेतनेऽथो ना (भूं?भृ)मिर्वायौ जलेऽपि च ॥ ९१८ ॥

द्वयोस्तु हस्तिनि त्रिस्तु भेरवाक् कातरेऽथ सः ।
स्त्रियां स्याद् दुन्दुभौ भेरी भे(लुं?ल)‡स्तु त्रिषु कातरे ॥ ९१९ ॥

पूज्याप्रौज्यप्रहीणेषु पुमांस्त्वृष्यन्तरे क्वचित् ।
*चिकित्साग्रन्थकारे स्यादुडुपेऽप्यथ भेकवाक् ॥ ९२० ॥

मेघे ना द्वे तु मण्डूके मर्त्यजात्यन्तरेऽपि च ।
निषादब्राह्मणीजाते कातरे तु त्रिषु स्मृतः ॥ ९२१ ॥

उदीच्यनीवृद्भेदे तु भोलाः पुंभूम्न्यथ द्वयोः ।
द्वीपिसंज्ञकशार्दूलभेदे भोजः पुनर्द्वयोः ॥ ९२२ ॥

राजन्यमात्रे भोजाख्यनीवृद्भेदेऽस्य राजनि ।
मर्त्यजात्यन्तरे चापि ज्ञेयः क्षत्रियगोलके ॥ ९२३ ॥

---

१. 'भ्रन्मि' ग. पाठः. २. 'ष' क. ख. ग. घ. पाठः. ३. 'पूजप्र' ग. पाठः.

---

‡ 'भेलौ तूडुपभीरुकौ' (पु. २३४. श्लो. ५२) इति वैजयन्ती । * चिकित्साग्रन्थस्य कर्त्रोरभेदाद् भेलसंहितेत्युच्यते ।

पुंभूमनि तु विन्ध्याद्रिपार्श्वस्थे नीवृदन्तरे ।
**भोगी** तु सर्पे द्वे स्त्री तु भोगिनी नृपयोषिति ॥ ९२४ ॥

अन्या कृताभिषेकाया या तस्यां भेद्यवत् पुनः ।
भोगवत्यजयस्त्वाह वैयावृत्त्यकरे$ तथा ॥ ९२५ ॥

भूपालेऽप्यथ **भौमो** ना पृथिवीतनयग्रहे ।
भूमिसम्बन्धिनि त्रि स्याद् **मद्रं** तु क्ली सुखे तथा ॥ ९२६ ॥

सज्जनस्तु शुभे प्राह त्रि तु तद्वति भाषितः ।
पुंभूम्नि नीवृद्भेदेऽथ **मन्द्रो** ना सामवर्तिनाम् ॥ ९२७ ॥

स्वराणामपि सप्तानां स्वरे षष्ठेऽथ स त्रिषु ।
गम्भीरशब्दे मन्द्रा तु वाचि स्त्री **मन्द्वाक्** तु ना ॥ ९२८ ॥

शनैश्चरे त्रि तु स्वल्पे तथाज्ञापटुरोगिषु ।
निर्भाग्ये च कनिष्ठे च दधिभेदे तु नप्यदः ॥ ९२९ ॥

मन्दजाते द्वयोस्त्वेष गजभेदे **मद**स्तु ना ।
गजदानजलेऽन्ये तु तद् यन्मेढ्रात् प्रवर्तते ॥ ९३० ॥

तत्रैवेत्यब्रुवन् हर्षे गर्वे गन्धे च रेतसि ।
मदी तु मत्तावस्थायां स्त्री **मध्यं** तु नपुंसकम् ॥ ९३१ ॥

वस्तुद्वयस्यान्तराले सङ्ख्याभेदेऽपि कुत्रचित् ।
समुद्रसंज्ञसङ्ख्याया यः स्याद् दशगुणोत्तरः ॥ ९३२ ॥

छन्दसामुक्तपूर्वाणां तृतीये छन्दसि त्रि तु ।
न्याय्ये वलग्नसंज्ञे तु शरीराङ्गे नृशण्डयोः ॥ ९३३ ॥

हिमोत्सर्गाय सवितू रश्मयः स्युः शतत्रयम् ।
तत्रैकत्र शते ह्रादिन्याख्येषु रविरश्मिषु ॥ ९३४ ॥

स्त्रियो मध्या अथो **मत्यं** क्लो समीकृतिसाधने ।
क्षेत्रस्य कृष्टस्य मतिमतसाधौ तु स त्रिषु ॥ ९३५ ॥

$ व्यावृत्तिरेव वैयावृत्त्यं, तत्करे व्यावर्तक इत्यर्थः ।

मत्स्यस्तु मीने द्वे नीवृद्भेदे तु नरि भूमनि ।
तद्राजे तु पुमान् मीनराशौ चाथो मघं धने ॥ ९३६ ॥

क्ली स्त्रीभूम्नि मघा अग्निनक्षत्रे कालमात्रके ।
तद्युक्तेऽथ मयः पुंसि दैत्यतक्षणि हिंसने ॥ ९३७ ॥

प्रक्षेपणे च द्वे तुष्टे तथाश्वेऽथो मलोऽस्त्रियाम् ।
स्यात् पापकिट्टविष्ठासु वातादिषु च न१ पुनः ॥ ९३८ ॥

कांस्याख्यलोहे स्यात् त्वेष मर्त्यजात्यन्तरे द्वयोः ।
मालुकीशूद्रजेऽथोक्तो मल्लो योधे परैः पुमान् ॥ ९३९ ॥

बलीयःपुरुषे त्वन्यैः पात्रभेदे तु नृस्त्रियोः ।
मल्लो मल्ली च मल्ली तु मल्लिकापीठयोः स्त्रियाम् ॥ ९४० ॥

नृस्त्रियोर्धारणे मल्लो मल्ला चेति द्वयोः पुनः ।
व्रात्यपूर्वक्षत्रियाजे व्रात्याज्जात्यन्तरे नृणाम् ॥ ९४१ ॥

मह्रः पुंस्युत्सवे स्त्री तु मही वाचि गवि क्षितौ ।
सज्जनस्तु नदीभेदेऽप्याह द्विवचनेन तु ॥ ९४२ ॥

द्यावापृथिव्योराम्नासीद् मह्वस्त्वौर्योपजीविनि ।
त्रिमङ्गलस्थ पठितर्यैके मङ्गा तु मङ्गले ॥ ९४३ ॥

स्त्री मङ्गं त्वस्त्रियां नावः शिरस्यक्ली तु मङ्गने ।
मङ्गनं गमनं विद्यादथ सर्वरसाग्रके ॥ ९४४ ॥

मण्डमस्त्री स्त्रियां मण्डी *यागुल्यां मण्डने पुनः ।
नृस्त्री मण्डाऽथ ना रश्मौ क्ली तून्मानान्तरे भवेत् ॥ ९४५ ॥

पञ्चमाषे मतं तु क्ली स्यादाकूतेच्छयोस्तथा ।
ज्ञाने च वाञ्छिते तु त्रिर्ज्ञायमानेऽथ मत्तवाक् ॥ ९४६ ॥

---

१. 'ल्य' क. ग. घ. पाठः. २. 'स्त्व' क. ख. ग. घ. पाठः.

* 'य्वागुली मण्डिका समे' (पु. १६५. श्लो. ७८) इति तु वैजयन्ती ।

त्रि(तु?षु) क्षीबे च हृष्टे च क्लीबं तु मदकर्मणि ।
मर्त्तस्त्वृष्यन्तरे पुंसि मर्त्यलोकेऽप्यथ द्वयोः ॥ ९४७ ॥

मनुष्ये मर्कशब्दस्तु देवदारुतरौ पुमान् ।
मनोविरिञ्चयोर्वायौ कश्चित् त्वाहाभ्रचन्द्रयोः ॥ ९४८ ॥

आदित्येऽप्यथ सर्पे द्वे त्रि तु विघ्नस्य कर्तरि ।
मणिः स्त्रीपुंसयो रत्ने मणिबन्धेऽप्यलिञ्जरे ॥ ९४९ ॥

अजादिकण्ठप्रभवे स्तनाकारे च वस्तुनि ।
काष्ठलोहादिनिष्पाद्यगुलिकायामथाजयः ॥ ९५० ॥

गोलमात्रे परे त्वेनं गुह्यमध्यगुले विदुः ।
मेहनावयवे त्वन्ये शेफाग्रं स च मन्यताम् ॥ ९५१ ॥

कश्चित् प्रायुङ्क्त घण्टायां धातौ तु मणतौ पुमान् ।
मल्लिस्तु मत्स्यभेदे स्त्री स्यात् कपालकरङ्कयोः ॥ ९५२ ॥

इत्येवमजयः स्माह धातौ तु नरि मल्लतौ ।
मासिस्तु शस्त्र्यां कृपणतृष्णायामिति कश्चन ॥ ९५३ ॥

स्त्रियां पुंसि त्वविश्वास्यो वाक्पतिः पठति स्म तम्[1] ।
धातौ तु मस्यतौ पुंसि महिस्तु धरणौ स्त्रियाम् ॥ ९५४ ॥

उदाहृतो ह्यसौ भागवृत्तिकारेण वाक्तिनः ।
इत्यत्र कृदिकारान्तो महति त्वेष भेद्यवत् ॥ ९५५ ॥

मधुस्तु ना चैत्रमासे वसन्ते दानवान्तरे ।
पूर्वक्षत्रियभेदे च विप्रभेदे च कुत्रचित् ॥ ९५६ ॥

मधूकद्रौ कुरवके मद्यभेदे च कुत्रचित् ।
मध्वासवाख्ये[2] मधुररसे मिश्ररसे तथा ॥ ९५७ ॥

वैजयन्त्याह कटुकस्वादुतिक्तत्रयात्मके ।
एतद्रसद्वयवति पुनस्त्रिः क्ली तु वारिणि ॥ ९५८ ॥

---

१. 'न स्त्रियां पुंसि त्रि' क. घ. पाठः, २. 'स' ख. पाठः.

क्षीरे पुष्परसे मद्ये मन्त्रभेदेषु केषुचित् ।
शाकवल्ल्यां तु जीवन्तीसंज्ञायां स्त्री नूनप् पुनः ॥ ९५९ ॥

क्षौद्रपौत्तिकपूर्वेषु मधुभेदेषु * तत्सुरे ।
मनुस्तु पुंसि मन्त्रे स्यात् पूर्वे च क्षत्रियान्तरे ॥ ९६० ॥

स्त्रियां तु तस्य भार्यायां मनावी च मनाय्यपि ।
मयुर्द्वे किन्नरे ना तु प्रक्षेपे मन्तुवाक् तु ना ॥ ९६१ ॥

वैमनस्येऽपराधे च तथा शोके प्रजापतौ ।
अजयस्त्वाह विज्ञे त्रिस्तथैव स्यात् प्रियंवदे ॥ ९६२ ॥

मन्युर्दैन्ये कृपायां च शोके क्रोधे क्रता च ना ।
त्रिषु मेधाविनि द्वे तु मद्गुः सलिलवायसे ॥ ९६३ ॥

मर्त्यजात्यन्तरे निष्ठ्यवरुटीजे तथा पुनः ।
माहिष्य आयुर्वेदेन जीवत्यम्बष्ठसंज्ञके ॥ ९६४ ॥

स्यात् पारधैनुके चापि यस्याघोषणवृत्तिता ।
मस्तुस्तु नृस्त्रियोर्मुष्टौ पिण्डिताङ्गुलिरूपके ॥ ९६५ ॥

वैजयन्त्यामिदं प्रोक्तं दधिमण्डे तु तन्नपि ।
मर्जूः सम्मार्जनीशुध्द्योर्नदीतीरे परः पुनः ॥ ९६६ ॥

नद्यां तीरेऽपि चेत्याह शिलायां च स्त्रियामियम् ।
रजके तु द्वयोः काश्चिन्ना तु मन्ता प्रजापतौ ॥ ९६७ ॥

त्रिरेष्टृज्ञातृविद्वत्सु महत्[‡] तु क्लीबवारिणोः ।
राज्ये वृन्दे च पूज्ये तु त्रि बृहत्यपि ना पुनः ॥ ९६८ ॥

महर्लोके च बुद्धौ च महती तु स्त्रियामियम् ।
त्रिवृत्संज्ञलताजातौ वीणायां नारदस्य च ॥ ९६९ ॥

---

१. 'च' क. घ. पाठः.

---

* तेषां सुरा तत्सुरं 'विभाषा सेनासुरा —' (२. ४. २५) इति क्लीबत्वम् । ‡ महः क्लीबे वारिवाचक इत्यर्थवत् प्रत्येतव्यः, तर्हि 'महत् क्लीबं तु वारिणि' इति पाठो भवेत् ।

दृश्यते वेदसूत्रेषु रात्रेरवयवान्तरे ।
महच्छब्दस्तस्य लिङ्गं विविञ्चन्तु विचक्षणाः ॥ ९७० ॥

रात्रेरवयवः सोऽपि पश्चिमो याम ईरितः ।
कैश्चिदन्यैस्त्रिभागावशेषा रात्रिरितीरितः ॥ ९७१ ॥

**मरुत्** तु ना देवभेदे पवने शिखरे गिरेः ।
केचित् तु मरुदेशेऽपि रूपे चार्त्विजि नप् पुनः ॥ ९७२ ॥

हेम्नि स्याद् देवमात्रे तु द्वे स्पृक्कायां तु सा स्त्रियाम् ।
**मद्रा** पुंस्यृषिभेदे स्यात् क्रीडाकान्तिशिरस्सु च ॥ ९७३ ॥

तृप्तौ तु कश्चित् त्रिषु तु मदितर्यथ **मन्त्रिवाक्** ।
राज्ञो धीसचिवे पुंसि स्यात् तु मन्त्रवति त्रिषु ॥ ९७४ ॥

**माला** स्त्री स्रजि मालस्तु मर्त्यजात्यन्तरे द्वयोः ।
सूतीशूद्रोद्भवेऽत्रार्थे स्त्र्यर्थे मालीति जातिङीप् ॥ ९७५ ॥

पुमांस्तु कालपर्ण्याख्यतुलस्यां च कठिञ्जरे ।
धारणे चान्तरद्वीपे पुनः क्ली दक्षिणामुतः ॥ ९७६ ॥

वर्षा(त्) स्याद् भारतात् त्रिस्तु प्रहृतक्षेत्रभूतले ।
**माया** स्त्री शाम्बरीबुद्ध्योर्विष्णोर्नवसु शक्तिषु ॥ ९७७ ॥

एकस्यां साङ्ख्यतत्त्वे च प्रधानाख्येऽथ सा त्रिषु ।
माय[1]ते यश्च मां याति तत्रापि स्यादथ स्त्रियाम् ॥ ९७८ ॥

**मात्रा** प्रवृत्तौ क[2]र्णस्य परिष्कारान्तरे* धने ।
परिच्छदे परिच्छेदे शैलेऽन्ये त्वेकदेशके ॥ ९७९ ॥

ह्रस्ववर्णप्रयोगस्य काले पा[3]रे तु कश्चन ।
स्यात् तूत्तरपदे क्लीबं मात्रं कार्त्स्न्येऽवधारणे ॥ ९८० ॥

१. ‘के’ क. ख. ङ. पाठः. २. ‘व’ ख. पाठः. ३. ‘वारेस्तु’ क. ख. घ. ङ. पाठः.

* ‘[illegible]’ [illegible]

अन्ये तु त्रायते मां यस्तत्र त्रिष्विति मन्वते ।
**मानं** तु क्ली परिच्छेदे प्रस्थादौ चापि हिंसने ॥ ९८१ ॥

लग्नाद् दशमराशौ च विदुः साव्वँत्सरा इदम् ।
प्रक्षेपे प्रणिदाने च सम्भवे सम्भवस्त्वसौ ॥ ९८२ ॥

आधारानतिरिक्तत्वमाधेयस्येह ना पुनः ।
ज्ञाने चित्तसमुन्नत्यां पूजायां च स्त्रियां पुनः ॥ ९८३ ॥

मानी कुडुबसंज्ञस्य परिमाणस्य सा द्वये ।
**म्लानं** म्लानवति त्रि स्यात् क्ली तु म्लानौ द्वयोः पुनः ॥ ९८४ ॥

मण्डूकभेदे गृहजे **मार**स्तु नरि मन्मथे ।
मृतिमारणयोः स्त्री तु मारी स्याद् देवतान्तरे ॥ ९८५ ॥

देवतान्तरमप्येतत् कालरात्रीति सज्जनः ।
**माल्यं** क्ली कुसुमे पुष्पमालायां चाथ मेघवत् ॥ ९८६ ॥

धार्ये **माघ्य**स्तु कुन्दाख्यद्रुमे ना प्रसवेऽस्य नप् ।
माघसाधौ पुनस्त्रि स्यात् पौर्णमास्यां पुनः स्त्रियाम् ॥ ९८७ ॥

मघानक्षत्रयुक्तायां **माघी** मासे तु तद्वति ।
माघो ना त्रिर्मघासंज्ञनक्षत्रयुतकालजे ॥ ९८८ ॥

**मार्गो** नाध्वनि मार्ष्टौ च मार्गशीर्षाख्यमासि च ।
तथा मृगमदे सौम्यनक्षत्रेऽप्यब्रवीदिदम् ॥ ९८९ ॥

वैजयन्त्यां नृस्त्रियोस्तु मार्गो मार्गणकर्मणि ।
मार्गी तु पौर्णमास्यां स्त्री मार्गशीर्ष्यां त्रिषु त्वियम् ॥ ९९० ॥

मृगस्य स्याद् विकारादौ **मांसं** तु पिशिते नपि ।
वाक्पतिस्तु नरेऽप्याह निर्मूलत्वादसाधु तत् ॥ ९९१ ॥

मांसी तु स्त्र्यामिषीसंज्ञगन्धद्रव्येऽथ **माषवाक्** ।
ना क्लीबं चापरे वृष्यसंज्ञधान्यान्तरे तथा ॥ ९९२ ॥

पञ्चगुञ्जात्मकोन्मानभेदेऽन्येषां पुनर्मतम् ।
तण्डुलोन्मानतुलिते वस्तुनीत्यपरः पुनः ॥ ९९३ ॥

कार्षापणप्रभेदेऽथ पुंस्येव मषणे विदुः ।
मषणं हिंसनं विद्यात् सर्वलोकतते पुनः ॥ ९९४ ॥

मृत्यौ मरणसंज्ञे स्त्री **मारि**र्मारयतौ पुनः ।
धातौ ना **मातृ**शब्दस्तु पार्वत्यां जननीगवोः ॥ ९९५ ॥

ब्राह्मयाद्यासु च देवीषु *वेषणीसरितोरपि ।
अकारादिकवर्णानामाम्नाये तारकासु च ॥ ९९६ ॥

अश्विन्यादिषु पौष्याख्यपौर्णमास्यां च सा स्त्रियाम् ।
मानकारिणि तु त्रि स्यात् स्त्र्यर्थे मात्रीति तत्र च ॥ ९९७ ॥

**मित्रं** तु भेषजे क्लीबं स्थौणेयाख्ये सुहृद्यपि ।
लग्नाच्चतुर्थराशौ च मित्रं साव्वँत्सरा विदुः ॥ ९९८ ॥

ना त्वर्के चार्कभेदे च **मिषं** तु क्ली छलेऽथ तत् ।
घर्घरीनृपसम्भूते मर्त्यजात्यन्तरे द्वयोः ॥ ९९९ ॥

**मीनो** ना द्वादशे राशौ द्वे तु मत्स्ये त्रि हिंसिते ।
यष्टौ तु मीना स्त्री क्ली तु हिंसने **मीढवाक्** पुनः ॥ १००० ॥

मेषे द्वयोर्मूत्रणे क्ली भेद्यलिङ्गं तु मूत्रिते ।
देवरे तु नियुक्ता या यात्यन्यं साभिसारिका ॥ १००१ ॥

तस्यां मीढा स्त्रियां **मीरं** पुनः स्यात् क्लीबलिङ्गकम् ।
मांस्पचन्यामुखायां ना पुनरब्धौ नृनप् पुनः ॥ १००२ ॥

**मुण्डः** स्यान्मस्तके त्रिस्तु परिवापितकेशके ।
स्त्री तु मुण्डा च मुण्डी च स्तम्भे श्रमणिकाह्वये ॥ १००३ ॥

सा तु मुण्डैव भिक्षुक्यां मुण्डने तु नरस्त्रियोः ।
अजयस्त्वाह **मुख्यं** स्यात् क्ली वक्त्रोपाययोरिति ॥ १००४ ॥

---

*वेषणशब्दः पुल्लिङ्गो धान्यकवाची ।

त्रिषु तु स्यान्मुखभवे प्रधाने प्रथमेऽपि च ।
**मुष्कस्**तु वृषणे न स्त्री स्त्रीभगावयवे तु ना ॥ १००५ ॥
**मुक्ता** स्त्री मौक्तिके त्रिस्तु विसृष्टेऽतीतसंसृतौ ।
**मुस्ता** तु मुस्तके लिङ्गत्रये पुंशण्डयोः पुनः ॥ १००६ ॥
विषभेदे **मुरा** तु स्त्री गन्धकुस्थाख्यभेषजे ।
दैत्यभेदे तु ना **मुद्रा** पुनः स्यादप्सरोन्तरे ॥ १००७ ॥
लाञ्छने चाङ्गुलीये च यत्तु स्याल्लिखिताक्षरम् ।
हस्तविन्यासभेदेषु स्थापनीनिष्ठुरादिषु ॥ १००८ ॥
मुद्रस्तु दातरि त्रि स्यान्**मुनि**स्तु स्यादृषौ पुमान् ।
अगस्त्यर्षौ च सुगते कुशे दमनके तथा ॥ १००९ ॥
अगस्त्यसंज्ञवृक्षे च मण्डूके तु द्वयोस्त्रि तु ।
वाचंयमेऽथ **मुष्टिः** स्त्रीपुंसयोः फलकादिनः ॥ १०१० ॥
खड्गादिनश्च ग्रहणप्रदेशे पलसंज्ञके ।
उन्मानभेदे सुदृढपिण्डिताङ्गुलिसंहतौ ॥ १०११ ॥
धानुष्कहस्तविन्यासभेदे ग्राह्ये च मुष्टिना ।
द्रव्ये **मूलं** तु नप्यन्ये पुंस्यप्याद्दिसमीपयोः ॥ १०१२ ॥
नक्षत्रभेदे पादे च भूरुहाणां वशीकृतौ ।
स्वीये च कारणे चाथ **मूल्यं** वेतनवस्त्रयोः ॥ १०१३ ॥
क्लीबं त्रिषु तु यस्य स्यान्माषमुद्रादिवस्तुनः ।
ग्रहणे मूलमुत्पाट्यं तेषु माषादिवस्तुषु* ॥ १०१४ ॥
यः पटादिरुपादानद्रव्यतुल्यप्रयोजनः§ ।
तत्रापि **मूत**शब्दस्तु व्रीहावातञ्चने च ना ॥ १०१५ ॥
आचमन्यां तृणैर्बद्धभारे व्रीह्यादिवस्तुनः ।
वस्त्रवेष्टनबन्धेऽथ बद्धे त्रिः क्ली तु बन्धने ॥ १०१६ ॥

* 'मूलमस्याबर्हि' (४. ४. ८८) § 'नौवयोधर्मविषमूलमूल... सम्मितेषु' (४. ४. ९१) इति सूत्राभ्यामुभयत्र यत्प्रत्ययः ।

**मूकस्तु** त्रिष्ववाचि स्यात् क्लीबमाविलवारिणि ।
अश्वायां वेसराज्जाते चतुष्पादन्तरे द्वयोः ॥ १०१७ ॥

दैत्यभेदे तु पुंल्लिङ्गो यो वराहत्वमागतः ।
किरातार्जुनयोर्मध्ये स्पर्धाहेतुतया तयोः ॥ १०१८ ॥

तैजसावर्तनीसंज्ञे पुनर्लोहकृतां स्त्रियाम् ।
भाण्डे **मूषाथ** नृस्त्री स्याच्चौर्ये चोरे तु स त्रिषु ॥ १०१९ ॥

प्रहेलिकान्तरे तु स्त्री **मूढा** स्यात् काव्यकारिणाम् ।
त्रि तु स्यात् तन्द्रितेऽप्यज्ञे क्रुद्धमूर्च्छितयोरपि ॥ १०२० ॥

क्लीबं तु मोहने ना तु पश्वन्वेषणयो**र्मृगः** ।
मृगशीर्षाख्यनक्षत्रे तद्युक्ते कालमात्रके ॥ १०२१ ॥

मकराह्वयराशौ च विदुः सांवत्सरा अमुम् ।
द्वे तु हस्तिविशेषे च कुरङ्गेऽप्यथ भेद्यवत् ॥ १०२२ ॥

**मृतः** प्रेते याचिते तु भैक्षे क्ली मरणेऽपि च ।
**मृत्युस्तु** मरणे न क्ली पुमानेवान्तकेऽथ नप् ॥ १०२३ ॥

**मृदु** वज्रे कोमले तु त्रि स्यादकठिनेऽपि च ।
**मेघ्यः** प्रावृषि ना त्रिस्तु मेघसाधुनि तद्भवे[२] ॥ १०२४ ॥

**मेधा** स्त्री धारणाशक्तधिषणायां धनेऽपि च ।
ना तु यज्ञे सङ्गमे तु नृस्त्री मेधाविनि त्रिषु ॥ १०२५ ॥

**मेध्यं** तु शुचिनि त्रिः क्ली बले धनसुवर्णयोः ।
ना तु मुञ्जेऽथ नद्यां स्त्री मेध्यार्कस्य तु रश्मिषु ॥ १०२६ ॥

वृष्टिसर्जनकार्येषु शतेष्वेव चतुर्ष्वपि ।
द्वितीये रश्मिषु शते मेध्या **मेषः** पुनर्नरि ॥ १०२७ ॥

सर्वेषां प्रथमे राशावुरभ्रे तु द्वयोरयम् ।
हिमोत्सर्गार्थरश्मीनां शतेषु त्रिषु कुत्रचित् ॥ १०२८ ॥

---

१. 'र' ङ. पाठः. २. 'वेत्' ङ. पाठः.

शते रश्मिषु मे(ध्यो?ष्यो)ऽथ **मेनो** ना पूर्वपार्थिवे ।
पृषदश्वाह्वये स्त्री तु मेना नार्यां स्त्रियां पुनः ॥ १०२९ ॥

**मेहा** भूमौ पुमान् मूत्रव्याधिभेदेऽपि मूत्रणे ।
**म्लेच्छाः** स्युर्म्लेच्छवाचो ये विप्रकृष्टा वनौकसः ॥ १०३० ॥

तत्र द्वयोर्म्लेच्छने तु म्लेच्छा नृस्त्री नपि त्वदः ।
ताम्रे **मेला** तु(मे?म)ष्यां* स्त्री मेलस्तु नरि सङ्गमे ॥ १०३१ ।

**मेदा** तु स्त्र्योषधीभेदे मेदने ना द्वयोः पुनः ।
वैदेहकनिषादीजे मर्त्यजात्यन्तरे भवेत् ॥ १०३२ ॥

**मेही** तु द्वीपिसंज्ञे स्याद् व्याघ्रजात्यन्तरे द्वयोः ।
भेद्यलिङ्गं तु यस्यास्ति मेहस्तत्र द्वयोः पुनः ॥ १०३३ ॥

**मैत्रो** विप्रे तथान्यत्र मर्त्यजात्यन्तरेऽपि च ।
वैश्यपूर्वकवैश्याजे व्रात्यात् स्यात् तु नपुंसकम् ॥ १०३४ ॥

पुरीषोत्सर्जने मित्रसम्बन्धिनि तु स त्रिषु ।
स्त्रीशण्डयोस्तु मित्रत्वे मैत्री **मोचा** तु शल्मलौ ॥ १०३५ ॥

कदलीमात्र इत्येके सुगन्ध्यल्पफला तु या ।
तस्यां कदल्यामित्यन्ये वृक्षस्य तु रसे पुमान् ॥ १०३६ ॥

शिग्रौ तु कश्चित् पाटल्यां पुनः स्त्रीपुंसयोरपि ।
**मोकस्तु** मोचने शिष्ये ना चतुष्पदि तु द्वयोः ॥ १०३७ ॥

मोकी तु रात्रौ स्त्री **मौढी**† पुनर्भक्षान्तरे स्त्रियाम् ।
मर्मरासंज्ञके मूढसम्बन्धिनि तु सा त्रिषु ॥ १०३८ ॥

**मौलिस्तु** नृस्त्रियोर्मूर्ध्नि चूडामकुटयोरपि ।
तथा संयतकेशेषु **यक्षो** वैश्रवणे पुमान् ॥ १०३९ ॥

---

१. 'ध्या' ङ. पाठः. २. 'ष' ख. पाठः.

---

* 'मेला मसीजलं पत्राञ्जनं च स्यान्मसिर्द्वयोः' इति त्रिकाण्डशेषः । † 'मौढी तु मर्मरा' (पु. १६४. श्लो. ७०) इति तु वैजयन्ती ।

देवजात्यन्तरे तु द्वे खाषेयाख्ये तथा शुनि[1]।
**यमो** वैवस्वते पुंसि यमने च शनैश्चरे ॥ १०४० ॥
शब्दवर्णविशेषेषु शिक्षाकाराश्चतुर्ष्वपि ।
शरीरसाधनापेक्षे सत्यादौ नित्यकर्मणि ॥ १०४१ ॥
वल्गिताख्यस्य घोटानां गतिभेदस्य चाष्टसु ।
भेदेष्वेकत्र भेदे स्यात् क्ली तु युग्मे त्रिषु त्वदः ॥ १०४२ ॥
यमजे युग्मवति च यमी तु यमुनाधुनौ ।
स्त्री यम्याविति[2] तु द्यावापृथिव्योर्द्वे तु वायसे ॥ १०४३ ॥
हीनाधिकाङ्गतुरगेऽप्यथ क्लीबं **यतं** स्मृतम् ।
यमने हस्तिपानां च पादकर्मणि तत् स्मरेत् ॥ १०४४ ॥
भेद्यलिङ्गं तु बद्धे स्यात् तथैवोपरतेऽपि च ।
**यन्त्रं** तु क्ली लघूपायकर्मनिर्माणसाधने[3] ॥ १०४५ ॥
यन्त्रणायां तु नाथ स्त्री **यवा** रश्मिमनी[4]षयोः ।
भेद्यलिङ्गं तु महति यवोत्पत्त्युचिते पुनः ॥ १०४६ ॥
क्षेत्रे **यव्यं** त्रिषु यवसाधौ यवहिते तथा ।
यव्या तु नद्यां[5] स्त्री **यम्या** पुना रात्रौ स्त्रियां त्रि तु ॥ १०४७ ॥
विद्याद् यमयितव्ये च यन्तव्ये यमसाधुनि ।
**यजिस्तु** यजमाने द्वे इति कश्चिदवोचत ॥ १०४८ ॥
धातौ तु यजतौ पुंस्त्वे **यतिस्तु** त्रिर्जितेन्द्रिये ।
परिव्राज्यपरे स्त्री तु यमने पद्यकारिणाम् ॥ १०४९ ॥
पदच्छेदान्तरे कारागृहे धातौ तु पुंस्ययम् ।
यततौ **यष्टिशब्दस्तु** नृस्त्रियोर्दण्डमात्रके ॥ १०५० ॥
गृहस्थदण्डे त्वाहान्यस्तोमराख्यायुधान्तरे ।
तरवारिसमाख्येऽन्ये खङ्गादन्यत्र चायुधे ॥ १०५१ ॥

१. 'स्त्रियां य' ग. पाठः. २. 'ति द्या' ग. पाठः. ३. 'धुनि।' ग. पाठः. [४.] 'री' क. ख. पाठः. ५. 'त्यां' ङ. पाठः.

तथा हारलतायां च मधुकाख्ये तु भेषजे ।
स्त्री **यर्यी**स्तु पुमान् सूर्ये मोक्षमार्गेऽप्यथ द्वयोः ॥ १०५२ ॥
अश्वे स्याद् ब्राह्मणे कश्चित् स्त्री त्वासावपरे पुनः ।
दिव्यवृष्टौ दीर्घवृष्टावित्यन्ये **ययु**वाक् पुनः ॥ १०५३ ॥
द्वे (त्व?अ)श्वे नाश्वमेधाश्वे **यजु**स्तु नरि पावके ।
अध्वर्यौ यजमाने तु शिष्ये च द्वे **यदु**स्तु ना ॥ १०५४ ॥
आदिक्षत्रियभेदे तद्वंशजेषु तु स द्वयोः ।
मनुष्ये चाथ **यन्ता** ना सूते हस्तिपके त्रि तु ॥ १०५५ ॥
कारके यमनस्याथ **यावो**ऽलक्तकमाषयोः ।
यवसम्बन्धिनि त्रि स्याद् **याम**स्तु प्रहरे पुमान् ॥ १०५६ ॥
यमने च नपि त्वेष सामभेदेषु केषुचित् ।
ण्यो यमाच्चेति वक्तव्यमित्येतद्वचनं यतः ॥ १०५७ ॥
अनार्षं तत एवास्य याम्यशब्दस्य दुष्टता ।
अर्थेषु यमसम्बन्धियमदेवतकादिषु ॥ १०५८ ॥
अतः स इह नास्माभिरुक्तो **यातं** तु नब् गतौ ।
†हस्त्यारोहकमर्त्येस्यादङ्कुशस्य च वारणे ॥ १०५९ ॥
गते तु त्रिर्यतियतसम्बन्धिनि च नप् पुनः ।
अपि पुंस्यपरे **यानं** वाहने गमने तु नप् ॥ १०६० ॥
**यातु** स्त्री राक्षसे ना तु पाप्मन्यन्यस्तु मन्यते ।
पथिके त्रिष्विति स्त्री तु **याता** देवरयोषिति ॥ १०६१ ॥
त्रिस्तु गन्तरि तत्रापि स्त्र्यर्थे यात्रीति मन्यताम् ।
**युगं** तु स्त्री चतुर्हस्तप्रमाणेऽन्य(तमं? मते) पुनः ॥ १०६२ ॥
षडशीत्यङ्गुले माने प्रोक्तं चाङ्गुलमानकम् ।
अणुसंज्ञकधान्यानां चतुर्दशकमङ्गुलम् ॥ १०६३ ॥

---

१. 'षु' ग. पाठः.

---

† 'हस्त्यारोहककृत्ये' इति पाठः स्यात् ।

इत्येवमथ कालेषु कृतत्रेतादिषु स्मृतम् ।
जन्मपर्वसु युग्मे च त्रि तु तद्वत्यथो नृनप् ॥ १०६४ ॥

लाङ्गलस्यन्दनादीनामीषाबन्धनदारुणि ।
ऋद्धिसंज्ञकभैषज्ये पुनः स्त्री स्याद् युगाऽथ नप् ॥ १०६५ ॥

**युग्यं** शर्वस्य धनुषि वाहने त्रि तु वोढरि ।
युगस्य युगसाधौ च **युक्त**स्तु त्रिः समाहिते ॥ १०६६ ॥

न्याय्यसंयुक्तयोश्चाथ प्रकारे भागवृत्तिकृत् ।
हरतेर्गतताच्छील्य* इत्यत्र नरमभ्यधात् ॥ १०६७ ॥

**युतं** पृथक्कृते युक्ते बद्धे च त्रिषु नप् पुनः ।
मिश्रणे च पृथक्कारे बन्धने च युतादितः(?) ॥ १०६८ ॥

**युद्ध**स्तु शत्रौ सङ्ग्रामे ना योद्धरि तु स त्रिषु ।
**यूथ**मस्त्री तिरश्चां स्याद् बृन्दे यूथी पुनः स्त्रियाम् ॥ १०६९

मागधीसंज्ञके पुष्पवल्लिभेदेऽथ **यूष**वाक् ।
व्यञ्जनस्य रसे न स्त्री छायायां तु स्त्रियामियम् ॥ १०७० ॥

यूषा स्त्रीपुंसयोस्तु स्याद्धिंसायां **योग्य**वाक् पुनः ।
अपूपे चन्दने क्षीरे वाहने च नपुंसकम् ॥ १०७१ ॥

वृद्धिसंज्ञौषधे चाथ त्रिः प्रवीणे क्षमे परे ।
उपायिन्यपरेऽस्माकं त्वर्हे स्त्रीशण्डयोः पुनः ॥ १०७२ ॥

ऋद्धिसंज्ञकभैषज्ये ना तु पुष्याख्यतारके ।
अथो पुनर्नवायां स्त्री रक्तायां गुणनेऽपि च ॥ १०७३ ॥

भरणीसंज्ञनक्षत्रे पुनर्भूमानि चाप्यथ ।
**योनिः** स्त्रीणां भगे स्थाने गृहे कारणताम्रयोः ॥ १०७४ ॥

१. 'सुतानितः' ख, 'युनादितत्' ङ. पाठः. २. 'ग' ङ. पाठः. ३. 'म्र' क. ख. ङ. पाठः.

---

* 'क्रीडोऽनुसंपरिभ्यश्च' (१. ३. २१) इति सूत्रस्थं वार्तिकम् ।

आकरे च स्त्रियां पुंसि **योगी** तु नरि पादपे ।
नागरङ्गाह्वये यावशूकाख्यलवणे त्रि तु ॥ १०७५ ॥
समाधिशीले संयोगशीले योगवति स्मृतः ।
योगिनी तु स्त्रियां शैलराजपुत्र्यामथ त्रिषु ॥ १०७६ ॥
**यौनं** स्याद् योनिसम्बन्धे क्ली गर्भाधानसंस्कृतौ ।
**रसो** रागे विषे वीर्ये तिक्तादौ पारदे द्रवे ॥ १०७७ ॥
रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः ।
देहधातुविशेषे च शृङ्गारादौ फले जले ॥ १०७८ ॥
कषायभोजनान्नेषु स्नेहे हिङ्गुलबो[1]लयोः ।
लशुने च हरिद्वर्णे शाकस्तम्बान्तरे तथा ॥ १०७९ ॥
देवमारिषसंज्ञेऽथ कश्चिदन्यः स[2]म मन्यते ।
मांसेक्षुसुरशु[3]क्तेषु नागे चेति पुमान् परे ॥ १०८० ॥
शण्डेऽप्याह रसा तु स्त्री दूर्वापातालभूमिषु ।
द्राक्षायामपि पाठायामथ **रक्तं** नपुंसकम् ॥ १०८१ ॥
रुधिरे कुङ्कुमे ताम्रे स्त्रीपुष्पे रागवस्तुनि ।
पत्राङ्गाख्ये पुमांस्त्वेष रोहीतक इति श्रुते ॥ १०८२ ॥
महीरुहप्रभेदे स्यात् तथा वर्णे च लोहिते ।
त्रि तु तद्वद्रागवतोरनुरक्तेऽपि यत् पुनः ॥ १०८३ ॥
आपादितान्यवर्णे स्याद् वर्णात् तत्राप्यथो **रथः** ।
वेतसे स्यन्दने पुंसि चक्रवाके तु स द्वयोः ॥ १०८४ ॥
रथी तु गन्त्र्यां स्त्री **रथ्या** पुनः स्त्री रथसंहतौ ।
विशिखामार्गयोः स्यात् तु रथस्य त्रिषु वोढरि ॥ १०८५ ॥
तस्य स्वीये तद्धिते च **रम्या** तु रजनौ स्त्रियाम् ।
रमणीये त्रिषु **रणः** पुनः पुंशण्डयोर्युधि ॥ १०८६ ॥

---

१. 'पो' ग, 'घो' ङ. पाठः. २. 'स्तु' ग. पाठः. ३. 'क्र' क. घ, 'क्र' ङ. पाठः. 'पु' क. ख. घ. ङ. पाठः.

ना तु शब्दे परे त्वाहुरतिशब्देऽपरे पुनः ।
नृशण्डमविशेषेण **रण्डा** तु विधवास्त्रियाम् ॥ १०८७ ॥

न्यग्रोधीसंज्ञकस्तम्बे स्त्री ना तु पुरुषेऽथ नप् ।
स्वसम्बन्धार्थशून्येऽन्तःकरणे ना तु **रङ्ग**वाक् ॥ १०८८ ॥

स्थानमात्रेऽपरे नृत्तयुद्धस्थाने पुनः परे ।
अजयस्त्वाह दर्पेऽपि क्ली तु स्यान्नागसीसयोः ॥ १०८९ ॥

**रतं** तु सुरते क्लीबं कृतरामे तु तत् त्रिषु ।
तन्निष्ठेऽप्यथ पुँल्लिङ्गो **रम्भो** दण्ड उदाहृतः ॥ १०९० ॥

द्वे त्वश्वे स्त्री पुना **रम्भा** कदल्यामप्सरोन्तरे ।
गौरवर्णकदल्यां तु केचित् सौत्री तु मेखला ॥ १०९१ ॥

या तस्यामपि नैरुक्ताः पुनर्दण्डे नरं विदुः ।
**रमा** तु लक्ष्म्यां स्त्री त्रिस्तु रन्तरि क्ली तु **रन्ध्र**वाक् ॥ १०९२

विवरे चापराधे च भूषणे त्वपरे विदुः ।
लग्नादप्यष्टमे राशौ विदुः सांवत्सरा इदम् ॥ १०९३ ॥

मर्त्यजात्यन्तरे तु द्वे विप्रमैत्रीसमुद्भवे ।
**रयि**स्तु तोयधनयोर्नृस्त्रियोरथ **रश्मि**वाक् ॥ १०९४ ॥

पुंसि क्वचित् स्त्रियां च स्यात् प्रग्रहे किरणेऽपि च ।
ज्वालायामपि च प्राह वैजयन्त्यां द्वयोः पुनः ॥ १०९५ ॥

**रङ्कु**र्मृगान्तरे नीवृद्भेदे तु नरि ना पुनः ।
**रतु**र्दूते स्त्रियां नद्यां बन्धने पथि चाथ ना ॥ १०९६ ॥

**रामो** दाशरथौ विष्णौ रतौ परशुरामके ।
बलभद्रे ध्वजे शब्दे मौलौ लक्ष्मणि वर्णयोः ॥ १०९७ ॥

शुक्ले कृष्णे वररुचिस्त्वाहामुं शबलेऽथ सः ।
वाच्यलिङ्गः शुक्लकृष्णशबलेषु गुणिष्वसौ ॥ १०९८ ॥

चारुप्रधानयोश्चापि रामा तु स्त्र्यन्तरे स्त्रियाम् ।
**राक**शब्दस्तु पुल्लिङ्गो ज्ञेय आतपसूर्ययोः ॥ १०९९ ॥

राका पुनः स्त्रियां पूर्णचन्द्रे स्यात् पूर्णिमान्तरे ।
जातार्तवायां कन्यायां **रातं** तु त्रिषु दाशिते ॥ ११०० ॥

रतसम्बन्धिनि स्त्र्यर्थे राता राती यथाक्रमम् ।
उक्तयोरर्थयोः क्ली तु दाने कन्यान्तरे पुनः ॥ ११०१ ॥

राता विहारशीले स्त्री **राधा** स्त्री कर्णमातरि ।
विशाखाख्ये च नक्षत्रे तद्युक्ते कालमात्रके ॥ ११०२ ॥

जाते तु तत्र त्रिर्ना तु राधो वैशाखमासि च ।
पौर्णमास्यां तु वैशाख्यां राधी स्त्री **राध्र**वाक् पुनः ॥ ११०३ ॥

नृशण्डयोरजन्ये च विषयेऽप्यथ **राम्भ**वाक् ।
ना दण्डे वैणवे रम्भासम्बन्धिनि तु स त्रिषु ॥ ११०४ ॥

**राशिः** क्रत्वन्तरे पुञ्जे मेषादावाढके च ना ।
साम्नोस्त्वभिन्नरोवर्गगीतयोः स्यान्नपुंसकम् ॥ ११०५ ॥

**राजा** ना सोमवल्ल्यां च चन्द्रे च द्वे तु पार्थिवे ।
क्षत्रिये च प्रभौ तु त्रिरस्मिन्नर्थत्रये यदा ॥ ११०६ ॥

स्त्र्यर्थे वृत्तिस्तदा राज्ञी ब्रह्मरीत्याह्वये पुनः ।
लोहे राज्ञी स्त्रियामेव **रितं** तु क्ली गतौ त्रि तु ॥ ११०७ ॥

गते[1]ऽथ वेद एवेदं हिंसने क्ली त्रि हिंसिते ।
**रिष्टं** स्वभावे क्ली पापेऽप्यथ त्रिरशुभे शुभे ॥ ११०८ ॥

पाप्ये च **रिक्त**शब्दस्तु शून्ये त्रि क्ली तु रेचने ।
क्षीयमाणतिथिप्रायपक्षे तु नरि स स्वयम् ॥ ११०९ ॥

चतुर्थ्यां च नवम्यां च चतुर्दश्यां तिथौ पृथक् ।
रिक्ता स्त्री· **रिपु**शब्दस्तु शत्रौ ना त्रि तु चोरके ॥ १११० ॥

---

१. 'द्वे' ख. ग. ङ. पाठः.

**रुक्मं** क्ली हेम्न्ययोभेदे तीक्ष्णसंज्ञे पुमान् पुनः ।
वक्षोविभूषणे निष्कसंज्ञे **रुच्यस्तु** ना स्मृतः ॥ ११११ ॥

पाणिग्राहे रुचिकरे पुन(स्त्री?स्त्रि)रथ भूषणे ।
विलेपने च शण्डोऽथ **रुग्रो** ना सूर्यसारथौ ॥ १११२ ॥

विनाशे दर्शनीये तु त्रिर्द्वयोर्ब्राह्मणे स्मृतः ।
**रुण्डो** नृजातिभेदे द्वे वरुटीशूद्रसम्भवे ॥ १११३ ॥

चतुष्पाज्जातिभेदे च स्यादश्वावेसरोद्भवे ।
**रुद्राणी** त्वद्रिजायां स्त्री ना तु रुद्रः शिवेऽनले ॥ १११४ ॥

देवभेदेषु मन्त्रेष्वप्येकेषु स्तोतरि त्रिषु ।
**रुह्वा** तु स्यान्नरि प्रावृट्काले प्रावृड्वनस्पतौ ॥ १११५ ॥

भूमौ तु रुह्वरी स्त्री स्यादथ **रूपं** नपुंसकम् ।
स्वभावाकृतिसौन्दर्यवपुष्षु श्लोकशब्दयोः ॥ १११६ ॥

नाटके नाटकाद्येषु शुक्लकृष्णादिकेष्वपि ।
ग्रन्थावृत्तौ च मृगजात्यन्तरे तु द्वयोरयम् ॥ १११७ ॥

**रूपणे** तु पुमान् रूपो **रूप्यं** तु क्ली विभूषणे ।
आहते हेमरजतद्वये रजत एव च ॥ १११८ ॥

त्रि तु प्रशस्तरूपेऽपि रूपणीयेऽथ **रूक्षवाक्** ।
निश्शरे दधनि क्लीबमप्रेम्णि त्वप्यचिक्कणे ॥ १११९ ॥

त्रिषु वृक्षे तु ना **रूढः** पुनः पुंसि यवे त्रि तु ।
कृतप्ररोहणे शब्देऽवयवार्थबहिष्कृते ॥ ११२० ॥

**रेफस्तु** पुंसि मूर्धन्यान्तःस्थावर्णे त्रि कुत्सिते ।
स्तोतर्यप्यथ **रेणुः** स्त्री हरेण्वाह्वयभेषजे ॥ ११२१ ॥

स्त्रीपुंसयोस्तु पांसौ स्यात् त्रसरेण्वष्टकेऽपि च ।
**रोको** रश्मौ पुमान् क्ली तु रन्ध्रे **रोहित्** पुनर्नरि ॥ ११२२ ॥

अमेरक्षे तथा वर्णभेदे त्रिषु तु तद्वति।
स्त्रियां तृश्यस्य भार्यायां नद्यङ्गुलिलतासु च ॥ ११२३ ॥

अजयस्तु द्वयोराह मत्स्यजात्यन्तरेऽपि च।
रोही रोहितकाभिख्यद्रुमे ना रोहवत्सु तु ॥ ११२४ ॥

त्रिषु रोदः पुनः शण्डे स्त्रियां च व्योम्न्यथापरे।
पृथिव्यां च यदा तु स्त्री तदा भवति रोदसी ॥ ११२५ ॥

इति ङ्यन्तमथाप्यन्ये रोदसी इति मन्वते।
सहोक्तौ भूदिवोरेव रौद्रं तु क्लीबमातपे ॥ ११२६ ॥

पार्वत्यां तु स्त्रियां रौद्री शिवशक्त्यन्तरेऽपि च।
उग्रतायां च सप्तानां मातृणामेकमातरि ॥ ११२७ ॥

त्रिषु तूग्ररसे रुद्रसम्बन्धिन्यथ लक्षवाक्।
शरव्ये क्ली नृशण्डस्तु व्याजे करुणनाम्नि तु ॥ ११२८ ॥

महीरुहप्रभेदे ना दर्शनाङ्कनयोरपि।
अयुते तु दशाभ्यस्ते लक्षं लक्षा च नपुंस्त्रियोः ॥ ११२९ ॥

लक्ष्यं शरव्ये क्ली शब्दे सिद्धे लक्षणतस्तथा।
द्रष्टव्ये त्वङ्कनीये च त्रिषु लग्नस्तु न स्त्रियाम् ॥ ११३० ॥

राशीनामुदये त्रिस्तु सक्ते मत्तगजे तु ना।
लट्वा स्त्री पक्षिभेदे च कुसुम्भेऽप्यथ केचन ॥ ११३१ ॥

लट्वः कटाहे पुंसीति प्राहुर्लब्ध्वः[1] पुनः पुमान्।
ऋषिस्थाने द्वयोस्तु स्यादपत्ये लम्बवाक् पुनः ॥ ११३२ ॥

नृस्त्रियोर्लम्बने स्त्री तु लम्बोत्कोचे परः पुनः।
आह भूमिविशेषेऽथ लघु निस्सारशीघ्रयोः ॥ ११३३ ॥

त्रिर्गुरुप्रतिपक्षे च स्यादिष्टेऽल्पमनोज्ञयोः।
एकमात्रस्वरे चैषु स्त्र्यर्थे लघ्वी लघुस्तथा ॥ ११३४ ॥

---

१. 'च' ग. पाठः. २. 'ब्ध' ख. पाठः.

क्लीबं त्वगुरुसंज्ञाकगन्धद्रव्येऽप्युशीरके ।
गुग्गुलौ तु पुमान् स्त्री तु स्पृक्कायां लघुरेव सा ॥ ११३५ ॥
लघण् मेघे टकारान्तो वायौ च नरलिङ्गकः ।
हिरण्यमाषकस्यापि भेदे स्त्री त्वप्सरस्यसौ ॥ ११३६ ॥
ललत् त्रिषु विलासस्य कर्तरि स्त्री तु भूषणे ।
लम्बमाल्ये ललन्ती स्याल्लाला तु मुखजे जले ॥ ११३७ ॥
लवलीवृक्षसंज्ञे[†] च स्त्री काञ्च्यां त्वजयोऽब्रवीत् ।
द्वे तु जात्यन्तरे नृणां मैत्रेयब्राह्मणीसुते ॥ ११३८ ॥
विलासे तु पुमाल्ँलालः स्यादुपच्छैन्दने तु नप् ।
लातशब्दस्तु पुल्लिँङ्गो वृत्तिकादानभाजने ॥ ११३९ ॥
आत्ते तु भेद्यलिङ्गः स आदाने तु नपुंसकम् ।
लिप्तं तु भुक्ते दिग्धे च त्रिः क्ली भोजनलेपयोः ॥ ११४० ॥
लिखिस्तु शिल्पिनि द्वे स्यात् कश्चित् तु विदुषि त्रिषु ।
धातौ तु लिखतौ पुंसि भूप्रदेशे तु ना लिगुः ॥ ११४१ ॥
गोत्रभेदे सज्जनस्तु मन्त्रेऽप्याह द्वयोः पुनः ।
मृगे लुब्धस्तु मृगयौ ना कदर्ये तु स त्रिषु ॥ ११४२ ॥
काङ्क्षावति च लेखस्तु पुमाल्ँलेख्ये विलेखने ।
द्वे तु देवेऽथ लेखा स्त्री कृत्रिमायां लि(खा?पा)*विति ॥ ११४३ ॥
वैजयन्त्यां शाश्वतस्तु राज्यां वररुचिः पुनः ।
सीमायामपि लेख्यं तु क्ली पत्रे लिखिताक्षरे ॥ ११४४ ॥
त्रि तु लेखयितव्ये च लेखितव्येऽप्यथो नरि ।
लेयः सिंहाख्यराशौ स्यादादेये तु स भेद्यवत् ॥ ११४५ ॥

१. 'ग' ङ. पाठः. २. 'न्त्यां' ङ. पाठः ३. 'क' ङ. पाठः.

† 'लवलीसंज्ञवृक्षे च' इति पाठः स्यात् । * 'लिपिस्त्वालेख्यलेखा स्याद् रेखा तु स्यादकृत्रिमा......लेखा तु कृत्रिमा' (पु. १३८. श्लो. २४) इति वैजयन्ती ।

लेढा तु मृदुवाते ना लेंहके त्रिरथो नृनप्।
लोहं तैजसमात्रे च मरिचे हेम्न्ययस्यपि ॥ ११४६ ॥

गन्धद्रव्येऽप्यगुर्वाख्ये लोपस्तुच्छेदने पुमान्।
अदर्शने च शब्दस्य शुकभेदे तु सा स्त्रियाम् ॥ ११४७ ॥

लोपा लोभ्यं त्वारकूटे क्ली ना मुद्गे त्रिषु त्वयम्।
लोभनीयेऽथ लौहं स्याल्लोहसम्बन्धिनि त्रिषु ॥ ११४८ ॥

क्लीबलिङ्गं त्वयस्येतद् वैजयन्त्यामधीयते।
वरो ना भूपजामात्रोर्देवादेरीप्सिते क्रुधि ॥ ११४९ ॥

सम्भक्तौ च निरोधे च वृङ्वृञोर्भाववाचकः।
यवक्षारे तुरुष्काख्यनिर्यासे मारिषान्तरे ॥ ११५० ॥

लतामारिष इत्युक्ते चटके तु द्वयोरयम्।
अथोत्तरेषु षट्सु क्ली तक्कोले कुङ्कुमेऽपि च ॥ ११५१ ॥

गुग्गुलौ हरिताले च महोदर्याख्यमुस्तके।
वर्तुलाकाररचितवह्निकुण्डेऽप्यथ स्त्रियाम् ॥ ११५२ ॥

पथ्यागुञ्जाहरिद्रासु दूर्वादारुहरिद्रयोः।
आस्फोताकण्टकार्योश्च वराथ स्याद् वरी इति ॥ ११५३ ॥

कण्टकारीशतावर्योरथ श्रेष्ठे विशेष्यवत्।
क्लीबमेव मनागिष्टे केचिदाहुस्तदव्ययम् ॥ ११५४ ॥

वर्णस्त्वक्षर एवास्त्री केषांचिदपरे पुनः।
विलेपने प्रकारे च शोभायां चास्त्रियां विदुः ॥ ११५५ ॥

ना तु द्रव्याश्रितगुणमात्रे शुक्लादिके पुनः।
विशेषादथ विप्रादौ स्तुतौ गीतिक्रमे कुथे ॥ ११५६ ॥

अजयस्त्वाह चित्रेऽपि उक्तिमात्रे च दृश्यते।
आकृत्यां माल्ययशसोर्वृते वेषे परे पुनः ॥ ११५७ ॥

१, 'टा' ङ. पाठः,

ब्रह्मचर्ये च वर्णा तु तुवरीसंज्ञधान्यके ।
पृथुबीजे स्त्रियां वज्रं त्वस्त्री कुलिशशस्त्रयोः ॥ ११५८ ॥

मणिवेधे रत्नभेदेऽप्यशनौ चासनान्तरे ।
जङ्घे पद्मासनावस्थे तत्सन्धिनिहितौ करौ ॥ ११५९ ॥

ताभ्यामेव स्थितौ भूमावन्तरिक्षासनं च तत् ।
इति लक्षणमप्युक्तं यस्य नामान्तरं तथा ॥ ११६० ॥

व्रतभेदे च गोमूत्रयावकाहारजीवने ।
मासमेकं पुमांस्त्वेष यज्ञभेदे जिघांसतः ॥ ११६१ ॥

द्विषज्जनपदं स्त्री तु वज्रा स्नुह्याख्यभूरुहे ।
तत्रैव पत्ररहितस्नुह्यां वज्री भवेत् पुनः ॥ ११६२ ॥

ह्रीबेरे क्ली वशा तु स्त्री वन्ध्यायां दुहितर्यपि ।
स्त्रीमात्रे चेति केषाञ्चिन्मतमन्ये तु मन्वते ॥ ११६३ ॥

वन्ध्यास्त्रियां वन्ध्यगव्यामित्यथो गजयोषिति ।
अग्निमन्थाख्यवृक्षे ना त्वायत्तत्वप्रभुत्वयोः ॥ ११६४ ॥

जने स्पृहायां त्रिस्त्वेष आयत्ते द्वे तु मानुषे ।
करणीवैश्यसम्भूते स्यादथो वर्षमस्त्रियाम् ॥ ११६५ ॥

वृष्टौ संवत्सरे जम्बूद्वीपांशे भारतादिके ।
प्रावृट्संज्ञर्तुभेदे तु वर्षाः स्त्रीभूम्नि ना पुनः ॥ ११६६ ॥

वत्सः संवत्सरे वृक्षभेदे कुटजसंज्ञके ।
ऋषिभेदे च तद्वंश्यपुरुषेषु तु भूमनि ॥ ११६७ ॥

फले तु कुटजस्य क्ली द्वे तु तर्णकसंज्ञके ।
गोपोते बालमात्रेऽन्ये तनयादौ त्रिषु त्वयम् ॥ ११६८ ॥

वर्ये स्याद् वक्षसि त्वस्त्री ना वस्नो मूल्यमेदूयोः ।
आगमे क्ली तु लवणे रुमाजे वप्रवाक् पुनः ॥ ११६९ ॥

अस्त्री क्षेत्रे वास्तुभूमौ प्राकारे सानुरोधसोः ।
प्राकारमूलके त्वाह वैजयन्त्यां पुमांस्त्वसौ ॥ ११७० ॥

पितरि त्रि तु वन्ध्यं स्यान्निष्फले स्त्री तु योषिति ।
अयोग्यायां गर्भधृतेर्वलस्तु नरि पर्वते ॥ ११७१ ॥

मेघे दैत्यविशेषे च धान्ये निष्पावसंज्ञके ।
द्वे तु काकेऽथ वल्ला स्त्री तुवरीसंज्ञधान्यके ॥ ११७२ ॥

द्वे नृजात्यन्तरे मल्लीक्षत्रियप्रभवेऽथ सा ।
नृस्त्रियोः स्यात् संवरणे वल्कस्तु दशने नरि ॥ ११७३ ॥

अस्त्री तु वल्कले ना तु वधो हननवज्रयोः ।
बले स्त्री तु कलम्ब्याख्यजलशाके वधा त्रि तु ॥ ११७४ ॥

हिंसके वैजयन्त्याह वहस्तु नरि मारुते ।
स्कन्धदेशे गवाश्वादेर्वहा तु सरिति स्त्रियाम् ॥ ११७५ ॥

वयो स्त्री तरुशाखायां ना तु गत्यशनादिषु ।
व्रजस्तु नान्ये षण्डेऽपि गोष्ठे मार्गसमूहयोः ॥ ११७६ ॥

आपस्तम्बप्रयोगेऽसावश्वगोष्ठे च दृश्यते ।
ना तु मेघे च शैले च नियमे तु व्रतोऽस्त्रियाम् ॥ ११७७ ॥

क्ली त्वृतौ वत्सरे मासे विष्णावग्नौ धनान्नयोः ।
भुक्तौ कर्मणि चाथाह विधाने चापि सज्जनः ॥ ११७८ ॥

महाव्रतसमाख्ये स्यात् क्रतुभेदेऽप्यथ त्रिषु ।
व्यक्तं स्यान्निश्चिते स्पष्टे विदुष्यन्यस्त्वभाषत ॥ ११७९ ॥

पुमांसं विदुषि क्ली तु व्यञ्जनाह्वयकर्मणि ।
व्यङ्गस्तु भेके (द्वि? द्वे) त्रिस्तु विरूपाङ्गगताङ्गयोः ॥ ११८० ॥

ना तु नीलपृषद्रूपवङ्गव्याधौ नृभूम्नि तु ।
वङ्गाः स्युर्देशभेदे तद्राजे वाङ्गः पुमानथ ॥ ११८१ ॥

---

१. 'व' ख. पाठः. २. 'रा' ख. ङ. पाठः.

तस्यापत्येषु बहुषु वङ्गाः पुंभूम्नि नप् पुनः ।
त्रपुणि स्यान्नृस्त्रियोस्तु गतौ वङ्गा भवेत् तु ना ॥ ११८२ ॥

वंशः पृष्ठास्थ्नि गेहोर्ध्वकाष्ठे वेणौ गणे कुले ।
नासोर्ध्वास्थ्नीक्षुभेदे च वंशवाद्ये तु सा स्त्रियाम् ॥ ११८३ ॥

वंशी वन्यस्तु पुंसि स्याद् धान्ये मर्कटकाह्वये ।
वेत्रे च स्त्री तु वन्या स्याद् वनवृन्दे लतान्तरे ॥ ११८४ ॥

तिक्तकोशातकीसंज्ञे क्ली तु कंसोत्पले त्रि तु ।
वनसाधौ वंशभवे पुनर्वंश्यस्त्रिषु स्त्रियाम् ॥ ११८५ ॥

वंश्या कुस्तुम्बरीसंज्ञभेषजे स्यात् तु वर्यवाक् ।
त्रिषु श्रेष्ठे स्त्रियां वर्या तत्र या स्यात् पतिंवरा ॥ ११८६ ॥

वटी रज्जौ त्रयी ना तु न्यग्रोधेऽन्यस्त्ववोचत ।
अपूपभेदे द्वे त्वेष वेणुकीवैश्यजे नरे ॥ ११८७ ॥

वण्टो दात्रस्य मुष्टौ ना भागे विभजने पुनः ।
नृस्त्रियोरथ वण्डो ना पुरुषे मृतभार्यके ॥ ११८८ ॥

अनिविष्टे त्रिषु क्ली तु वण्डं निष्कुषितत्वचि ।
अग्रशिश्ने सज्जनस्तु शिश्नमात्रेऽथ स त्रिषु ॥ ११८९ ॥

दुश्चर्मणीति कोऽप्याहच्छिन्नपुच्छपशावपि ।
केचित् त्वल्पेऽथ वक्रो ना विष्णावपि शनैश्चरे ॥ ११९० ॥

अङ्गारके च क्लीबं तु गन्धद्रव्यान्तरे विदुः ।
तगराख्ये स्त्रियां त्वेषा वक्रा वीणान्तरे त्रि तु ॥ ११९१ ॥

कुटिले वक्त्रशब्दस्तु क्लीबे पुंस्यपि चापरे[1] ।
अनुष्टुप्छन्दसो वृत्तविशेषेषु तथा मुखे ॥ ११९२ ॥

वम्रः पुंस्यृषिभेदे स्याद् धूमवर्मप्रभेदयोः[2] ।
उपदीकाजातिमात्रे वम्रो वम्री च नृस्त्रियोः ॥ ११९३ ॥

---

१. 'चामके' क, ग, घ, 'चापके' ख, पाठः. २. 'र्ण' ग, पाठः.

व्ययो वित्तसमुत्सर्गे विगमे पक्षिणो गतौ।
लग्नाच्च द्वादशे राशौ ना त्रिस्तुल्ये त्रपाययोः ॥ ११९४ ॥
वर्तिर्दीपदशायां स्त्री दीपे गात्रानुलेपने।
वस्त्रस्य तु दशायां स्यान्नृस्त्रियोरथ नृस्त्रियोः ॥ ११९५ ॥
वस्तिर्मूत्राशये नाभेश्चाधोदेशे भिषज्यताम्।
स्यात् स्नेहनोपकरणे कश्चित् त्याहाम्बरस्य च ॥ ११९६ ॥
दशायां ना तु धातौ स्याद् वसा(पाऽवा)दादिके तथा।
वङ्किः* पर्शुसमाख्येऽस्थिन पार्श्वस्य स्त्री पुमान् रथे ॥ ११९७ ॥
अह्नि च त्रिस्तु कुटिले शल्यके तु द्वयोरयम्।
वह्निस्त्वग्नौ पुमानक्षिण द्वे त्वश्वे वहिवाक् तु ना ॥ ११९८ ॥
अग्नावुक्षिर्णे द्वयोस्त्वश्वे वनिस्त्वग्नौ च सानुनि।
याच्ञायां वनतौ धातौ वनोतौ च पुमानथ ॥ ११९९ ॥
शकुनौ द्वे वमिस्त्वग्नौ धातौ च वमतौ पुमान्।
स्त्री तु वान्तावथो वर्ल्मीर्ना महेन्द्रसमुद्रयोः ॥ १२०० ॥
त्रिः सान्द्रे स्त्री तु वन्दिः स्यात् प्रग्रहे ना तु वन्दतौ।
त्रि तु वन्दिनि वर्वीस्तु शकटे स्त्री द्वयोः पुनः ॥ १२०१ ॥
शरभाख्यमृगेन्द्रे स्यादिति कश्चिदवोचत।
वटिरुद्देहिकाशूननाभ्योः कल्केऽपि कश्चन ॥ १२०२ ॥
स्त्रियां पुंसि तु धातौ स्याद् वटतौ वेष्टनार्थके।
वसुर्नाग्नौ ह्रदे योक्त्रे किरणेऽन्धुकपादपे ॥ १२०३ ॥
पादपे पीतमुद्गे चारत्निसंज्ञप्रमाणके।
आदिक्षत्रियभेदे च देवभेदेष्वथ त्रिषु ॥ १२०४ ॥

१. 'सूत्रिस्तु त्रवाययोः' ग. पाठः. २. 'थ सा' क. ख. घ. ङ. पाठः. ३. 'क्री' क ख. घ. पाठः. ४. 'ष्णि' क. पाठः. ५. 'ने' ग. ङ. पाठः. ६. 'स्मिन्ना' ग., 'मिं' ङ. पाठः. ७. 'च्छि' ग., 'ल्मि' क. घ. पाठः. ८. 'टी रुद्देहि' ग. पाठः. ९. 'ति' ख. ङ. पाठः.

* 'पार्श्वस्य वङ्किः पर्शुकी पृष्ठस्यास्थिन' (पु. १८२. श्लो. ११५) इति तु वैजयन्ती।

प्रशस्तेऽथाजय[1]ः प्राह स्वादौ च द्वे तु मानुषे ।
स आह शण्डालिङ्गं तु सलिले द्रविणे मणौ ॥ १२०५ ॥
घसिराख्ये च भैषज्ये क्षीरस्वामी वचोऽपठीत् ।
**वल्गु** तु त्रिषु चारौ च मधुरे वाचि तु स्त्रियाम् ॥ १२०६ ॥
क्ली नेत्ररोम्णि **वप्ता** तु त्रिषु व्रीह्यादिवापके ।
कारके मुण्डनस्यापि ना तु ताते **वणिक्** पुनः ॥ १२०७ ॥
क्रयविक्रयिके त्रि स्याद् वणिज्यायां पुनः स्त्रियाम् ।
व(र्ष्मे?र्ष्म) ने स्त्री परिच्छेदे शरीरश्रेष्ठयोरपि ॥ १२०८ ॥
सुश्रुतिस्तु महत्याह सज्जनस्तु पठत्यदः ।
शुष्मसंज्ञबलेऽन्यस्तु वदत्युच्छ्रायवाचिनम् ॥ १२०९ ॥
**वज्री** तु वज्रयुक्ते त्रि पुलिङ्गस्तु पुरन्दरे ।
**वर्णी** वर्णवति त्रि स्याद् ब्रह्मचारिण्यथ स्त्रियाम् ॥ १२१० ॥
स्त्रीमात्रे स्त्रीविशेषे च हरिद्रायां च वर्णिनी ।
**व्रती** व्रतवति त्रि स्याद् द्वे त्वश्वे त्रि तु **वन्दिवाक्** ॥ १२११ ॥
पाठके स्तुतिवाक्यस्य द्वे तु स्तवनजीविनोः ।
वैदेहे[3] मागधे चापि[4] **वशी** तु त्रिः प्रभौ स्मृतः ॥ १२१२ ॥
द्वयोस्तु जलमार्जारे **वार्ता** तु स्यात् स्त्रियामियम् ।
वार्ताक्यां वर्तनोदन्तकृषिप्र[5]भृतिवृत्तिषु ॥ १२१३ ॥
निःसारारोग्ययोस्तु क्ली वृत्तिमन्नीरुजोस्त्रिषु ।
सम्बन्धिनि च वृत्तस्य वृत्तेश्चाथ त्रिषु स्मृतः ॥ १२१४ ॥
**वामः** स्यात् सुन्दरे सव्ये प्रतिकूले स्त्रियां पुनः ।
महादेवस्य नवसु शक्तिष्वेकत्र योषिति ॥ १२१५ ॥
योषिद्भेदे परे वामा स्यादश्वायां तु वाम्यसौ ।
सज्जनस्तु द्वयोरुष्ट्रे ना तु स्याद् वरुणे स्मरे ॥ १२१६ ॥

---

१. 'यस्त्वाह' क. ग. घ. ङ. पाठः. २. 'ण' क. ख. घ. ङ. पाठः. ३. 'ही' क. ङ. पाठः. ४. 'ह' क. ख. ङ. पाठः. ५. 'ष्टि' ङ. पाठः.

**वालस्तु** ना संवरणे चलने केशपुच्छयोः ।
केचित्तु करिणः पुच्छे केचित् त्वश्वस्य वालधौ ॥ १२१७ ॥

ह्रीबेरे तु नपि स्त्री तु तत्र या जतुकाहला ।
वाली हर्षुलकन्यायामपि स्यात् तु नृलिङ्गकः ॥ १२१८ ॥

**व्यासो** द्वैपायनमुनौ विस्तारे चाप्यसौ तु नप् ।
धनुर्विशेषे विगतक्षेपादौ तु व्यथो पुमान् ॥ १२१९ ॥

**व्यालो** दुष्टगजे द्वे तु श्वापदे भुजगे तथा ।
अजयस्त्वपठद् व्याघ्रे स एव त्रिः खलेऽपठीत् ॥ १२२० ॥

बहुप्रदे शठे चाथ शार्दूले **व्याघ्रवाग्** द्वयोः ।
व्याघ्री तु कण्टकार्यां स्त्री **वाटस्तु** नरि वेष्टने[1] ॥ १२२१ ॥

मण्डले नगरे सीम्नि भोजने वलये गृहे ।
त्रयी तु वाटी गेहान्तःकुसे फलफले वने ॥ १२२२ ॥

इत्कटे तु स्त्रियामेव वाटी मर्त्यान्तरे पुनः ।
विण्मैत्रीजे द्वयोरस्त्री वृतौ **वाशा** पुनः स्त्रियाम् ॥ १२२३ ॥

आटरूषे वाचि तु स्याद् वाशी नैरुक्तसम्मता ।
आदित्यस्य गभस्तीनां शतानि त्रीणि सृष्टये ॥ १२२४ ॥

हिमस्य तेषामेकस्मिन् शते रश्मिषु ताः स्त्रियः ।
वाशं सामप्रभेदे क्ली कद्वेदेत्यृचि स्थिते ॥ १२२५ ॥

अथ त्रिवंशसम्बन्धे वाशिते तु स नृस्त्रियोः ।
स्त्र्यर्थे वाशीति पूर्वत्र स्याद् वाशा तु परत्र सा ॥ १२२६ ॥

**वाश्रस्तु** पुरुषे शब्दे सङ्घाते च पुमानथ ।
वाश्रा धेनौ स्त्रियां **वातः** पुनर्वायौ नरि त्रि तु ॥ १२२७ ॥

कृतवाने क्रियायां तु वातेः क्लीबमथ त्रिषु ।
**वानं** शुष्कफले शुष्के व्यूतिशोषणयोस्तु नप् ॥ १२२८ ॥

---

1. 'प' क. ख. ङ. पाठः.

वातेर्धातोः क्रियायां च कटे त्वप्यजयोऽब्रवीत् ।
वाणस्तु पुंसि वीणायां शब्दे चाथ नपुंसकम् ॥ १२२९ ॥

ज्ञेयं हुडुकहिक्कायां वाणी तु गिरि सा स्त्रियाम् ।
वाद्यं तु क्लीबमातोद्ये त्रिर्वाद्ये वादनीयके ॥ १२३० ॥

वाहस्तु ना बलीवर्दे वहनेऽन्यस्त्ववोचत ।
प्रस्थद्वयेऽर्धखार्यां स्यादन्यः कंसयुगेऽवदत् ॥ १२३१ ॥

खारीचतुष्टये त्वन्ये द्वे तु गर्दभघोटयोः ।
वाह्यं वाहयितव्ये च वोढव्ये वाहसाधुनि ॥ १२३२ ॥

त्रिषु क्ली वाहने वाव्या पुनः स्त्री भेषजान्तरे ।
बलागंज्ञे त्रिषु पुनर्वेष्ट्यवेष्टयितव्ययोः ॥ १२३३ ॥

व्रातस्तु ना समूहे स्यादन्ये तु व्रातलक्षणम् ।
प्राहुरुत्सेधजीवाश्च नानाजातीयका अपि ॥ १२३४ ॥

अव्यवस्थितवृत्ताश्च सङ्घा व्राता इतीदृशम् ।
मनुष्ये तु द्वयोरन्ये पुनर्व्रात्ये प्रचक्षते ॥ १२३५ ॥

कुर्वन्त्यनुपनीता ये विवाहं ब्राह्मणादयः ।
व्रात्या व्राताश्च ते सर्वे तत्सुताश्चावृतासु ये ॥ १२३६ ॥

इत्येवमाहुर्व्रातस्य लक्षणं व्रात्यवाक् पुनः ।
कुर्वन्त्यनुपनीता ये विवाहं ब्राह्मणादयः ॥ १२३७ ॥

तेषु नान्ये तु संस्कारहीनमात्रे प्रचक्षते ।
द्वयोस्तु प्रतिलोमानां प्रतिलोमजमानुषे ॥ १२३८ ॥

व्रात्या तु व्रातचर्यायां स्त्री त्रि तु व्रतसाधुनि ।
वार्क्षं क्लीबं वने वृक्षसम्बन्धिनि पुनास्त्रिषु ॥ १२३९ ॥

वाजिस्तु पुङ्खवसने (?) केशपङ्क्तावपि स्त्रियाम् ।
द्वे त्वश्वे व्राजिवाक् सूत्रसार्थेऽश्वे तु द्वयोरयम् ॥ १२४० ॥

---

१. 'पर्ठत्' ग. पाठः. २. 'चंयं' क. ख. ङ. [illegible] ग. पाठः.

**वाति**स्तु वायौ ना धातौ गतिगन्धनकर्मणि।
स्त्री तु तत्क्रिययोः शोषे **वारि**स्तु स्त्री मतङ्गजाः॥ १२४१॥

यत्र देशेषु गृह्यन्ते तत्र[1] त्वाहाजयः कृती।
कलश्योप्सु[2]* तु न क्लीबे **वाशि**स्तु नरि पावके॥ १२४२॥

स्याद् वाशतौ वाशयतौ वाश्यतावपि धातुषु।
भेद्यलिङ्गं तु भीरौ स्यादिति केचित् स्त्रियां पुनः॥ १२४३॥

चतुष्पदि स्यात् प्रजनप्राप्तायामपरः पुनः।
द्वे गोमायाविति प्राह **वारु**स्तु द्वे तुरङ्गमे॥ १२४४॥

जङ्घायां तु स्त्रियां शुष्कफले तु नरि मन्यते।
षड्वर्गशबरस्वामी **वास्तु**स्तु नरशण्डयोः॥१२४५॥

गृहभूमौ गृहे सीम्नि सुरुङ्गायां पुरेऽपि[3] च।
**वाजी** तु ना शरे वह्नौ पर्वतेऽपि धनञ्जयः॥ १२४६॥

द्वे त्वश्वपक्षिणोर्वाजवति तु त्रिरथोषसि।
वाजीति स्त्र्यथ **वाग्मी** स्याद् वाचोयुक्तिपटौ त्रिषु॥ १२४७॥

शुके तु द्वे अथो **वाली** पुमान् सुग्रीवपूर्वजे।
अश्विन्याख्ये तु नक्षत्रे वालिन्यौ[4] (तु!स्तः) स्त्रियावथ॥ १२४८॥

केशह्रीबेरपुच्छादिसंयुक्तार्थेऽभिधेयवत्।
**विश्वा** त्वतिविषाभूम्योः स्त्री शुण्ठ्यां स्त्रीनपुंसकम्॥ १२४९॥

सर्वनाम तु सर्वस्मिंस्त्रिषु क्ली तु जगत्यदः।
विश्वे तु देवभेदेषु पुंसि भूम्नि च मन्यताम्॥ १२५०॥

**विषा** त्वतिविषायां स्त्री क्ष्वेडे तु स्यान्नृशण्डयोः।
जले तु क्ली **विधा** तु स्त्री भृतौ वृद्धिप्रकारयोः॥ १२५१॥

१. 'त्राह स्वज' क. ख. ग. पाठः. २. 'श्य' ख. पाठः. ३. 'तु' ग. पाठः. ४. 'न्यास्तु' ग. पाठः.

* 'कलश्यामप्सु च क्लीबे' इति स्यात्, कलश्यां वारिशब्दस्य नब्लिङ्गताया दर्शनात्।

तथा विधाने हस्त्यन्ने विधाने तु नपुंसकम् ।
उच्चारणप्रभेदेषु स्पृष्टतादिषु नप् पुनः ॥ १२५२ ॥

**वित्तं** धने त्रिषु पुनः प्रथितेऽपि विचारिते ।
**विष्टिस्तु** कर्मणि हठात् कारिते नाथ तत्कृति ॥ १२५३ ॥

त्रिराजूसंज्ञके त्वर्थे स्त्रीलिङ्गा शाश्वतः पुनः ।
वेदनायामिति प्राह कालभेदे प्रवेशने ॥ १२५४ ॥

अजयस्त्वाह मूल्येऽपि हठात्कारितकारिणि ।
**विभुस्तु** ना कुबेरेऽर्के त्रि तु सर्वगनित्ययोः ॥ १२५५ ॥

स्वामिन्यथ **विधुः** पुंसि विष्णौ चन्द्रे हुताशने ।
वायौ काले राक्षसे तु द्वे त्रि तु स्यादुपद्रुते ॥ १२५६ ॥

अजयस्तु प्रकरणे दन्त्योष्ठ्यादिपदावलेः ।
दन्त्योष्ठ्यादिं च विदुषो वाचकं विन्दुरित्यमुम् ॥ १२५७ ॥

विप्रुड्वाचिनमोष्ठ्यादिबिन्दुशब्दं च विभ्रमात् ।
एकं मत्वा द्वयोरर्थौ विन्दुर्ज्ञातरि विप्रुषि ॥ १२५८ ॥

इत्युक्तवान् प्रहातव्यं त्वेतद् वेदविशारदैः ।
**विष्वक्** तु नानागतिके त्रिस्तत्र स्त्र्यर्थता यदा ॥ १२५९ ॥

तदा विषूची स्त्री त्वेव रोगभेदे विषूच्यथ ।
इदं सर्वत इत्यर्थे स्यादव्ययमथो **विराट्** ॥ १२६० ॥

स्त्री छन्दोजातिभेदेषु केषुचित् क्षत्रिये पुनः ।
द्वे यज्ञभेदे तु पुमान् विष्णौ **विद्युत्** पुनः स्त्रियाम् ॥ १२६१ ॥

तडिति त्रिषु तु ज्ञेयं दीप्रे **विष्टप्** पुनः स्त्रियाम् ।
दिवि पुंसि तु सूर्येऽथ **वीरो** ना शर्वशक्रयोः ॥ १२६२ ॥

स्कन्दे कुबेरे राहौ च पुत्रे शूरे तु स त्रिषु ।
अजयस्तु परेऽप्याह तद् विचार्यं विचक्षणैः ॥ १२६३ ॥

विगतप्रेरणे पक्षिक्षेपके नृस्त्रियोः पुनः ।
विक्षेपे पक्षिणां क्षेपेऽप्यथ **वीतं** नपुंसकम् ॥ १२६४ ॥

असारहस्तितुरगे हस्त्यारोहाङ्घ्रिकर्मणि ।
वारणे चाङ्कुशस्य स्याद् गतिकान्त्यशनादिषु ॥ १२६५ ॥
विगतौ त्रिस्तु विगते शान्ते कान्तगतादिषु ।
**वीध्रं** पुंस्यनले वायौ मेघे क्ली तु नभस्यथ ॥ १२६६ ॥
विमले त्रिषु **वीर्यं** तु क्लीबं स्यादन्नरेतसोः ।
शक्त्याह्वयबले शौर्यसंज्ञके च पराक्रमे ॥ १२६७ ॥
अजयस्त्वाह दीप्तौ च नैतदन्यत्र दृश्यते ।
माहात्म्ये स्त्री तु वीर्यातिबलासंज्ञौषधेऽथ ना ॥ १२६८ ॥
स्याद् **वीको**ऽर्थेऽनिले नाशे वसन्तेऽक्षिमले पुनः ।
वीका स्त्रीत्यब्रवीत् कश्चिद् **वीक्षा**शब्दस्तु नृस्त्रियोः ॥ १२६९ ॥
विस्मये वीक्षणाभिख्यक्रियायां चाप्यथ स्त्रियाम् ।
**वीचिः** पङ्क्त्यूर्मिलेशेषु स्यात् पुंस्यपि च कश्चन ॥ १२७० ॥
**वीडु**र्दृढे त्रि क्लीबं तु बले **व्युष्टं** तु नप्यदः ।
प्रभाते च विवासे च व्युषिते तु त्रिषु स्मृतम् ॥ १२७१ ॥
**व्युष्टिः** प्रयोजनाभिख्यफले प्राह तु सज्जनः ।
महीरुहफले तत्तु स्यात् प्रमत्तस्य भाषितम् ॥ १२७२ ॥
शास्त्रव्युष्टिरिति प्राहुः शास्त्रस्यैव प्रयोजनम् ।
अग्निचित्येष्टकानां च भेदेष्वृद्धिविवासयोः ॥ १२७३ ॥
स्त्री ना तु क्रतुभेदे स्याद् व्रतिभेदे तु स त्रिषु ।
कालेऽष्टमेऽष्टमे भुङ्क्ते यस्तत्र **वृष**वाक् तु ना ॥ १२७४ ॥
बृहस्पतौ बलीवर्दे धर्मे पुंसि पुरन्दरे ।
राशौ च वृषभाभिख्ये पैठ्यते बलकर्णयोः ॥ १२७५ ॥
द्वे त्वश्वे मूषिके देवे त्रि तु स्याद् भूरिरेतसि ।
श्रेष्ठेऽपि सुकुले क्ली तु रेतस्यन्तःपुरेऽथ सा ॥ १२७६ ॥

१. 'कथ्यते' ग. पाठः. २. 'क' क. पाठः.

वृषा कदल्यां न्यग्रोधीसंज्ञस्तम्बेऽपि भेषजे ।
ऋद्धिसंज्ञेऽथ वृष्यं त्रिर्यत् किञ्चिच्छुकवर्धनम् ॥ १२७७ ॥
तस्मिन् पुंसि तु माषाख्यधान्य इक्षौ च सा पुनः ।
वृष्या स्त्रियां विदार्यां स्याद् वृद्धिसंज्ञे च भेषजे ॥ १२७८ ॥
वृत्तं तु क्ली नरेऽप्यन्ये स्वरूपाचारवृत्तिषु ।
पद्यव्योक्तिषु सम्भैक्तौ त्रिषु तु स्याद् दृढे मृते ॥ १२७९ ॥
अतीताधीतकठिनवर्तुलेषु वृतेऽथ नप् ।
वृन्तं तरूणां प्रसवबन्धने चूचुकेऽथ ना ॥ १२८० ॥
कालिङ्गसंज्ञवल्ल्यां स्याद् वृद्धस्तु स्थविरे त्रिषु ।
त्रिमात्रसामवर्णे च स्यादेधितमनीषिणोः ॥ १२८१ ॥
ना तु वैवस्वते क्ली तु शैलेये वृत्रवाक् तु ना ।
दैत्यभेदे गिरौ मेघे शत्रौ ध्वान्ते च नप् पुनः ॥ १२८२ ॥
पापे वृकस्तु ना सूर्ये चन्द्रे जाठरपावके ।
वज्रे वृके देशभेदे पुनर्भूम्नि च नप् पुनः ॥ १२८३ ॥
लाङ्गले त्रिषु तु स्तेने धूर्ते द्वे तु मृगान्तरे ।
ईहामृगाख्ये शुनि च वृकी तु स्त्री यथोदितम् ॥ १२८४ ॥
निरुक्ते वृद्धवाशिन्यां वृष्णिस्तु क्षत्रियान्तरे ।
तद्वंश्येषु च मेषे तु द्वे अथावेष्टके स्त्रियाम् ॥ १२८५ ॥
वृत्तिर्निरोधे सम्भक्तौ ना तु धात्वोः स वर्ततौ ।
वृत्यतौ चाथ ना वेशो वेश्याजनसमाश्रये ॥ १२८६ ॥
अजयस्तु पठत्येनं गृहमात्रेऽपि शब्दवित् ।
प्रवेशे वेशके तु त्रिरथोग्रीवैश्यजे द्वयोः ॥ १२८७ ॥
मर्त्यजात्यन्तरे वेश्यं पुनः क्ली माल्लिकान्तरे ।
गणिकायां तु वेश्या स्त्री ना तु वेषस्त्रिविष्टपे ॥ १२८८ ॥

१. 'वृ' क. ग. ङ. पाठः २. 'व्याप्तिषु' ग. पाठः. ३. 'म्पत्तौ' ग. पाठः. ४. 'तु' ग. ङ. पाठः.

रूपे च कश्चित् क्लीबं तु व्योम्नि कश्चित्तु वारिणि।
वेणस्तु द्वे मनुष्याणां जातिभेदे प्रकीर्तितः ॥ १२८९ ॥
पुत्रे वैदेहकाम्बष्ठयोर्वेननाम्न्येव जीवति।
लङ्घनप्लवनाद्यैः स्यात् तूग्रराज्ञीसुतेऽपि च ॥ १२९० ॥
मायासम्मोहनादीनि वृत्तिश्चेत् तस्य स स्वयम्।
वेणा स्यान्नृस्त्रियोर्ज्ञाननिशामनगतिष्वपि ॥ १२९१ ॥
चिन्तायामपि वादित्रग्रहणेऽप्यथ वेनवाक्।
द्वे नृजात्यन्तरेऽम्बष्ठीवैदेहकसमुद्भवे ॥ १२९२ ॥
स्यात् पारधैनुके चाथ वैदेह्यम्बष्ठजेऽपि च।
ना तु प्रजापतौ यज्ञे मेधाविनि तु स त्रिषु ॥ १२९३ ॥
ध्यानिन्यप्यथ वेलो ना चूते क्ली तत्फलेऽथ सा।
वेला कूले समुद्रस्य तदम्बुविकृतावपि ॥ १२९४ ॥
तरङ्गे वत्सरे काले व्यवस्थायामपि स्त्रियाम्।
वेल्ला तु वेल्लने नृस्त्री विडङ्गे तु नपुंसकम् ॥ १२९५ ॥
वेटी स्त्री नावि वेटस्तु ना शब्दे वेष्टवाक् तु ना।
श्रीवेष्टसंज्ञे[2] निर्यासे वेष्टने तु नरस्त्रियोः ॥ १२९६ ॥
वेष्टा वेध्यं शरव्ये क्ली वाद्यभेदे तु सा स्त्रियाम्।
वेध्या वेणिस्तु केशानां बन्धभेदे जलस्रुतौ ॥ १२९७ ॥
कश्चित्तु मध्ये नद्यादेर्मेष्यां स्याच्च लतान्तरे।
देवताडाह्वये ना तु धातौ स्याद् वेणतावथ ॥ १२९८ ॥
वेदिर्वितर्दौ यागाय परिष्कृतमहीतले।
अग्निकुण्डे चतुष्कोणे त्वग्नि(द?कु)*ण्डे परे विदुः ॥ १२९९ ॥
ना तु वेदयतौ ज्ञेयो वेगी तु नरि मारुते।
त्रि तु वेगवति त्रिस्तु वेधा विदुषि तं पुनः ॥ १३०० ॥

१. 'पुत्र' ग. पाठः. २. 'ज्ञानि' ग. पाठः.

* 'कुण्डं हवित्री हवनी कुण्डे स्याद् वर्तुले परम्। वेदिः स्त्रियां चतुष्कोणे' (पु. ९२. श्लो. १०९. ११०) इति वैजयन्ती।

कश्चित् सर्वविदि स्राह ना तु विष्णुविरिञ्चयोः ।
देशेऽप्यन्येऽथ शङ्खोऽस्त्री ललाटास्थिगमर्मणोः ॥ १३०१ ॥

सङ्ख्याभेदे निखर्वाख्यसङ्ख्याया दशकात्मके ।
कम्बौ च वलये चाथ निधिभेदे पुमानयम् ॥ १३०२ ॥

अमावास्यातिथौ सर्पराजभेदर्षिभेदयोः ।
मणिभेदे शुक्तिसंज्ञभेषजेऽपि प्रयुज्यते ॥ १३०३ ॥

शठो ना मातुलुङ्गे च भव्यधुर्धूरयोरपि ।
सिते च सर्षपे तस्य फले चार्थे नपुंसकम् ॥ १३०४ ॥

पापे वङ्गाख्यलोहे च प्रसूनेऽत्रोक्तशाखिनाम् ।
त्रिस्तु धूर्ते च शत्रौ च मार्जारे तु द्वयोरयम् ॥ १३०५ ॥

शल्यमस्त्री शलाकायां शङ्कुसंज्ञायुधान्तरे ।
अजयस्तु वदत्येनं काण्डेऽर्थस्तस्य चिन्त्यताम् ॥ १३०६ ॥

विद्धा शरीरं लग्नेऽन्तः पुमांस्तु मदनद्रुमे ।
मद्रराजान्तरे चाथ श्वाविट्संज्ञमृगे द्वयोः ॥ १३०७ ॥

शय्या स्त्री शयनीये च ग्रन्थगुम्फे च सा त्रि तु ।
शय्याधौ पाणिभवे मन्दिरे तु नपुंसकम् ॥ १३०८ ॥

शम्या तु युगकीले स्त्री माने षट्त्रिंशदङ्गुले ।
अथो शमयितव्ये त्रिः शमितव्ये तु तन्नपि ॥ १३०९ ॥

शमस्तु शान्तौ पुल्लिङ्गो माने च चतुरङ्गुले ।
शमी तु स्यात् सक्तुफलासंज्ञवृक्षान्तरे स्त्रियाम् ॥ १३१० ॥

मुद्गमाषादिसस्यानां बीजकोश्यां च कर्मणि(?) ।
शशस्तु रोमकर्णाख्यमृगे द्वे ना तु भेषजे ॥ १३११ ॥

बोलसंज्ञे शलं तु क्ली श्वाविडः शलले त्रि तु ।
गन्तर्यथ द्वयोः स स्याद् गर्भाख्यचतुष्पदि ॥ १३१२ ॥

---

१. 'पि' ग. पाठः.

**शफः** पुंसि च शण्डे च लाङ्गलाङ्गान्तरे खुरे ।
महावीराख्यपात्रस्य परिग्रहणकाष्ठयोः ॥ १३१३ ॥
पृथश्च यस्येत्यृचि च गीतयोः सामभेदयोः ।
**शयो** ना शयने पाणौ कृकलासे तु स द्वयोः ॥ १३१४ ॥
**शवस्तु** कुणपे न स्त्री जले तु क्ली गतौ तु ना ।
**शष्पं** बालतृणे क्लीबं रूपे च भगवांस्त्वमुम् ॥ १३१५ ॥
नरं वररुचिः प्राह **शस्त्रं** तु क्लीबमायुधे ।
अयस्यृङ्मन्त्रभेदेषु शंसायाः साधनेषु च ॥ १३१६ ॥
छुरिकायां तु शस्त्री स्त्री **शल्कं** तु शकले नपि ।
केचित्त्वात्तरसे प्राहुः शकले स्याच्च वल्कले ॥ १३१७ ॥
मुद्गरे च त्रिषु त्वेष भीतौ[1] पातरि चाप्यथ ।
**शको** ना पशुविष्ठायां देशभेदे जले तु नप् ॥ १३१८ ॥
शका तु गवयाभिख्यपशुजातौ स्त्रियामियम् ।
**शरः** पुंसि शरद्वायौ क्षीरादेर्मुखबन्धने ॥ १३१९ ॥
इन्द्रसंज्ञतृणस्तम्बे हिंसामार्गणयोरपि ।
क्ली तु ह्रीबेरजलयोः **शतं** त्वस्त्री बहुन्यपि ॥ १३२० ॥
दशानां दशके चाथ **शंस्यः** शंस्ये त्रि ना पुनः ।
अमावाहवनीयाख्ये **शर्वस्तु** स्याच्छिवे पुमान् ॥ १३२१ ॥
शर्वाणी तु मृडान्यां स्त्री **शक्तिस्त्वृष्यन्तरे** पुमान् ।
स्त्री साङ्ख्यप्रकृतौ लक्ष्म्यां सामर्थ्ये नीतिवेदिनाम् ॥ १३२२ ॥
प्रसिद्धासु प्रभावादिजातासु स्यात् तिसृष्वपि ।
नैरुक्ताः कर्मणि प्राहुः शस्त्रभेदे तु सा द्विधा ॥ १३२३ ॥
शक्तिः शक्ती च तच्चापि शस्त्रं कासूरिति स्मृतम्[3] ।
**शत्रिस्तु**[4] कुञ्जरे क्रौञ्चसंज्ञपक्षिणि च द्वयोः ॥ १३२४ ॥

१. 'नी' ङ. पाठः. २. 'स्मा' ख. पाठः. ३. 'श्रु' क. ख. ङ. पाठः. ४. 'कि' ख. 'ति' क. पाठः.

शद्रिस्तु[1] पर्वते पुंसि द्वयोस्तु गजमेषयोः ।
शङ्कुः शम्भौ चतुर्वक्त्रे पुमान् सङ्ख्यान्तरेऽपि च ॥ १३२५ ॥
शतादिसङ्ख्यानप्त्वस्य[2] बाधार्थं[3] लिङ्गमन्वशात् ।
शङ्कुः पुंसीति भगवांस्तच्च सङ्ख्यान्तरं विदुः ॥ १३२६ ॥
कोटीनां लक्षमाचार्याः केचित् पुंशण्डयोः पुनः ।
कीले मेढ्रेऽस्त्रभेदे च गोत्रे चान्ये तु मन्वते ॥ १३२७ ॥
वृक्षपत्रसिराजाले द्वे तु मार्जारहंसयोः ।
जलजन्तुप्रभेदे च राक्षसेऽथ नपुंसकम् ॥ १३२८ ॥
एतमुत्यादिवर्गस्य तृतीये साम्न्यथापरे ।
पुन्नपुंसकयोरेनमविशेषेण मन्वते ॥ १३२९ ॥
अप्राण्यर्थे तथा प्राह शङ्कुरप्राणिगोचरः ।
इत्यर्धर्चादिवर्गस्य वैजयन्त्यां प्रपञ्चने ॥ १३३० ॥
शयुस्तु नार्के स्वप्ने च द्वयोस्त्वजगरेऽथ ना ।
शरुः स्यादायुधे क्रोधे द्वयोस्तु स्यात् कपिञ्जले ॥ १३३१ ॥
शत्रुस्तु पुंस्यमित्रे स्याल्लग्नात् षष्ठे च राशिके ।
त्रि तु शातयितर्युक्तमिन्द्रशत्रुपदे यथा ॥ १३३२ ॥
शस्ता प्रजापतौ पुंसि चण्डाले तु द्वयोरिति ।
कश्चित् कश्चित्तु शस्ता स्यात् स्तोतरि त्रिषु ना पुनः ॥ १३३३ ॥
मित्रावरुणयोश्चेति पितरीति च मन्यते ।
शका तु हस्ते ग्रन्थादौ पुंस्यथो शकरी स्त्रियाम् ॥ १३३४ ॥
नद्यां विद्युति काञ्च्यां च बाहौ छन्दोन्तरे तथा ।
षट्पञ्चाशत्स्वरे स्त्री तु शङ्खिनी स्थावरान्तरे ॥ १३३५ ॥
चौरपुष्पसमाख्येऽथ शङ्खी शङ्खवति त्रिषु ।
श्यामो ना हरिते वर्णे वर्णे कृष्णे तथा(बुऽम्बु)[5]दे ॥ १३३६ ॥

२. 'क्षप' ग. पाठः. ३. 'र्थां' क. ४. 'प्त्या' ङ. पाठः. [५.] क. घ. पाठः.

पीलुद्रुमे च श्यामा तु निशीथिन्यां स्त्रियामियम् ।
पिप्पलीफलिनीविद्युत्पालिनीशारिबासु च ॥ १३३७ ॥

स्त्रीव्यञ्जनकृतायां च[1] कन्यायां विहगान्तरे ।
पोतकीसंज्ञकेऽथ क्ली मरीचे व्योम्नि च त्रि तु ॥ १३३८ ॥

उक्तवर्णवतोः श्यावः पुनर्ना सवितुर्हये ।
वर्णे च कपिशे त्रिस्तु तद्वति त्रिस्तु शान्तवाक् ॥ १३३९ ॥

शमिते शान्तियुक्ते च ना तु स्यात् सुनिषण्णके ।
नाट्यस्थरसभेदे च क्ली तु *शान्ताथ सास्त्रियाम् ॥ १३४० ॥

शाको हरितके पत्रपुष्पादिदशके तरोः ।
मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् ॥ १३४१ ॥

त्वक् पुष्पं कवकं चेति शाकं दशविधं स्मृतम् ।
इत्युक्ते वृक्षभेदे तु ना पृथुच्छदसंज्ञके ॥ १३४२ ॥

अजयो द्वीपभेदेऽपि ब्रवीत्यस्य ह्यनन्तरे† ।
शकटे च पुमांस्त्री तु शाकी शाके महत्यसौ ॥ १३४३ ॥

नानाजातीयशाकानां समाहार इतीतरे ।
शाणस्तु निकषे पुंसि स्यादुन्मानान्तरे तथा ॥ १३४४ ॥

चतुष्टये स माषाणां दाने शाणी तु सा स्त्रियाम् ।
गोणीसमाख्यावपने त्रि तु स्याच्छणयोगिनि ॥ १३४५ ॥

शादस्तु शष्पे पङ्के च शदने[2] स्वर्णबन्धयोः ।
ना त्रिस्तु[3] शत्तरि शदसम्बन्धिनि च सा पुनः ॥ १३४६ ॥

गृह्यकारस्यै शौदाभिरित्युक्तेश्चिन्त्यतां[4][5] गतिः ।
शाला तु गेहे गेहैकदेशे तु स्त्री तरोस्तथा ॥ १३४७ ॥

---

१. 'स्यात्' म. पाठः. २. 'दशने' क. ग. घ. ङ. पाठः. ३. 'स्तु' ग. पाठः. ४. 'दाशाभि' क. ग. घ. पाठः. ५. 'के च्चि' क. घ. पाठः.

---

* 'शान्तावथास्त्रियाम्' इत्येव पाठ्यं भाति । † आनन्तर्यं च स्कन्दपुराणे कौमारिकाखण्डे ३७. तमाध्याये १६. १७. श्लोकयोरुक्तमनुसन्धेयम् ।

स्कन्धसञ्जातशाखायां सूक्ष्मैलायां च ना पुनः ।
पत्त्रे गमने त्रिस्तु गन्तरि श्वालवाक् तु ना ॥ १३४८ ॥

आशुगत्यां द्वयोस्तु स्याच्छुनि शाखा पुनः स्त्रियाम् ।
तरोर्लतायां देहस्य पादे बाहौ तथाङ्गुलौ ॥ १३४९ ॥

वेदव्यक्तिषु चाथो ना स्कन्ददेवस्य पृष्ठजे ।
देवभेदे नृस्त्रियोस्तु व्याप्तौ श्राद्धं पुनर्नपि ॥ १३५० ॥

पितॄणां भोजनायां स्यात् तत्तु श्रद्धावति त्रिषु ।
तत्रापि स्त्र्यर्थवृत्तित्वे श्राद्धा श्राणा त्वियं स्त्रियाम् ॥ १३५१ ॥

यवाग्वां त्रि तु पक्वे स्यात् क्षीराच्च हविषस्तथा ।
अन्यत्र क्ली तु पाकेऽथो शार्ङ्गं क्ली सामसु क्वचित् ॥ १३५२ ॥

द्वे तु पक्ष्यन्तरे शार्ङ्गं पुनर्धनुषि शार्ङ्गिणः ।
अजयः शृङ्गविहितचापेऽप्याह विशेषतः ॥ १३५३ ॥

धनुर्मात्रे च नप् शृङ्गविकारे तु त्रिषु स्मृतः ।
शृङ्गसम्बन्धिमात्रे चाप्यथाहतुर्वैदिकौ ॥ १३५४ ॥

शार्ङ्गः पक्षिविशेषे द्वे इति शारः पुनः पुमान् ।
वायौ कर्बुरवर्णे च त्रि तु तद्वत्यथो नृनप् ॥ १३५५ ॥

द्यूतशारौ वराटेऽपि शवरस्वाम्यवोचत ।
शारिः स्त्री शारिकासंज्ञविहङ्गे नृस्त्रियोः पुनः ॥ १३५६ ॥

पर्याणभेदे द्यूतस्य गुडे शारयतौ तु ना ।
शालुः कषाये ना त्रिस्तु तद्वति द्वे तु दर्दुरे ॥ १३५७ ॥

शार्ङ्गी तु पुंसि गोविन्दे तथा शार्ङ्गवति त्रिषु ।
शिवः शम्भौ पद्मरागे गोरसे शीथुकीलयोः ॥ १३५८ ॥

सुनिषण्णाख्यशाके च नाथ वातमृगे द्वयोः ।
अथो शिवा स्त्री पार्वत्यां शम्भोर्नवसु शक्तिषु ॥ १३५९ ॥

१. 'स्तु' ङ. पाठः. २. 'न' क. ग. घ., 'न न' ख. पाठः. ३. 'स्त्रियां तु शा' ग. पाठः.

एकशक्तौ गवीथ्वांख्यक्षुद्रधान्ये नदीषु च ।
हरीतक्यामामलक्यां तामलक्यां शमीद्रुमे ॥ १३६० ॥
तुलस्यां क्रोष्टुभेदे च दीप्तजिह्वाह्वयेऽथ तत् ।
क्लीबं वारिणि कल्याणे स्थौणेये मूलकान्तरे ॥ १३६१ ॥
चाणक्यमूलकाभिख्ये व्योम्नि त्रि तु शुभान्विते ।
**शिला** त्वश्मनि पेषण्यां द्वाराधःस्थितदारुणि ॥ १३६२ ॥
मनःशिलायां शैलेये धातौ माक्षिकसंज्ञके ।
द्वारनासाविधारण्यां स्थूणाशीर्षे तु सा द्विधा ॥ १३६३ ॥
शिला शिली च वध्वां तु शिली गण्डूपदस्य च ।
एषु स्त्री क्ली तु धान्यानामार्जने सिलसंज्ञके ॥ १३६४ ॥
**शिखा** तु स्त्री शिफाशाखाघृणिज्वालासु मूर्धनि ।
चूडायां केकिचूडायां चूचुकेऽप्यग्रमात्रके ॥ १३६५ ॥
अजयस्तु प्रधानेऽपि सज्जनोऽग्रेऽपि भूरुहः ।
ना तु सर्पान्तरे सर्पसत्रयाजिफणाभृताम् (?) ॥ १३६६ ॥
**शिम्बो** द्वे मृगजातौ स्याद् बीजकोश्यां तु सा स्त्रियाम् ।
शिम्बा मुद्गादिसस्यानामथोचे शाकटायनः ॥ १३६७ ॥
शिम्बी[2] निष्पाववल्लीति **शितं** तु त्रिषु तेजिते ।
ना तु बाणे **शितिस्तु** स्त्री तेजने ना तु वर्णयोः ॥ १३६८ ॥[1]
शुक्ले कृष्णेऽप्यृजौ वर्णद्वयैकवति तु त्रिषु ।
**शिरिर्द्वयो**र्व्यालमृगे शृणातौ तु पुमानयम् ॥ १३६९ ॥
**शिशुः** पुंस्यृषिभेदे च स्कन्दे च द्वे तु बालके ।
**शिग्रुर्भोजनशाके** स्त्री ना तु शोभाञ्जनद्रुमे ॥ १३७० ॥
**श्लिकुर्ना** विषादे ना ज्योतिषेऽपि मृगास्थनि ।
**शिखी** नाग्न्यंशुवृक्षेषु शरे केतुग्रहे द्विजे ॥ १३७१ ॥

१. 'ता ॥' क. पाठः. २. 'म्बा' ग. पाठः

परिव्राजि तथा वृक्षविशेषेऽश्मन्तकाह्वये ।
अथो शिखावति त्रि स्याद् द्वे कुक्कुटमयूरयोः ॥ १३७२ ॥

शीलमस्त्री स्वभावेऽपि सद्वृत्तेऽप्यथ शीतवाक् ।
क्लीबं जले च शैत्ये च त्रिस्तु तद्वति ना पुनः ॥ १३७३ ॥

श्लेष्मातके वेतसे च शीघ्रो ना मारुते त्रिषु ।
क्षिप्रे क्लीबं त्वसत्त्वे चेत्याहुरेकेऽथ[1] शीरवाक् ॥ १३७४ ॥

द्वयोरजगरे स्त्री तु शीरा कार्पासिकाह्वये ।
स्तम्बे लताकुशे त्वेके शीरीत्याहुर्द्वयोः पुनः ॥ १३७५ ॥

शीर्वी न्यङ्कौ कृमौ चाथ मद्ये शीधुर्नृ[2]शण्डयोः ।
पक्वैरिक्षुरसैः सिद्धमद्यभेदेऽपि मन्वते ॥ १३७६ ॥

श्रीमांस्तु पुंसि गोविन्दे कुबेरे गृहकेतुषु ।
इट्चराख्यबलीवर्दे कदम्बतिलकाख्ययोः ॥ १३७७ ॥

वृक्षयोर्गुग्गुलौ द्वे तु शुके लक्ष्मीवति त्रिषु ।
शीवा त्वजगरे द्वे स्यात् सर्प इत्यपरे पुनः ॥ १३७८ ॥

सृगाल इत्यथ शुभं क्ली जले मङ्गले तथा ।
लग्नाच्च नवमे राशौ भेद्यलिङ्गं त्वतः परम् ॥ १३७९ ॥

मञ्जुप्रशस्तयोश्चापि मङ्गलेन समन्विते ।
अर्घ्यायां तु शुभा स्त्री स्याच्छुक्रस्त्वर्कसितत्वयोः ॥ १३८० ॥

अध्वरे दक्षिणाग्नावप्यग्नौ चन्द्रे च भार्गवे ।
ज्येष्ठमासे कृतावंशौ यज्ञपात्रगृहान्तरे ॥ १३८१ ॥

ना द्वे द्विजे शिशौ चाथ क्ली जने धनपुण्ययोः ।
रेतस्यक्षिरुजाभेदे सामभेदे च काञ्चने ॥ १३८२ ॥

त्रि तु मेध्ये सिते चाथ घर्मसर्जनरश्मिषु ।
शतत्रये स्त्रियः शुक्लाः शुक्लस्तु नरलिङ्गकः ॥ १३८३ ॥

१. 'त्रे' क. ख. पाठः. २. 'नृ' क., 'मृ' ख. ग. पाठः.

ज्योत्स्नापक्षे श्वेतवर्णे त्रि तु तद्वति नब् जले ।
शुकस्तु कीरे द्वे क्ली तु स्थौणेयाह्वयभेषजे ॥ १३८४ ॥

ना तु व्यासमुनेः पुत्रे रावणानुचरेऽप्यथ ।
शुक्तं क्ली काञ्जिके कल्कजातावित्यपरे विदुः ॥ १३८५ ॥

यन्मस्त्वादि शुचौ भाण्डे सक्षौद्रगुडकाञ्जिके ।
त्रिरात्रं धान्यराशिस्थं तत्रापि त्रि तु पूतिताम् ॥ १३८६ ॥

आपन्ने परुषेऽम्ले च शुल्कं त्वस्त्री महीपतेः ।
मार्गादिषु प्रदेयेऽर्थे विवाहाय वराद् धने ॥ १३८७ ॥

प्राबे शुष्मं तु नप् तोये संयोगबलयोरपि ।
कश्चित्तु पुंसि सवितर्यपि मारुतकालयोः ॥ १३८८ ॥

शुङ्गा त्रयी पल्लवस्य कोश्यां वृक्षस्य ना पुनः ।
ऋषिभेदेऽमुना प्रोक्तमधीते वेत्ति वापि यः ॥ १३८९ ॥

तत्राथ क्ली श्रुतं शास्त्रे श्रवणाख्ये च कर्मणि ।
त्रिषु त्वाकर्णितेऽस्मात्तु वैजयन्त्यां पृथग् जगौ ॥ १३९० ॥

आकर्णितादवधृते क्लीबं शुद्रस्तु ना रवौ ।
त्रि तु पूते केवले च क्ली तु शुद्धौ जले त्रि तु ॥ १३९१ ॥

शुभ्रं दीप्तिमति स्याच्च शुक्ले शौक्ल्ये तु पुंस्ययम् ।
शुण्ठो ना तृणभेदे स्यात् पशौ पेश्यां च स त्रि तु ॥ १३९२ ॥

अल्पे स्त्रीपुंसयोस्तु स्याच्छोषणे शुष्णवाक् तु ना ।
अर्के कश्चित्तु रश्मौ च ब्रूते कुक्षिनिदाघयोः ॥ १३९३ ॥

बले तु क्ली शुनस्तु द्वे शुनि वायौ तु ना नपि ।
सुखेऽथ शुचिरीशाने सूर्ये चन्द्रेऽग्निशौक्ल्ययोः ॥ १३९४ ॥

उपधाशुद्धसचिवे ग्रीष्मे चाषाढमासि च ।
त्रि तु शुद्धेऽनुपहते शुक्ले शुक्तिः पुनः स्त्रियाम् ॥ १३९५ ॥

मुक्तास्फोटेऽङ्कोलदलसंज्ञभेषजवस्तुनि ।
तिन्त्रिर्ण्यां तिन्त्रिडीकायाः फले दुर्नामिकाह्वये ॥ १३९६ ॥

जलजन्तौ च घोटानां रोमावर्तान्तरेऽपि च ।
सज्जनस्त्वपठीदेनामुन्माने कर्षसंज्ञके ॥ १३९७ ॥

वैजयन्त्यां तु कर्षाख्यमानस्य द्विगुणेऽपठीत् ।
अक्षिरोगविशेषे च पुमांस्त्वृष्यन्तरे स्मृतः ॥ १३९८ ॥

सखाय आनिषीदेति पञ्चवर्गस्य दर्शके ।
शुभिस्तु नार्के यतिनि स्याद्दृषाविति कश्चन ॥ १३९९ ॥

द्वे तु विप्रे सुन्दरे तु त्र्यथ स्त्री शोषणे शुषिः ।
रन्ध्रे च ना तु धातौ स्याच्छुष्यतौ शुण्ठिवाक् तु ना ॥ १४०० ॥

धातौ स्याच्छुण्ठतौ स्त्री तु नागरे शुन्ध्युवाक् तु ना ।
सूर्येऽग्नावहनीत्यन्यः शकुनौ तु द्वयोरथ ॥ १४०१ ॥

शुन्ध्यवोऽप्सु स्त्रियः शूरः पुनर्वीरे त्रिषु द्वयोः ।
कुक्कुटे श्वेतशालौ तु पुमान् शूलं तु न स्त्रियाम् ॥ १४०२ ॥

रुग्भेदे शस्त्रभेदे च शूद्रवाक् तु द्वयोरियम् ।
तुर्यवर्णे सङ्करजेऽप्येतयोः पुनरर्थयोः ॥ १४०३ ॥

स्त्र्यर्थे शूद्राथ पुंयोगे शूद्री स्त्री भूम्नि तु स्मृता ।
घर्मोत्सर्गार्थरश्मीनां त्रिशत्याः प्रथमे शते ॥ १४०४ ॥

शूद्राः स्त्री रश्मिषु क्ली तु रजते शूकवाक् पुनः ।
अस्त्री धान्यस्य सूक्ष्माग्रे शुङ्गानुक्रोशयोरथ ॥ १४०५ ॥

परिमाणान्तरे शूर्पमस्त्री द्रोणद्वयात्मके ।
सज्जनः पुनराहैनमर्धप्रस्थे तथैव सः ॥ १४०६ ॥

द्रोणाख्यपरिमाणस्य माने प्राह चतुर्गुणे ।
प्रस्फोटनक्रियायां च साधने शूषवाक् तु नप् ॥ १४०७ ॥

---

१. 'र्ण्यां' ग. पाठः. २. 'णी' ग. पाठः.

बले सुखे च श्रूषा तु शाकभेदे स्त्रियामियम्।
वैजयन्त्यां कासमर्दे स्माह शूली तु शङ्करे ॥ १४०८ ॥
पुंसि शूलवति त्वेष त्रिषु शृङ्गस्तु न स्त्रियाम्।
विषाणे शैलशिखरे वररुच्यादयः पुनः ॥ १४०९ ॥
सानौ क्रीडाम्बुयन्त्रे च प्रधानेऽन्यस्तु मन्यते।
प्राधान्येऽन्यः प्रभुत्वेऽथ जीवकाह्वयभेषजे ॥ १४१० ॥
ना क्ली तु ज्वलिनि स्त्री तु शृङ्गी स्याद् भेषजान्तरे।
यस्य कर्कटशृङ्गीति संज्ञा यस्याह्वयो विषा ॥ १४११ ॥
तत्रापि भेषजे मत्स्यविशेषेऽन्ये त्वभुत्सत।
मद्गुराख्यस्य मत्स्यस्य प्रियायामित्यथो शृधूः ॥ १४१२ ॥
गुदे स्त्री कृमिजातौ च ना तु स्याद् दानवान्तरे।
ख्याते बलिरिति स्यात्तु शृङ्गी ना वृषभाह्वये ॥ १४१३ ॥
भेषजे वृषभेऽश्वे च यस्य शृङ्गपदे भवेत्।
मांसबुद्बुद उक्ता तु शृङ्गिणी सुरभौ स्त्रियाम् ॥ १४१४ ॥
महिषे तु द्वयोः शृङ्गवति तु त्रिः पुमान् पुनः।
शेषोऽप्रधानेऽनन्ताख्यसर्पराजेऽथ शार्ङ्गिणः ॥ १४१५ ॥
अवतारान्तरेऽपत्ये त्रिस्त्वन्यत्रोपयुक्ततः।
माल्याक्षतादिदाने तु स्त्री शेषा शेववाक् तु नप् ॥ १४१६ ॥
सुखे धने च शेवा तु निद्राभेदे स्त्रियामियम्।
प्रचलासंज्ञके श्वेतस्त्वृषिभेदे नृलिङ्गकः ॥ १४१७ ॥
कुलशैलान्तरे मेरोरुत्तरान्नीलपर्वतात्।
उत्तरे शुक्लवर्णे च स्यादथो त्रिषु तद्वति ॥ १४१८ ॥
क्लीबं तु दध्नि रजतेऽप्यथ श्वेता सुरान्तरे।
पैष्टिकीसंज्ञके स्त्री स्यान्नदीभेदे लतान्तरे ॥ १४१९ ॥
निरूपितः श्वेतशब्दः श्येतस्तु श्वेतवर्णके।
पुमांस्तद्वति तु त्रि स्यात् तत्रापि स्त्र्यर्थता यदा ॥ १४२० ॥

तदा श्येता तथा श्येनी मृगे द्वे त्वपि पक्षिणि ।
श्येनसंज्ञतृणप्राणिजात्योः स्यादेतयोर्यदा ॥ १४२१ ॥

स्त्र्यर्थे वृत्तिस्तदा रूपं श्येतीत्येवाथ पुंस्ययम् ।
**श्येनः** सामान्तरेषु स्यात् क्रतुभेदे जिघांसतः ॥ १४२२ ॥

द्वे त्वश्वे पत्रिसंज्ञे च पक्षिभेदे स्त्रियां पुनः ।
श्येना स्यात् प्राचिकासंज्ञपक्षिजातावथ द्वयोः ॥ १४२३ ॥

शकुनावप्यजगरे **श्येत्यः** **श्रेष्ठः** पुनस्त्रिषु ।
स्यात् प्रशस्यतमे क्ली तु ताम्रे **श्रेणिस्तु** नृस्त्रियोः ॥ १४२४ ॥

समानजातीयानां स्याच्छिल्पिनां संहतावथ ।
व्याचष्टेऽष्टादशगणविशेष इति शब्दवित् ॥ १४२५ ॥

हर्षनन्दी तथा पङ्क्तौ धारायामपि नप् पुनः ।
**श्रेयः** सामविशेषे स्याद् होइयेमानुकोद्भवे ॥ १४२६ ॥

तथा मोक्षे च धर्मे च मङ्गले त्रि तु तद्वति ।
स्यात् प्रशस्यतरे चाथ स्त्र्यर्थे वृत्तिर्यदा तदा ॥ १४२७ ॥

एतयोरर्थयो रूपं श्रेयसीति स्त्रियां पुनः ।
श्रेयसी हस्तिपिप्पल्यां स्यात् पथ्यापाठयोरपि ॥ १४२८ ॥

**शैलस्तु** भूधरे पुंसि शिलासम्बन्धिनि त्रिषु ।
वृत्तौ शीलभवायां स्त्री शैलीत्येवं प्रचक्षते ॥ १४२९ ॥

**शैखः** पुनर्द्वयोर्मर्त्यजातिभेदे यदुद्भवः ।
अनन्यपूर्वब्राह्मण्यां विप्रव्रात्यात् प्रकीर्तितः ॥ १४३० ॥

शिखासम्बन्धिनि पुनस्त्रिरथो **शोणवाङ्** नरि ।
हिरण्यबाहुसंज्ञे स्यान्नदभेदेऽपि पादपे ॥ १४३१ ॥

टुण्डुसंज्ञे रक्तवर्णे त्रि तु तद्वति तत्र च ।
स्त्र्यर्थे शोणी च शोणा च घोटभेदे तु स द्वयोः ॥ १४३२ ॥

१. 'टु' ङ. पाठः.

उत्तः कोकनदच्छाये शौकस्तु शुचि ना स्त्रियाम् ।
शोकी रात्रावथो शौण्डः शुण्डासम्बन्धिनि त्रिषु ॥ १४३३ ॥
मत्ते च कुक्कुटे च द्वे शौण्डी तु जलदावलौ ।
पिप्पल्यां च स्त्रियां षट्कः पुनः षण्णां गणे त्रिषु ॥ १४३४ ॥
विशेषात् काममदयोर्लोभहर्षरुषामपि ।
मानस्य चेत्यमीषां ना षण्णां सङ्घेऽथ षड्ध्वनेः ॥ १४३५ ॥
सम्भवत्सु समासेषु कशब्देन कृतेष्वदः ।
तत्तत्समासप्राप्तं स्याल्लिङ्गमित्यवधार्यताम् ॥ १४३६ ॥
षष्ठं तु पूरणे षण्णां त्रिः षष्ठी तु स्त्रियां तिथौ ।
स्कान्द्यां षष्ठविभक्तौ च पार्वत्यां चाथ षण्डवाक् ॥ १४३७ ॥
अस्त्री वृक्षसमूहे स्यात् पद्मादीनामितीतरे ।
शाश्वतस्तु गवां पत्यौ पुंस्याह छ्यूमवाक् पुनः ॥ १४३८ ॥
कैश्चिद्देवेष्यते नान्यैर्लिङ्गं तस्य पुमान् मतः ।
चन्द्रे रश्मौ तथा तन्तौ मङ्गले चाथ नब् जले ॥ १४३९ ॥
सत्त्वं स्वभावे सत्तायां द्रव्येऽन्तःकरणे बले ।
पराक्रमे साङ्ख्यगुणे व्यवसायात्मभावयोः ॥ १४४० ॥
माहात्म्ये पौरुषे त्वस्त्री पिशाचादौ च जन्तुषु ।
प्राणे चाथ समं तुल्ये साधौ च त्रिषु स त्वयम् ॥ १४४१ ॥
सर्वशब्दस्य पर्यायः सर्वनामसु सा त्वियम् ।
स्त्री समा वत्सरे केचित् स्त्रीभूम्नचर्थेऽत्र मन्वते ॥ १४४२ ॥
सभा सभ्येषु सङ्घाते द्यूते सदसि मन्दिरे ।
स्त्री त्रिस्तु तत्र यद् वस्तु व्योमाद्यं भेन संयुतम् ॥ १४४३ ॥
सहा तु पुष्पस्तम्बेषु त्रिषु स्त्री तरणौ तथा ।
नीलझिण्ट्यां पीतझिण्ट्यामित्यप्यतिबलाह्वये ॥ १४४४ ॥

---

१. 'तम्' ङ॰ पाठः.

---

§ तरणिश्चौषधिभेदः ।

बलासंज्ञे च भैषज्यस्तम्बयोरोषधावपि ।
मुद्गपर्ण्यभिधानायां भेद्यलिङ्गं तु सोढरि ॥ १४४५ ॥

सङ्ख्यमस्त्री रणे स्त्री तु सङ्ख्या स्याद् गणने तथा ।
एकत्वादौ विचारे च सव्यं तु त्रिषु दक्षिणे ॥ १४४६ ॥

शरीरभागे वामे च सोतव्यसवितव्ययोः ।
तथा प्रेरयितव्ये च मृतके त्वनले पुमान् ॥ १४४७ ॥

सभ्यस्तु त्रिः सभासाधौ तथा सामाजिकेऽपि च ।
सज्जनेऽप्यथ यागस्थे पूर्वेऽप्याहवनीयतः ॥ १४४८ ॥

अग्निभेदे पुमान् सह्यः पुनर्ना पर्वतान्तरे ।
पश्चिमार्णवपार्श्वस्थे सोढव्ये तु त्रि नप् पुनः ॥ १४४९ ॥

आरोग्ये क्ली तु सत्यं स्याच्छपथे तथ्य एव च ।
त्रि तु तद्वति सत्या तु सत्यभामाह्वये स्त्रियाम् ॥ १४५० ॥

पत्न्यन्तरे केशवस्य स्पशस्तु नरि संयुगे ।
चारेऽथ यजमानस्य पत्न्याः सन्नहने स्पशा ॥ १४५१ ॥

योक्त्रेण स्त्र्यथ ना स्पर्श उपतापप्रदानयोः ।
स्पर्शने कादिवर्णेषु मावसानेषु सज्जनः ॥ १४५२ ॥

पुनर्जारेऽवदद् द्वे तु स एवाब्रूत किङ्करे ।
त्रि तु स्प्रष्टरि सिंहस्तु पठति स्रोपतप्तरि ॥ १४५३ ॥

स्वरः षड्जाद्युदात्ताद्योरज्वर्णे कण्ठजस्वने ।
अरे च शोभने पुंसि त्रि तु स्याच्छोभनारके ॥ १४५४ ॥

अतिशीघ्रेऽप्यथो सामस्वेयज्जादिषु षट्सु नप् ।
स्वन्नं पुनर्बहुव्रीहौ सुजग्धे रुचिते त्रिषु ॥ १४५५ ॥

शोभनत्वादिसंयुक्ते त्वन्ने तत् स्यान्नपुंसकम् ।
स्वर्णं तु हेम्नि क्ली रक्तनालिकेरे तु पुंस्ययम् ॥ १४५६ ॥

**स्वक्ष**स्तु त्रिषु यस्याक्षशब्दार्थः शोभनोऽक्षि वा ।
तत्र तत्रापि च स्त्र्यर्थे **स्वक्षा** पूर्वे परत्र तु ॥ १४५७ ॥

स्वक्षी स्याच्छोभने त्वक्षे परवल्लिङ्गतां स्मरेत् ।
**स्वज**स्तु शोभने छागे द्वयोरौरसपुत्रयोः ॥ १४५८ ॥

प्राणिजात्यन्तरे त्रिस्तु स्वशब्दार्थसमुद्भवे ।
प्रशस्ताजार्थयुक्ते च प्रशस्ते त्वजवस्तुनि ॥ १४५९ ॥

परवल्लिङ्गतां विद्यादथ स्तनभवे त्रिषु ।
**स्तन्यं** क्षीरे तु तत् क्लीबं **सर**स्तु नरि मारुते ॥ १४६० ॥

क्षीरे तु क्ली द्वयोस्त्वेष निषादशनकीसुते ।
मर्त्यजात्यन्तरे त्रिस्तु स्थिरस्य प्रतियोगिनि ॥ १४६१ ॥

**सल**स्तु देवदेवस्य भृत्ये भृङ्गिरिटाह्वये ।
पुमान् पत्राङ्गशब्देन प्रसिद्धे तु नपुंसकम् ॥ १४६२ ॥

भेषजेऽथ **सटा** च स्त्री जटायां व्रतिनामथ ।
सिंहस्य केसरे नं(पृ)स्त्री* मर्त्यजात्यन्तरे पुनः ॥ १४६३ ॥

द्वे भटीविप्रजेऽथ स्युर्नीवृद्भेदे(ऽथ? नृ)भूमनि ।
**सल्वाः** सल्वाँ पुनः स्त्रीत्वे क्षत्रियाभेद ईरिता ॥ १४६४ ॥

**सङ्गो** ना सङ्गमे युद्धे लवणे तु नपुंसकम् ।
सैन्धवाख्येऽथ नपृस्त्रीत्वे **स्थली** स्थलमिति द्वयम् ॥ १४६५ ॥

विद्यादुन्नतभूभागे टावन्ता तु स्थला स्त्रियाम् ।
क्षेत्रादिनिम्नभूमिष्ठसलिलस्य निवारणे ॥ १४६६ ॥

कृत्रिमे मृन्मये **सन्नं** त्वनुदात्तविशीर्णयोः ।
अल्पे चाप्यवसन्ने च भेद्यालिङ्गं समामनन् ॥ १४६७ ॥

'नृ' क. ग. घ. ङ. पाठः. २. 'लाः' ख. पाठः. ३. 'ल्या' ख. पाठः.

'सटा जटाकेसरयोः' इति मेदिनी

गते च वृद्धाः सत्तौ तु क्ली **सखा** तु त्रिषु स्मृतः ।
सहायसुहृदोः स्त्र्यर्थे यदा वृत्तिस्तदा सखी ॥ १४६८ ॥

इति भाषाप्रयोगे स्याद् रूपं बन्धौ तु केचन ।
पुमानिति प्रब्रुवते **सनि**स्तु पथियाच्ञयोः ॥ १४६९ ॥

दाने नदीतटे नृस्त्री द्वे तु म्लेच्छे पुमान् पुनः ।
सनतौ च सनोतौ च धात्वोः स्त्री तु **स्थविः** (फ?च)ले ॥ १४७० ॥

कुष्ठी(?)मांसे द्वयोस्तु स्यात् तुन्नवाये त्रि कुष्ठिनि ।
**स्तरि**र्धूमे पुमान् स्त्री तु तृणे **सर्जूः** पुनः स्त्रियाम् ॥ १४७१ ॥

वनस्पतौ विद्युति च कश्चिद् वणिजि तु द्वयोः ।
**स्रष्टा** तु सृष्टिकृन्मात्रे त्रिर्ना हरिविरिञ्चयोः ॥ १४७२ ॥

**सम्राट्** तु पुंसि विष्ण्वर्कहुताशेन्द्रेषु राज्ञि तु ।
येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ॥ १४७३ ॥

शास्ति यश्चाज्ञया राज्ञस्तत्र स्यादथ सा स्त्रियाम् ।
षड्विंशत्यक्षरेऽन्तःस्थाछन्दोभेदे **स्वराट्** पुनः ॥ १४७४ ॥

चतुस्त्रिंशत्स्वरेऽन्तःस्थाछन्दोभेदे स्त्रियां पुमान् ।
विष्णावैश्वर्यवद्भेदे स्वस्य राजि[1] च ना पुनः ॥ १४७५ ॥

**स(र?रा)ः** सान्तष्टान्तमन्ये वायौ मेघे द्रुमान्तरे ।
सरीसृपपतत्र्योस्तु द्वे **संश्चेत्**[2] तु नृलिङ्गकः ॥ १४७६ ॥

अध्वर्यौ कुहके तु त्रि **स्रवत्** तु स्रावके त्रिषु ।
स्रवन्ती तु स्त्रियां नद्यां **स्रज्वा** पुनरसौ त्रिषु ॥ १४७७ ॥

मालाकारे परस्त्वाह मत्स्यघाते पुमान् पुनः ।
पदसङ्घात इत्येकः **सत्री** पुनरसौ पुमान् ॥ १४७८ ॥

१. 'ज्ञि' ग. पाठः. २. 'श्व' ग. पाठः.

सञ्चारचारभेदे स्याच्छद्मना यस्य वर्तनम् ।
भेद्यलिङ्गस्तु विपिनयज्ञभेदादिमत्ययम् ॥ १४७९ ॥
सदो यज्ञमहावेदेर्हविर्धानद्वयस्य यः ।
पश्चाद्देशस्तत्र शण्डो गोष्ठ्यां तु स्त्रीनपुंसकम् ॥ १४८० ॥
द्यावापृथिव्योस्तु क्लीबे द्वित्ववत् सदसी इति ।
सरस्तु सलिले क्लीबं तटाके तु नपि स्त्रियाम् ॥ १४८१ ॥
तत्रापि स्त्र्यर्थवृत्तित्वे सरसीति स्त्रियां पुनः ।
महासरस्तु सरसीं दाक्षिणात्याः प्रयुञ्जते ॥ १४८२ ॥
सहो जले बले च क्ली हेमन्ते तु पुमानयम् ।
मार्गशीर्षे तु मासि स्यात् पुन्नपुंसकयोरयम् ॥ १४८३ ॥
साधिस्तु नपि संयोगे ना त्वग्नावनडुह्यपि ।
सहिष्णौ त्रिषु सारस्तु तरोर्मज्ज्ञि धने बले ॥ १४८४ ॥
स्थिराङ्के* रेतासि व्योम्नि सरणे च नरि त्रि तु ।
सुन्दरोत्कृष्टयोर्दत्तस्तूत्कृष्टे नरमभ्यधात् ॥ १४८५ ॥
न्याय्ये तु सिंहस्त्रिरिति दत्तस्तु क्लीति सा पुनः ।
सारी स्त्री भ्रुकुटौ साल[1]ः पुनर्नान्ये तु नप्यपि ॥ १४८६ ॥
प्राकारे ना तु विटपिमात्रे वृक्षान्तरे तथा ।
अश्वकर्णाह्वये गत्यां मत्स्यभेदे तु स द्वयोः ॥ १४८७ ॥
स्थालं भोजनपात्रे क्ली स्यादुखायां तु सा स्त्रियाम् ।
स्थाली ना तु महादेवे स्थितिकर्मणि चाप्यथ ॥ १४८८ ॥
स्थानं क्लीबं नरेऽप्यन्ये प्राहुर्गेहावकाशयोः ।
सम्बन्धभेदे [2]जन्तूनां स्यान्निवृत्तिप्रस[3]ङ्गयोः ॥ १४८९ ॥
अपकर्षे च सादृश्ये क्लीबं तु स्थितिकर्मणि ।
एकारान्तं पुनः केचित् स्थाने इत्यव्ययं विदुः ॥ १४९० ॥

---

१. 'लं' क. घ. पाठः. २. 'जत्रूणां' क., 'बन्धूनां' ग. पाठः. ३. 'न्न' ख. पाठः.

---

* 'स्थिरांशे' इति स्यात् ।

उक्तार्थे कारणार्थे च तन्नेह ब्रूमहे वयम् ।'
शब्दभेदाद(व? थ) **स्थायः** स्थाने ना भुवि तु स्त्रियाम् ॥ १४९१ ॥

स्थाया स्थातरि तु त्रि स्यात् **स्थाप्यं** तु स्थापनीयके ।
त्रिर्निक्षेपे तु ना क्ली तु ह्रीबेरे **स्यालवाक्** पुनः ॥ १४९२ ॥

ना पत्नीभ्रातरि स्त्री तु स्याली पत्न्याः स्वसर्यसौ ।
वैजयन्त्यां तु निर्मूलं पत्न्या अनुजयोर्द्वयोः ॥ १४९३ ॥

इत्युक्तमथ **सान्त्वं** क्ली सान्त्वने भेद्यवत् पुनः ।
मन्वते मधुरे वाक्ये **सार्थ**स्त्वर्थवति त्रिषु ॥ १४९४ ॥

समूहभेदे तु पुमान् प्राणिनां **साध्यवाक्** तु ना ।
गणदेवप्रभेदेषु रश्मौ च त्रिषु तु स्मृतः ॥ १४९५ ॥

साधनीये त्रि तु **स्फारं**[1] प्रभूते स्फुरणे तु ना ।
मौर्व्या तु सह चापस्य लाञ्छने स्यान्नपुंसकम् ॥ १४९६ ॥

**सातं** तु क्ली सुखे त्रिस्तु क्षीणेऽपि सतयोगिनि ।
एतयोरर्थयोः पूर्वे स्त्र्यर्थे साता परत्र तु ॥ १४९७ ॥

साती **साज्यं** तु नप् श्राद्धभेद एकादशेऽहनि ।
त्रिस्त्वाज्यसहिते **साल्वाः** पुनः पुंभूम्नि नीवृति ॥ १४९८ ॥

मध्यदेशस्थिते कारुकुत्सीयाख्ये तथा पुनः ।
प्राच्यां नीवृद्विशेषे च तयो राज्ञोः पुमानयम् ॥ १४९९ ॥

द्वयोस्तु तदपत्येषु **स्थाणु**स्तु गिरिशे पुमान् ।
कुरुदेशे चाथ न स्त्री ध्रुवके **साधु** तु त्रिषु ॥ १५०० ॥

चारौ व्याकृतशब्दे च सज्जनेऽप्युचितेऽपि च ।
केचित् तु धर्मशीलेऽन्ये पुनः संयत ऊचिरे ॥ १५०१ ॥

ना तु वार्धुषिके केश्चित् पाठितस्तदसद् यतः ।
स्यादौपाधिकशब्दत्वादस्य लिङ्गं विशेष्यकम्[2] ॥ १५०२ ॥

---

१. 'रः' ङ. पाठः. २. 'ष्य' क. घ. पाठः, 'ष्य(ह?ग)म्' ग. पाठः.

पतिव्रतायां तु स्त्री स्यात् साध्वी **स्वादुस्तु** पुंस्ययम् ।
मधुराख्यरसे त्रिस्तु तद्युक्ते प्रियमृष्टयोः ॥ १९०३ ॥
मनोज्ञे च जले तु क्ली द्राक्षायां तु स्त्रियामियम् ।
स्वाद्वी क्लिबं तु पठितं शाकटायनसूरिणा ॥ १९०४ ॥
लिङ्गानुशासने तस्य चिन्त्योऽर्थः स्याद् विचक्षणैः ।
**सात्मा** ना प्रकृतावात्मसहिते तु त्रिषु स्मृतः ॥ १९०५ ॥
अत्यन्ताभ्यस्तताहेतोः प्रकृतित्वं गते परे ।
ऊर्णायां तु कदल्यादेः **स्नावः** स्नायुनि चाथ नप् ॥ १९०६ ॥
शाकटायन आह स्म हर्षनन्दी च पुंस्यमुम् ।
**स्वामी** तु स्कन्ददेवे ना त्रि तु नाथे स्त्रियां पुनः ॥ १९०७ ॥
स्वामिन्यनृपवंशोत्थराजपत्न्यां तथा पुनः ।
नाट्योक्तिराजपत्न्यां च जीरकोशनसोस्तु ना ॥ १९०८ ॥
**सितः** शौक्ल्ये च तद्युक्ते पुनास्त्रिर्बद्ध एव च ।
प्राप्तावसाने च स्त्री तु शर्करायां सिता स्मृता ॥ १९०९ ॥
**स्थिरं** त्रिर्निश्चले ना तु शनौ स्त्री तु स्थिरा भुवि ।
सालपर्ण्याख्यभैषज्येऽप्यथ **स्थित** इति त्रिषु ॥ १९१० ॥
सप्रतिज्ञे निवृत्ते च गतेः स्यादूर्ध्वतां गते ।
स्थितौ तु क्ली मृगेन्द्रे तु **सिंहो** द्वे स्त्री तु सिंह्यसौ ॥ १९११ ॥
वार्ताकीकण्टकार्योश्च वाशायां च पुमान् पुनः ।
वेङ्कटाख्यगिरौ **स्निग्धः** पुनः स्याद् भेद्यलिङ्गकः ॥ १९१२ ॥
वयस्येऽपि ससौहार्दे कृतस्नेहनकर्मणि ।
पुमांस्तु गुग्गुलौ मन्त्रिजने (तु?)[†] स्नेहने तु नप् ॥ १९१३ ॥
**स्मितं** तु त्रिषु फुल्ले[2] स्यात् स्मितवत्यपि नप् पुनः ।
अदृष्टदशने हासे विकासे कुसुमस्य च ॥ १९१४ ॥

---

१. 'र' क. ख. पाठः. २. 'पुष्पे स्या' ग. पाठः.

---

† चेति स्यात् ।

सिद्धस्तु सनकादौ ना देवजात्यन्तरे द्वयोः ।
निष्पन्ने तु त्रिषु क्ली तु सिद्धौ गत्यादिकेष्वपि ॥ १९१५ ॥

सिद्धो ना वृक्षभेदे स्यादयं साधुजने त्रिषु ।
*सिंहस्तु द्वे किशोरे स्यात् पुमानेष वनस्पतौ ॥ १९१६ ॥

मधूच्छिष्टे तु सिक्थोऽस्त्री पुलाकेऽन्नस्य पुंस्ययम् ।
सिनमन्ने शरीरे च क्ली बिल्वाख्यद्रुमे तु ना ॥ १९१७ ॥

सिमोऽनुदात्तः सर्वार्थे सर्वनाम त्रिषु स्मृतः ।
ग्रामगोचरभूमौ तु पुमान् नो सर्वनाम सः ॥ १९१८ ॥

क्षेत्रस्य मर्यादायां च द्वयोस्तु स्यात् तुरङ्गमे ।
सिमाः स्त्रियो महानाम्नीसंज्ञसामान्तरे तथा ॥ १९१९ ॥

स्फिग्गुर्गुदे ना स्त्री त्वेषा शरीरावयवान्तरे ।
सिन्धुस्तु नद्यां स्त्री ना तु समुद्रेऽपि नदान्तरे ॥ १९२० ॥

अशीत्यक्षरकेच्छन्दोभेदे च कृतसंज्ञके ।
गजानां दानतोये च कटनेत्रसमुद्भवे ॥ १९२१ ॥

नीवृद्भेदे तु पुंभूम्नि सिन्धवो द्वे तु कुञ्जरे ।
क्ली तु सैन्धवसंज्ञे स्याल्लवणे सीमवाक् तु ना ॥ १९२२ ॥

क्षेत्रस्य मर्यादायां च ग्रामगोचरभुव्यपि ।
अश्वे तु द्वे पुमान् सीर आदित्ये लाङ्गलेऽपि च ॥ १९२३ ॥

लताङ्कुरे तु सीरी स्त्री लाङ्गलिक्यां च कश्चन ।
नद्यां तु सीरा सीत्यं तु धान्ये क्ली भेद्यवत् पुनः ॥ १९२४ ॥

सीतायामपि साधौ स्यात् कृष्टभूमितलेऽपि च ।
अथ प्रख्यार्पने †स्त्रीमिः स्त्री नभःपयसोः (भके?) ॥ १९२५ ॥

---

१. 'यतेर्मि' क. ख. घ. पाठः.

---

* 'सिचेः संज्ञायां हनुमौ कश्च' (उ. ५. ६२) इति व्युत्पादितः । † 'स्तीर्मिः' इति स्यात् । अस्यैव कोशान्तरेषु नभःपयश्शोणितार्थेषु दर्शनात् ।

तनौ च शोणिते चाथ स्यादजे द्वे सुखं तु नप् ।
लग्नाद् राशौ चतुर्थेऽप्सु शस्तखे शर्मणि त्रि तु ॥ १९२६ ॥

तत्साधने शोभनखयुक्तेऽप्यथ सुखा स्त्रियाम् ।
शम्भोर्नवानां शक्तीनां शक्तावेकत्र ना पुनः ॥ १९२७ ॥

सुतः सोमरसे भूपे लग्नाद् राशौ च पञ्चमे ।
पुत्रयोस्तु द्वयोः स्त्री तु शाकवल्ल्यन्तरे सुता ॥ १९२८ ॥

उपोदकाख्ये त्रिषु तु प्रसूतेऽभिषुतेऽपि च ।
सुरस्तु देवे स्त्रीत्वे तु सुरा मद्ये जलेऽपि च ॥ १९२९ ॥

सुप्तं तु त्रिषु निद्राणे प्रशस्तजटकेऽपि च ।
खञ्जरीटे पुनः कृष्णवक्षसि द्वे स्त्रियां पुनः ॥ १९३० ॥

सुप्ता जटायां शस्तायां क्ली तु स्वापे स्रुवा पुनः ।
सल्लक्यामपि मूर्वायां पुमांस्त्वाधारणाह्वये ॥ १९३१ ॥

यज्ञपात्रविशेषेऽथ स्थुलं दूष्ये नपुंसकम् ।
गुल्फे तु ना सुहृत् तु त्रिर्मित्रे क्ली शोभने हृदि ॥ १९३२ ॥

ना तु मन्त्रिण्यथ स्थूलं जडे बृहति पीवरे ।
(क्ली तु[1] त्रि क्ली) दाध्नि त्रि तु स्थूरं पीवरेऽथ स्त्रियामियम् ॥ १९३३ ॥

पश्चाद्भागे च जङ्घायां गोधूमादितुषेषु च ।
स्थूराथ सूक्ष्ममत्यल्पे त्रिरध्यात्मे तु तन्नपि ॥ १९३४ ॥

शक्तौ त्वेकत्र शक्तीनां नवानां शार्ङ्गधन्वनः ।
सूक्ष्मा स्त्री ना तु सूर्यः स्याद् भास्करे वींचि तु स्त्रियाम् ॥ १९३५ ॥

सूर्या स्याद् गिरिकर्ण्यां च श्वेतायां स्यूतवाक् तु ना ।
प्रसवेऽथ त्रिस्रुते स्यात् सूतस्तु नरि सारथौ ॥ १९३६ ॥

पारदे द्वे तु तक्षिण स्याद् वन्दिन्यपि पठन्त्यमुम् ।
ब्राह्मण्यां क्षत्रियाज्जाते जनिते तु त्रिषु स्मृतः ॥ १९३७ ॥

1. 'चापि तु' क. ग. पाठः.

प्रेरिते चाथ सूतौ च प्रेरणे च नपुंसकम् ।
सूदो ना सूपकारे च सूपे रूपे च नप्स्त्रियोः ॥ १९३८ ॥

सूदा स्यात् क्षरणे ना तु क्षारणे सूनवाक् तु (ना? नप्)§ ।
पुष्पे प्रसूते तु त्रि स्यात् पुष्पिते च स्त्रियां पुनः ॥ १९३९ ॥

सूना वधे वधस्थाने स्याच्च दण्डार्पिताङ्कुशे ।
अधःसिरायां जिह्वाया(स्तुधा? स्तथा) दुहितरि स्मृता ॥ १९४० ॥

मुद्गादिकैस्तु सुकृते व्यञ्जने सूपमस्त्रियाम् ।
सूपकारे तु ना सूर्पः पुनर्ना वायुसूर्ययोः ॥ १९४१ ॥

द्वे मत्स्यजातौ सूर्मस्तु सूर्मीत्यपि च नृस्त्रियोः ।
स्याल्लोहप्रतिमायां च शुष्ककाष्ठे च नप् पुनः ॥ १९४२ ॥

सूत्रं पुंस्यपि मन्यन्ते लिङ्गशास्त्रकृतो बुधाः ।
तन्तौ सङ्ग्रहवाक्ये च यज्ञसूत्रेऽप्यथ स्त्रियाम् ॥ १९४३ ॥

सूचा सूचौ पुमांस्त्वेष सूचनेऽन्यस्त्ववोचत ।
दर्भणे क्लीति सूमस्तु ना चन्द्रे श्वयथावपि ॥ १९४४ ॥

क्ली त्वन्तरिक्षे त्रिषु तु सदूमे* सदुमेऽपि च ।
स्यूमं तु क्ली जलेऽन्ये तु पुंसि पुंस्येव मङ्गले ॥ १९४५ ॥

तन्तौ रश्मौ निशानाथे स्त्री तु दीर्घे स्त्रियां पुनः ।
सूचिः स्यूतिशलाकायां कवाटस्यार्गलासु च ॥ १९४६ ॥

अल्पासु द्वे तु वेश्यायां निषादोत्पन्नमानवे ।
सूरिः पुनः पुंस्याचार्ये त्रि तु स्तोतरि पण्डिते ॥ १९४७ ॥

सूनुस्तु पुंसि पुत्रे स्याद् भ्रातर्यप्यजयोऽब्रवीत् ।
इयं दुहितरि स्त्री स्यादथ सूभ्रं नपुंसकम् ॥ १९४८ ॥

---

§ 'सूनं पुष्पे' (पु. २३८. श्लो. ९९) इति वैजयन्ती । * 'ऊमो व्योम्नि पुरेऽपि च' (पु. २१४. श्लो. ८) इति वैजयन्ती ।

भवेत् सर्पिषि तैले वा ना तु चन्द्रे स्त्रियां पुनः ।
सृप्रा ह्युज्जयिनीपार्श्ववाहिन्यां सरिति स्मृता ॥ १९४९ ॥
**सृकः** पुंसि शरे वज्रे निरये द्वे पुनर्बके ।
सृगाले चाथ **सृष्टं** क्ली सर्जने त्रि तु निश्चिते ॥ १९५० ॥
बहुनिर्मितयोर्मुक्ते **सृणिस्तु** नरि पावके ।
अङ्कुशे तु स्त्रियामेव केचिदन्ये तु पुंस्यपि ॥ १९५१ ॥
**सृपो** तु द्वे शिशौ सर्पे यतिनि त्वेष भेद्यवत् ।
**सृत्वा** प्रजापतौ वह्नौ पुंसि द्वे नीचजातिषु ॥ १९५२ ॥
सृत्वरी तु स्त्रियां वीचि जननीवैश्ययोरपि ।
**सेव्यं** तु सेवनीये त्रिर्वातव्येऽप्यथ नब् जले ॥ १९५३ ॥
उशीरे निःशरे दध्नि पत्राङ्गाह्वयभेषजे ।
अब्धिजे लवणे ना तु मध्वासव इति श्रुते ॥ १९५४ ॥
मद्यभेदे स्त्रियां तु स्यात् सेव्या नीवारधान्यके ।
वन्दाकेऽप्यज्झटासंज्ञस्तम्बेऽथ चटके द्वयोः ॥ १९५५ ॥
स्यूतौ तु **सेवो** ना न क्ली भजने त्रि तु **सेनवाक्** ।
इनेन सहिते स्त्री तु सेना चम्वामथास्त्रियाम् ॥ १९५६ ॥
**स्नेहस्तैलघृतादौ** च प्रेम्णि चाह त्वतः पृथक् ।
सौहार्दे शाश्वतः क्ली तु वैजयन्ती समामनत् ॥ १९५७ ॥
जले **स्थेयः** पुनः सह्ये कैश्चिदुक्तोऽभिधेयवत् ।
विवादपदनिर्णेतर्यन्ये स्थातव्यके तु नप् ॥ १९५८ ॥
**सेक्ता** पुंसि धवे त्रिस्तु सेचके सैन्यवाक् तु नप् ।
सेनायां समवेते तु सेनायां त्रिः पुमान् पुनः ॥ १९५९ ॥

१. 'प्मा' ख. ङ. पाठः. २. 'ति' ग. पाठः. ३. 'चापि ज' ग. पाठः.

चतुर्ष्वश्वेषु कृष्णस्य क्वचिदश्वे‡ नृभूभ्नि तु ।
**सैराः** स्युर्मध्यदेशस्थनीवृद्भेदेऽथ स त्रिषु ॥ १९६० ॥
सीरस्य च सिरायाश्च सम्बन्धिन्यथ भेद्यवत् ।
**स्वैरी** स्वतन्त्रे वर्धक्यां पुनः स्यात् स्वैरिणी स्त्रियाम् ॥ १९६१ ॥
**सोमो** ब्रह्मणि पूष्णीन्दौ वह्नौ पुण्ये लतान्तरे ।
याज्ञिकानां प्रसिद्धे ना सोमयागेषु चामृते ॥ १९६२ ॥
वीर्येऽमृतरसे त्वाह कात्यः शैत्येऽथ तद्वति ।
त्रिषूमया च सहिते ऊमेन सहितेऽपि च ॥ १९६३ ॥
**स्योनं** तु क्ली सुखे त्रिस्तु साधने तस्य ना पुनः ।
सूर्ये सूर्यस्य रश्मौ च समुद्रे तन्तुसन्ततौ ॥ १९६४ ॥
तन्तुवायस्य बिन्दौ तु **स्तोको** नाल्पे तु स त्रिषु ।
**सोतः** पुनर्जनयितर्यभिषोतरि च त्रिषु ॥ १९६५ ॥
उपाध्याये तु ना **सौम्यः** पुनस्त्रिः सोमदेवते ।
सुन्दरे च पुमांस्त्वेष वत्सरे च बुधग्रहे ॥ १९६६ ॥
यूपः सप्तदशारत्निर्वाजपेयस्य यः श्रुतः ।
तस्य पञ्चदशेऽरत्नौ सोमयागे च नप् पुनः ॥ १९६७ ॥
तुरायणाख्यतपसोर्द्वये कृतयुगेऽपि च ।
स्त्रियां तु सा निशीथिन्यां सौम्या स्यादित्यवादिषुः ॥ १९६८ ॥
**सौधो**ऽस्त्री सुधया शुक्लीकृतगेहे नपि त्वदः ।
रजते भेद्यलिङ्गं तु सुधासम्बन्धिनि स्मृतम् ॥ १९६९ ॥
**हंसो**ऽर्केन्द्वोः स्मरे विष्णौ वह्नौ निर्लोभभूभुजि ।
राजादिशब्दपूर्वस्तु श्रेष्ठे चेत्यजयोऽब्रवीत् ॥ १९७० ॥
भिक्षौ श्वेतवृषे पुंसि द्वयोस्तु स्यात् तुरङ्गमे ।
विहङ्गमविशेषे च श्वेतपक्षादिसंज्ञके ॥ १९७१ ॥

‡ शैब्यसुग्रीवमेघपुष्पवलाहकाख्याश्चत्वारोऽश्वाः प्रसिद्धाः । सैन्याभिधा शैब्यसंज्ञास्थाने वा स्यात्, शैब्याद्यन्यतमस्यैव वा नामान्तरं स्यादिति न ज्ञायते ।

अजयस्तु विशुद्धेऽपि तत्र न्यायात् त्रिषु स्मृतम् ।
हस्तः किष्कुप्रमाणे ना पाणौ प्रागे च दन्तिनः ॥ १९७२ ॥

केशार्थात् तु परः केशसमूहेऽपि च दृश्यते ।
अपि सावित्रनक्षत्रे तद्युक्ते कालमात्रके ॥ १९७३ ॥

ह(र्ता तु?स्तस्त्रि) तत्र जातेऽथ पूर्वोक्तार्थेषु कश्चन ।
शण्डेऽप्येनं समाम्नासीद् हतं तु त्रिषु मारिते ॥ १९७४ ॥

गते गतवति क्ली तु गमने हननेऽपि च ।
स्त्री तु कुत्सितकन्यायां हता स्यादथ ना हतः ॥ १९७५ ॥

मार्गे कश्चित्तु तं प्राह विषण्णे त्रिर्हरस्तु ना ।
शर्वेऽग्नौ गर्दभे तु द्वे हरस्तु त्रिषु घातके ॥ १९७६ ॥

क्लीबं तु सन्निपातेऽपि बलाधानेऽथ ना ह्रदः ।
स्यादगाधजलाधारे द्वे तु मेषेऽथ भेषवत् ॥ १९७७ ॥

ह्रस्वोऽल्पे वामने चैकमात्रवर्णे यमे तु ना ।
हयस्तु ना धनूराशौ गतौ च तुरगे पुनः ॥ १९७८ ॥

द्वयोस्तत्रापि च स्त्र्यर्थे स्याद् ङीषन्ता हयी इति ।
हरिर्ना विष्णुसूर्येन्द्रचन्द्राग्नियमवायुषु ॥ १९७९ ॥

अंशौ शक्रहये मुद्रे रुक्मे रुक्माभवर्णके ।
श्वेते वररुचिर्वर्णे ब्रूते तु जयमङ्गलः ॥ १९८० ॥

हरिद्वर्णेऽपि कपिले त्रिषु त्वेष गुणैर्युते ।
एतैश्चतुर्भिर्द्वे त्वेष मर्त्यजात्यन्तरे भवेत् ॥ १९८१ ॥

शूद्रानिषादजे सिंहकपिभेकशुकाहिषु ।
अश्वेऽश्वभेदे हरितपीतवर्ण इतीदृशः ॥ १९८२ ॥

हरिशब्दः समुद्दिष्टो वाच्यानामेकविंशतौ ।
वैद्यास्तु केचिन्नारीणां भगेऽप्येनं समामनन् ॥ १९८३ ॥

न तत् प्रमाण्यतेऽस्माभिः स्वतस्तेषामनाश्रितः ।
हनुस्तु नृस्त्रियोर्गण्डस्योर्ध्वभागे द्वयोः पुनः ॥ १९८४ ॥

वैदेहशनकीजाते मर्त्यजात्यन्तरेऽथ ना ।
हरित् सूर्येऽपि सूर्याश्वे वर्णे च हरिते त्रि तु ॥ १९८५ ॥

तद्वति स्त्री तु दिङ्नयोरङ्गुलौ चाथ तत् तृणे ।
शाड्मेके नरं त्वन्ये हस्ती द्वे च मतङ्गजे ॥ १९८६ ॥

षड्पदेऽथ स्त्र्यन्तरे स्त्री कामशास्त्रेषु विश्रुते ।
हस्तिनी हास्तिनपुरेऽप्यथ पुंसि हली भवेत् ॥ १९८७ ॥

बलभद्रे हलवति पुनस्त्रिर्हलिनी पुनः ।
शक्रपुष्प्याह्वये स्तम्बे हसत् तु त्रिषु हासके ॥ १९८८ ॥

विकसत्यपि चाङ्गारशकट्यां तु स्त्रियामियम् ।
हसन्ती ना तु हरणे हारो मुक्तावलावपि ॥ १९८९ ॥

स्त्री तु देवनिवासस्य हारा कक्ष्यासु सा पुनः ।
हारी नाम्नैव दुष्टायां कन्यायामथ स त्रिषु ॥ १९९० ॥

हरस्य च हरेश्चापि सम्बन्धिन्यथ हालवाक् ।
हलसम्बन्धिनि त्रि स्यान्नृलिङ्गस्तु विलेखने ॥ १९९१ ॥

स्त्री तु हाली कनिष्ठायां पत्न्याः स्वसरि सा पुनः ।
हाला सुरायामथ नप् चन्दने तुहिने हिमम् ॥ १९९२ ॥

कर्पूरे तु पुमान् शीतगुणेऽपि त्रि तु तद्वति ।
हिमा तु स्त्री निशीथिन्यां मृडान्यां च हितं पुनः ॥ १९९३ ॥

त्रिः पथ्ये धारिते दत्ते हरीतक्यां तु सा हिता ।
स्त्री क्ली तु धारणे दानेऽप्यथ हिंस्रास्त्रि घातके ॥ १९९४ ॥

स्त्री तु हिंस्रा क्रोष्टुकोलौ लताभेदे च पण्डिताः ।
आहुर्गृध्रनखीसंज्ञे हिक्का तु स्त्री खगान्तरे ॥ १९९५ ॥

पिङ्गलासंज्ञके हिक्कासंज्ञरोगान्तरेऽपि च ।
नृस्त्री तु हिकने त्रिस्तु हिक्के हीनवाक् पुनः ॥ १९९६ ॥

त्रिरूनगर्ह्ययोर्ना तु नागकेसरपादपे ।
हीरः पुंसि शिवे द्वे तु सर्पे सिंहे च स त्रि तु ॥ १९९७ ॥

हीको लज्जापरे द्वे तु नकुले हीकवाक् पुनः ।
लज्जापरे लिङ्गिनि च नकुले तु द्वयोरयम् ॥ १९९८ ॥

हीरुर्लज्जावति त्रि स्यात् कश्चित् त्वाह बके[2] द्वयोः ।
हीकुर्लज्जावति त्रि स्याद् वनमार्जारके द्वयोः ॥ १५९९ ॥

हृद्यस्तु ना वशीकारमन्त्रे स्याद् वैदिके द्रुमे ।
कपित्थाख्ये तत्फले तु क्ली दधन्यनुलेपने ॥ १६०० ॥

मधुमद्ये च माध्वीकसंज्ञे त्रिषु तु हृद्भवे ।
हृत्प्रिये हृद्धिते हृज्जे चारौ हृद्या तु सा स्त्रियाम् ॥ १६०१ ॥

मनःशिलायां छा(ध्या?ग्या)*मप्यृद्धिसंज्ञौषधान्तरे ।
हृष्टं तु हर्षे क्ली त्रिस्तु विस्मिते हर्षवत्यपि ॥ १६०२ ॥

तथा प्रतिहतेऽन्ये तु सरोमाञ्चेऽप्यधीयते ।
मनोहरे त्वप्यजयः स्यात् तथा स्तब्धरोमसु ॥ १६०३ ॥

आयुर्वेदप्रयोगस्तु स्तब्धे मेढ्रेऽप्यथो हृषिः ।
स्त्री दीप्तितुष्ट्योर्ना धात्वोर्हर्षतौ हृष्यतावपि ॥ १६०४ ॥

अलीकवादिनि त्रि स्यात् स्त्री तु क्रुधि हृणित्रि तु ।
ज्वलत्यथ हृषुस्तुष्टे त्रिष्वलीके तु पुंस्ययम् ॥ १६०५ ॥

हेला[3] त्वनादरे नृस्त्री क्रुधि ना हेतिवाक् पुनः ।
रवेरर्चिषि वह्नेश्च ज्वाले स्त्री नृस्त्रियोः पुनः ॥ १६०६ ॥

---

१. 'हि' ख. पाठः. २. 'ले' ग. पाठः. ३. 'डा' ख. क. पाठः.

* 'चुलुम्पा चित्रला हृद्या पर्णादा पलिकिन्यजा' (पु. ७०. श्लो. ६३) इति वैजयन्ती

शङ्खेऽथ हेम क्ली तोये कनकेऽप्यथ पुंसि सः ।
हेमन्ते स्त्री तु होत्रा स्यात् वाचि यज्ञे तथर्त्विजि ॥ ११०७ ॥

होत्रं तु भवने क्लीबं होतवस्तु नरि वारिधौ ।
यजमाने द्वयोर्होता त्वृत्विग्भेदे पुमानयम् ॥ ११०८ ॥

हावके त्रिषु काण्डोऽयं द्व्यक्षराणामपूर्यत ॥ ११०८½ ॥

इति द्व्यक्षरकाण्डे नानालिङ्गाध्यायः ।

द्व्यक्षरकाण्ड समाप्तः ।

॥ श्रीः ॥

राजराजीयापरनामा

# नानार्थार्णवसंक्षेपः

केशवस्वामिप्रणीतः ।

---

## त्र्यक्षरकाण्डः ।

### स्त्रीलिङ्गाध्यायः ।

---

अथ त्र्यक्षरमत्यन्तः काण्डः प्रस्तूयतेऽधुना ।
नानार्थत्र्यक्षराणां यः सर्वस्वं काव्यकारिणाम् ॥ १ ॥
तत्रादौ तावदध्यायः स्त्रीलिङ्गानां प्रणीयते ।
अथ स्त्रियामभिख्या स्याच्छोभायां कीर्त्तिसंज्ञयोः ॥ २ ॥
प्रज्ञायामपि विख्यातावभिधा तूक्तिसंज्ञयोः ।
अहल्या तु सरोभेदे भार्यायां गौतमस्य च ॥ ३ ॥
अवका स्याज्जलतृणे ज्ञेया विस्फोटिकाह्वये ।
शैवले चाप्यथाध्यण्डा स्वामलक्यात्मगुप्तयोः ॥ ४ ॥
असिक्नी तु निशीथिन्यां नदीभेदे तु कश्चन ।
तथैवान्तःपुरप्रेष्यस्त्रियां स्यादवनिः पुनः ॥ ५ ॥
भूमिनद्यङ्गुलीषु स्यादङ्गुलिस्तु गजस्य च ।
कराग्रे कर्णिकासंज्ञे शाखास्वप्यङ्घ्रिहस्तयोः ॥ ६ ॥
अनुष्टुप् छन्दसो भेदे ज्ञेया द्वात्रिंशदक्षरे ।
तथा देवासुरादीनां छन्दोभेदेषु च स्मृता ॥ ७ ॥
वाचि सम्भावनायां तु स्यादाशङ्का भयेऽपि[1] च ।
आकृतिस्तु शरीरे स्यादाकारव्यक्तिजातिषु ॥ ८ ॥
[illegible] च स्याच्छन्दोभेदेऽप्यथाततिः ।
[illegible] विस्तारे च प्रकीर्तिता ॥ ९ ॥

---

१. [illegible]

• आयतिर्दीर्घतायां स्यात् प्रभावागामिकालयोः ।
आहुतिर्यज्वनां स्याच्च स्रुगासादनकर्मणि ॥ १० ॥

ताडने चाप्यथालप्तिः कीर्तिता गीत्युपक्रमे ।
तथैवालपने विद्यात् त्वासन्दीमासनान्तरे ॥ ११ ॥

केचिद् वेत्रासनेऽन्ये तु वदन्त्यासनमात्रके ।
इन्द्राणी तु शचीदेव्यां रतबन्धान्तरे तथा ॥ १२ ॥

स्त्रीणां स्यात् सिन्धुवाराख्यवृक्षे च स्यादथोपधा ।
शब्दस्यान्त्यादलः पूर्ववर्णे च सुपरीक्षणे ॥ १३ ॥

उपधानक्रियायां चच्छन्दनायां च कीर्तिता ।
माघस्य कोपधेत्यत्र* मृग्योऽर्थ उपधापदे ॥ १४ ॥

उर्वरा सर्वसस्याढ्यभूमौ स्याद् भूमिमात्रके ।
ऋच्छरा त्वङ्गुली ज्ञेया वेश्यायां चाथ कर्णिका ॥ १५ ॥

करिहस्ताङ्गुलौ पद्मबीजकोश्यां च भूषणे ।
कर्णस्य मध्यमाङ्गुल्यामपि कश्चिदभाषत ॥ १६ ॥

कंणिका तिलमण्डे§ गोधूमे तच्चूर्णके लवे ।
कलशिर्भेषजस्तम्बे पृश्निपर्णीति विश्रुते ॥ १७ ॥

दधिप्रमथनस्थाल्यां स्यात् कृपाण्यां तु कर्तरी ।
इषोः पुङ्खे च कर्णान्धूः❀ पुनरुत्क्षिप्तिकाह्वये ॥ १८ ॥

कर्णभूषणभेदे स्यात् कर्णपाल्यामपि स्मृता ।
काकणी मानदण्डस्य माषस्य च पणस्य च ॥ १९ ॥

तुर्येऽशे पादुकायां च कपर्दानां च विंशतौ ।
एकस्मिंश्च कपर्दे स्यादिति प्राहुर्मनीषिणः ॥ २० ॥

---

१. 'त्वा' ग. पाठः.

---

* 'अयशोभिर्दुरालोके कोपधा मरणादृते' (स. १९. श्लो. ५८) इति माघः । उपधा उपायः । § 'कणिका तिलकाण्डेंऽशे' (पृ. २४७. श्लो. ४) इति तु वैजयन्ती । ❀ अन्दूशब्दः पादभूषणार्थको वैजयन्त्यादिषु दृश्यते । बृहदभिधाने तु कर्णान्दूशब्दस्य कर्णभूषणार्थकत्वमुक्तम् ।

काखी भाण्डिकासंज्ञभेषज्ये कृष्णजीरके ।
अजमोजाविशेषे च खराश्वासंज्ञके तथा ॥ २१ ॥

शतपुष्पासमाख्ये च भैषज्ये भाषिता बुधैः ।
कालिन्दी यमुनानद्यां कृष्णभार्यान्तरे तथा ॥ २२ ॥

किणिही स्यादपामार्गे गिरिकर्ण्यां च भाषिता ।
कुसृतिस्तु कुमार्गे स्यात् कुगतौ शाठ्य एव च ॥ २३ ॥

कूर्चिका मस्तुपिण्डे स्यात् सूचितूलिकयोरपि ।
कवाटस्याङ्कुटे चापि खलिनी तु खलव्रजे ॥ २४ ॥

वाराहीमुसलीत्यादिपदैः स्तम्बे च विश्रुते ।
ग्रहणी तूदरव्याधिविशेषे मृत्युमेहयोः ॥ २५ ॥

भद्राशेव्योस्तु गन्धालीत्येतद् रभसभाषितम् ।
गुडूची(त्य?त्व)मृतानाम्नि वल्ल्यां कुस्तुम्बुरुण्यपि ॥ २६ ॥

गोजिह्वा दार्विकासंज्ञस्थावरे परिकीर्तिता ।
मनःशिलायां गोश्चापि जिह्वायां क्षुद्रधान्यके ॥ २७ ॥

गवीधुरिति विख्याते गोलोमी तु वचाह्वये ।
भेषजे सितदूर्वायां भूतकेशाख्यवस्तुनि ॥ २८ ॥

घटिका तु मुहूर्ताख्ये काले नाडीद्वयात्मके ।
गवादिदोहपात्रे च पारिसंज्ञे प्रकीर्तिता ॥ २९ ॥

घृताची त्वप्सरोभेदे निशायां च प्रकीर्तिता ।
चर्चरी चर्भटिरिति प्रसिद्धे हास्यवाक्यके ॥ ३० ॥

उक्ता कर्पटिकानां च गीतभेदे मनीषिभिः ।
चिरैण्टी त्ववगन्तव्या द्वितीयवयसि स्त्रियाम् ॥ ३१ ॥

सुवासिनीति प्रथिते स्त्रीविशेषे च कोविदैः ।
*चुलकी शिशुमा(री?रे)स्यात् कुण्डीभेदे कुलान्तरे ॥ ३२ ॥

---

१. 'णी' ख. ङ. पाठः. २. 'शा' क. ङ. पाठः. ३. 'रि' ग. ङ. पाठः.

---

* 'चुलकी शिशुमारे स्यात् कुण्डीभेदे कुलान्तरे' इति तु मेदिनी ।

जिगीषाशब्द उद्दिष्टो व्यवसायपरेच्छयोः ।
जुगुप्सा तु घृणायां च निन्दायां चाथ झञ्झरी ॥ ३३ ॥

वाद्यभेदेऽजयस्त्वाह हुडुक इति मिन्त्वधीः ।
अवस्थाभेदमापन्ने केशभेदे च कीर्तिता ॥ ३४ ॥

झम्पटिक्षुविशब्दाभ्यां प्रसिद्धे शब्दवेदिनाम् ।
छत्रान्तालम्बिवस्त्रे च तृणता तु धनुष्यपि ॥ ३५ ॥

तृणत्वे चेति बहुभिः कविना चोररीकृतम् ।
तत्त्वास्मभ्यं न रोचिष्णु तृणतभ्रेषशङ्कया ॥ ३६ ॥

दीधितिस्त्वङ्गुलौ रश्माविभीधेन्वोस्तु धेनुका ।
नालिका तु चतुर्हस्तप्रमाणे युगसंज्ञके ॥ ३७ ॥

नवहस्तप्रमाणे च मुनिभिः परिभाषिता ।
चुल्लीरन्ध्रे च रन्ध्रे च नाले काले तथैव च ॥ ३८ ॥

वेणुभाजनभेदे च जलशाकलतान्तरे ।
कलम्बीशतपर्वादिशब्दैः शास्त्रेषु विश्रुते ॥ ३९ ॥

निर्वृतिर्मनसस्तोषे मोक्षेऽस्तमयबाढयोः ।
नियतिः संयमे दैवे निकृतिः शठशाठ्ययोः ॥ ४० ॥

नितत्निस्तु तृतीयस्यां कृत्तिकायां निबोधत ।
सप्तानां कृत्तिकानां तु दूर्वायामपि मन्वते ॥ ४१ ॥

निःश्रेणिस्त्वधिरोहण्यां खर्जूरीभूरुहेऽप्यथ ।
शेफालिकायां निर्गुण्डी सिन्दुवारेऽथ नैचिकी ॥ ४२ ॥

उत्तमायां गवि प्रोक्ता शिरोदेशे च सा गवाम् ।
प्रक्रिया त्वधिकारे स्याच्छन्दस्योत्पादनेऽपि च ॥ ४३ ॥

प्रकारे च प्रतिष्ठा तु स्थितौ माहात्म्य एव च ।
षोडशाक्षरके चापि च्छन्दोभेदे च गौरवे ॥ ४४ ॥

---

१. 'पि च' ग. पाठः.

क्षितौ ह्रस्वेऽपि पठिता समाम्नाये मनीषिणा ।
प्रतिमा तु प्रतिकृतौ गजानां दन्तबन्धने ॥ ४५ ॥

रभसोऽनुकृतौ चाह खेये तु परिखाम्बुधौ ।
भूभृत्यपि समाम्नाता समाम्नाये मनीषिणा ॥ ४६ ॥

प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे ।
कारणे शिश्नयोन्योश्च जन्त्वमात्यादिमातृषु ॥ ४७ ॥

प्रत्ययात् पूर्वभागे चच्छन्दसोश्चोभयोरपि ।
अष्टाक्षरेऽप्यत्युक्ताख्ये तथा सलिलसंज्ञके ॥ ४८ ॥

विज्ञेया चतुराशीतिस्वरे च प्रसृतिः पुनः ।
तन्तौ वाचि च जाले वा तात्पर्येऽपि च बन्धने ॥ ४९ ॥

अथ प्रवृत्तिर्वार्तायां व्यापारे हस्तिनां मदे ।
कुलत्थसंज्ञधान्ये चाप्युच्चारेऽपि च सज्जनः ॥ ५० ॥

प्रवाहे च प्रसूतिस्तु पुत्रयोरपि जन्मनि ।
प्रसवाख्यक्रियायां च वल्लीविस्तारयोः पुनः ॥ ५१ ॥

प्रततिर्वैजयन्त्यां तु वीरुधीत्याह शब्दवित् ।
पक्षतिः पक्षमूलेऽपि प्रतिपत्संज्ञके तिथौ ॥ ५२ ॥

पद्धतिः पथि पङ्क्तौ च परीष्टिस्तु परीक्षणे ।
मार्गणे परिचर्यायामभितो यजनेऽपि च ॥ ५३ ॥

प्रवेणी तु कुथायां च वेण्यां चाथ प्रतोल्यसौ ।
पुरस्य गोपुरे चापि रथ्यायां प्रतिपत् पुनः ॥ ५४ ॥

स्याद् बहिष्पवमानस्य प्रथमायामृचि स्मृता ।
पक्षस्य प्रथमायां च तिथौ बाधेऽपि कीर्तिता ॥ ॥ ५५ ॥

प्राचिका तु भवेत् तत्र या भवेद् वनमक्षिका ।
श्येनासंज्ञविहङ्गे च पालङ्क्यां तु प्रकीर्तिता ॥ ५६ ॥

शाकभेदे च रभसः सल्लक्यामप्यभाषत ।
पापर्द्धिर्मृगयायां स्यात् पापर्द्धौ च प्रकीर्तिता ॥ ५७ ॥

पाताली वागुरास्थाल्योर्जङ्घामांसे तु पिण्डिका ।
रथचक्रस्य नाभौ च गृहधिष्ण्येऽथ पूतना ॥ ५८ ॥

देवजातिविशेषे च हरीतक्यां च तेषु च ।
रवेः शतानि चत्वारि रश्मीनां वृष्टिसृष्टये ॥ ५९ ॥

तेषां तुर्यशते ये स्यू रश्मयः पृतना पुनः ।
सेनाभेदे च वाहिन्यास्त्रिगुणात्मनि सा तथा ॥ ६० ॥

सेनायामपि युद्धे च पृथिवी तु महीखयोः ।
पृथ्वीका पुनरेलायां स्यात् तथा कृष्णजीरके ॥ ६१ ॥

बलाका तूदिता सर्वैर्बिसकण्ठ्याख्यपक्षिणि ।
शाकटायनसूरिस्तु व्याचष्टे स्मादिशाब्दिकः ॥ ६२ ॥

बन्धक्यां कुलटायां चेत्यथात्र रभसोऽपठीत् ।
स्याद् वारललनायां च व्रीहिभेदे च बर्बटी[※] ॥ ६३ ॥

भित्तिका तु नदीभेदे शरावत्याह्वये स्मृता ।
तथा माषादिचूर्णे च वैजयन्त्यां त्वभूद् भ्रमः ॥ ६४ ॥

लिपिसङ्करतः स्थाने शरावत्याः शतावरी ।
अस्यार्थत्वेन निर्दिष्टा स्थेयान् वै शाकटायनः ॥ ६५ ॥

ब्रवीति वज्रे रभसः पुनरत्र पठत्यमुम् ।
भूजम्बूरिति गोधूमे विकङ्कतफलेऽपि च ॥ ६६ ॥

मञ्जूषावाक् तु पेडायां पुरे च कथिता बुधैः ।
मर्यादा तु व्यवस्थायां सीमायां च प्रकीर्तिता ॥ ६७ ॥

अथो मनाका कामिन्यां हस्तिन्यां च प्रकीर्तिता ।
अथात्र रभसेनायमर्धश्लोक उदीरितः ॥ ६८ ॥

---

१. 'ति' ख. ग. क. पाठः ।

---

※ मातृकासु बर्पटीत्येव पाठो यद्यपि दृश्यते, तथापि कोशान्तरधातुपाठाद्यनुरोधेनैव निवेशितः ।

स्यात् कृत्रिमा **मातृका** या †दातृका कारणे स्वरे (!) ।
इत्येवमथ **मीमांसा** वेदवाक्यार्थचिन्तके ॥ ६९ ॥

शास्त्रे विचारणायां च सूरिभिः परिभाषिता ।
**मुरली** वंशवाद्ये च काहलायाश्च भेदके ॥ ७० ॥

पुण्डि[1]कासंज्ञकेऽथ स्याद् **मेखला** कटिसूत्रके ।
काञ्च्यामिति तु सिंहाद्याः श्रोणिस्थाने तु केचन ॥ ७१

खड्गत्सरुं निबध्नन्ति येन द्रव्येण तत्र च ।
पर्वतस्य नितम्बेऽपि **रशना** त्वङ्गुलावपि ॥ ७२ ॥

काञ्च्यां च **रेणुका** तु स्याद्धरेण्वाह्वयभेषजे ।
जमदग्नेश्च भार्यायामथ स्याद् **रेवती** गवि ॥ ७३ ॥

बलभद्रस्य पत्न्यां च पौष्णनक्षत्र एव च ।
तद्यु[2]क्तेकालमात्रे च तत्र जातस्त्रियामपि ॥ ७४ ॥

मालत्यां भेषजस्तम्बे नागदन्तीति विश्रुते ।
केषुचित् सामभेदेषु रेवत्य इति भूम्नि च ॥ ७५ ॥

प्रत्येकं स्युस्तृचे चापि रेवतीर्नउपक्रमे ।
मातृष्वप्याह रभसः शब्दवेदी सुधीरथ ॥ ७६ ॥

पथ्यायां गव्युमाकन्यालोहिनीषु च **रोहिणी** ।
कण्ठरोगप्रभेदे च नक्षत्रे च प्रजापतेः ॥ ७७ ॥

तद्युक्ते कालमात्रे च तत्र जातस्त्रियामपि ।
श्रुतौ तु मूलनक्षत्रेऽप्याम्नाता दृश्यते बुधैः ॥ ७८ ॥

कृष्णस्य पत्नीभेदेषु प्रधानेष्वेकयोषिति ।
**लक्तिका** गवि गोधायां वाद्यभेदे च कीर्तिता ॥ ७९ ॥

---

१. 'डि' ख. ग. पाठः. २. 'क्ते' ख. ग. पाठः.

† 'धातृका' इति स्यात् । तथा च मेदिनी 'मातृका धातृकामात्रोर्देवीभिद्वर्णमालयोः' इति ।

लुम्बिका तु स्त्रियां वाद्यभेदे भक्षान्तरे तथा ।
उलुम्बसंज्ञे वनिता पुनः स्निग्धस्त्रियामपि ॥ ८० ॥

स्त्रीमात्रे च वरत्रा तु वध्र्यां वर्तौ च कीर्तिता ।
वसतिस्तु गृहे रात्रावvस्थाने जिनाश्रमे ॥ ८१ ॥

वर्तनिस्तु भवेद् वृत्तौ मार्गे स्यात् तर्कपिण्डके ।
स्याद् वल्लरिस्तु मञ्जर्यां लतायां च धनञ्जयः ॥ ८२ ॥

वलभिस्तु पुरीभेदे कूटागारेऽपि कीर्तिता ।
वाशिता तु करिण्यां च स्त्रियां चाप्यथ वाणिनी ॥ ८३ ॥

मत्तयोषिति नर्तक्यां विदग्धायां च कीर्तिता ।
वाणीचिस्तु स्मृता योगे छायायामपि वाचि च ॥ ८४ ॥

विरजा तूद्देशस्थे पूर्भेदे जम्बुपादपे ।
वितण्डा तु भवेत् कच्छीशाके रभसभाषिता ॥ ८५ ॥

स्वपक्षस्थापनाहीनवादे तार्किकविश्रुता ।
विपणिः पण्यवीथ्यां स्यादापणेऽपि प्रकीर्तिता ॥ ८६ ॥

स्याद् विच्छित्तिस्तु विच्छेदे भावभेदे च योषिताम् ।
स चायं वस्त्रमाल्यादेर्न्यासोऽनास्थोपशोभितः ॥ ८७ ॥

अथो विपञ्ची वीणायां वीणाभेदे च सोऽप्यसौ ।
नवतन्त्रीकोऽल्पदण्डो विदारी तु रुगन्तरे ॥ ८८ ॥

क्रोष्ट्रीसंज्ञलताभेदेऽप्युक्ता वेद्यां तु वेदिका ।
तथैवाङ्गुलिमुद्रायां शर्करा तु शिलान्तरे ॥ ८९ ॥

रोगभेदे सितायां च शकलाल्पकपालयोः ।
शर्करावत्प्रदेशे च गुडे चाप्याह यादवः ॥ ९० ॥

भूने तु खण्डविकृतौ रभसो नाम्रभाषणः ।
शलाका तु भवेत् सूच्यां द्यूतोपकरणेऽपि च ॥ ९१[1]॥

---

१. 'ब' क. ख. ङ. पाठः.

अस्थूलदीर्घ[1]काष्ठादिमये वस्तुनि चाप्यथ ।
**श्वदंष्ट्रा** गोक्षुराभिख्यस्तम्बे यन्त्रान्तरेऽपि च ॥ ९२ ॥

परिखाया बहिर्भूमौ राज्ञां दन्तान्तरे शुनाम् ।
**श्ववृत्तिस्तु** शुनां वृत्तौ सेवायां चाथ **शष्कुली** ॥ ९३ ॥

अपूपभेदे कर्णस्य प्रदेशे च क्वचित् स्मृता ।
**शकन्धुर्देव**ताभेदे तथैव स्याद् वनस्पतौ ॥ ९४ ॥

**शिञ्जिनी** नूपुरे मौर्व्यां **शुश्रूषा** तु कथानके ।
उपास्तौ श्रोतुमिच्छायां **षण्डाली** तु सरस्यपि ॥ ९५ ॥

स्त्रियामपि सरागायां तैलमानेऽथ **सप्तला** ।
सातलायां तथा गुञ्जानवमालिकयोरपि ॥ ९६ ॥

**सन्धिला** तु सुरुङ्गायां नदी‡मन्दिरयोरपि ।
**सरघा** तु शुनीभेदे देवानां मक्षिकान्तरे ॥ ९७ ॥

मधुकारिण्यथ श्रेणौ **सरणि**र्मार्ग एव च ।
**सन्ततिस्त्व**न्ववाये स्यात् पारम्पर्येऽपि पुत्रयोः ॥ ९८ ॥

**सम्मतिस्त्वपि** वाञ्छायामनुज्ञापूजयोरपि ।
**समितिः** परिषत्स्थाने युद्धे संसदि सङ्गमे ॥ ९९ ॥

स्यात् **संवित्तिस्तु** संवादे ज्ञाने **संसिद्धि**[2]वाक् पुनः ।
सम्यक्सिद्धौ स्वभावे च मेदोम्राया च कश्चन ॥ १०० ॥

**स्यन्दिनी** त्वपि लालायां गोभेदे च क्षरत्स्तने ।
**सन्धिनी** त्वप्यकाले या दुग्धा गौस्तत्र केचन ॥ १०१ ॥

१. 'र्घे' क. ख. ग. पाठः. २. 'र्' ङ. पाठः.

‡ 'मदिरयोः' इति स्यात् । 'सन्धिला तु सुरुङ्गायां नदीमदिरयोः स्त्रियाम्' इति मेदिनी ।

द्विकालदोह्या सत्येककालं गौर्दुह्यते हि या ।
तत्रेत्यन्ये परे त्वाहुर्वृषाक्रान्तगवीष्विति ॥ १०२ ॥

वत्सान्तरस्य सन्धानात् सन्धिनीत्यपरे विदुः ।
**सिकता**स्तु बहुष्वेकैर्वालुकायामुदीरिताः ॥ १०३ ॥

सिकतावति देशे च तथैव व्रवने परे ।
**सिंहिका** तु जनन्यां स्याद् राहोः किञ्च महार्णवम् ॥ १०४ ॥

लङ्घयन्तं हनूमन्तं याप्यगच्छज्जिघांसया ।
तस्यामपि च राक्षस्यां कन्याभेदेऽस्य लक्षणम् ॥ १०५ ॥

अविवाह्यासु कन्यासु नतजानुरिति स्मृतम् ।
एतत् त्वदृष्टपूर्वं च क्लैब्यं च रभसोदितम् ॥ १०६ ॥

**सिथिला** तु नदीमध्यसुरुङ्गासु भवेदिति ।
**स्तैहिनी** तु महीजस्य फले स्यादङ्कुरे तथा ॥ १०७ ॥
**सुपर्वी** तु भवेत् कारवल्ल्यां कृष्णे च जीरके ।
**हारिणि**स्तु भवेन्मृत्यौ कुल्यायां **ह्रादिनी** पुनः ॥ १०८ ॥
वज्रे तटिति चेत्येवं त्र्यक्षरस्याध्यायः समाप्तवान् ॥ १०८३ ॥

इति त्र्यक्षरकाण्डे स्त्रीलिङ्गाध्यायः ।

## अथ त्र्यक्षरकाण्डे पुंलिङ्गाध्यायः ।

अथ त्र्यक्षरपुंल्लिङ्गशब्दाध्यायः प्रणेष्यते ।
अथ **पुंस्यर्णवो**ऽम्भोधौ तथा षण्णवतिस्वरे ॥ १ ॥

---

१. 'यां मुनीरि' क. ग ङ. पाठः.　२. 'चि' ख., 'फि' ङ. पाठः.　३. 'सि' ख. पाठः

छन्दोभेदेऽन्वयस्त्वन्ववायेऽनुगमने तथा ।
सम्बन्धे **चात्यय**स्तु स्यान्मरणे दोषदण्डयोः ॥ २ ॥
अतिक्रमे च कृच्छ्रे च मृग्यं त्वर्थान्तरं बुधैः ।
‡'नानात्ययानां वृक्षाणां' 'कामा नानात्यया' इति ॥ ३ ॥
एवमाद्यौपनिषदप्रयोगेषु मनीषिभिः ।
**अनल**श्चित्रके ब्रह्मा**वनय**स्तु विपद्यपि ॥ ४ ॥
व्यसनेष्वशुभे दैवेऽप्यनीतौ च चतुर्ष्वपि ।
स्याद**भाव**स्त्वसत्तायां मृत्यौ च रभसोऽपठीत् ॥ ५ ॥
अस्य विष्णोश्च भावेऽथो **अलिन्दः** प्रघणाह्वये ।
गृहैकदेशे विद्वांस्तु व्याचष्ट शाकटायनः ॥ ६ ॥
तद्यथा भोजनस्थान इत्यथ स्यात् प्रसाधने ।
**अलमो**ऽग्नौ नापितेऽथो **अञ्जलिः** करसम्पुटे ॥ ७ ॥
तथा कुडुबसंज्ञे च परिमाणेऽ**द्रतिः** पुनः ।
अग्नौ च *शास्त्रभेदे च यात्रायाम**ब्धिः** पुनः ॥ ८ ॥
विवरे सीम्नि काले चाप्य**थर्वा** त्वृषिभेदके ।
वेदभेदे च तत्रत्यमन्त्रेष्वपि तथास्य च ॥ ९ ॥
अध्येतर्य**ङ्गिरा**स्तु स्यादृषिभेदे तथास्य च ।
वंश्येष्वङ्गिरसो भूम्नि शाकटायनदृक्† पुनः ॥ १० ॥
बृहस्पतावङ्गिरसं प्रोक्तवानथ कथ्यते ।
**अनेहा** काल इन्द्रे चाप्य**नेधा**स्त्वग्निवातयोः ॥ ११ ॥
**आम्नाय**स्तु भवेद् वेदे सम्प्रदायान्ववाययोः ।
पाठाभ्यासे **चागम**स्तु शास्त्रेऽप्यागमनेऽपि च ॥ १२ ॥

---

‡ 'नानात्ययानां नानाफलानाम्' नानात्ययाः, अत्ययोऽतिगमनं, वस्तुस्वरूपमतीत्य विषयेषु प्रवेशः' (छा ६. ९. १, ४. १०. ३) इति आनन्दगिरिः । * 'शस्त्रभेदे' इति स्यात् ।

† शाकटायनपण्डित इत्यर्थः ।

उपदेशेऽप्यथाकर्षो द्यूते च द्यूतपाशके ।
आकृष्टौ शारिफलके हस्तिनोऽवयवान्तरे ॥ १३ ॥

स चावयव एष स्यादूर्ध्वदेशं कराङ्गुलेः ।
विभज्य सप्तधा तेषां भागानामादितो हि यः ॥ १४ ॥

द्वितीयभागस्तत्र स्यात् पार्श्व आनर्त्तवाक् पुनः ।
नृत्तस्थाने जनपदप्रभेदे च जने युधि ॥ १५ ॥

आवर्त्तोऽम्भोभ्रमे रोमप्रभृतेर्वलिते चये ।
आवर्त्तनायामावृत्तावाक्रन्दस्तु ग्रभौ नृपे ॥ १६ ॥

मित्रे च रभसस्त्रातर्याह्वाने रुदिते युधि ।
आरावेऽन्ये दारुणे च स्यादाकल्पस्तु कल्पने ॥ १७ ॥

वेषेऽप्याहुरथारम्भ उद्यमेऽपि वधेऽपि च ।
उपक्रमे च निर्माणेऽथालम्भः स्पर्शने वधे ॥ १८ ॥

आकरस्तु समूहे स्यादुत्पत्तिस्थान एव च ।
स्याद् रत्नलवणादीनामाकारस्त्वात्मवैकृते ॥ १९ ॥

आह्वाने चाकृतौ चापि स्यादथाहार ओदने ।
आनीतौ भक्षणे चाथो आरोहो दैर्घ्य उन्नतौ ॥ २० ॥

द्रुमाङ्गेऽप्यवरोहाख्ये हस्तिवाहे च कीर्त्तितः ।
श्रोण्यामारोहणेऽन्ये तु वरारोहाकटिस्थले ॥ २१ ॥

आग्रहस्तु स्वीकरणे निर्बन्धे निग्रहेऽपि च ।
आसङ्गे चाप्यथानाहो बन्धने चोदरस्य च ॥ २२ ॥

अधोवृध्यात्मके व्याधावारद्वास्तु बहुष्वपि ।
नीवृद्भेदे द्वयोस्तु स्यात् तद्देशोद्भूतजन्तुषु ॥ २३ ॥

---

१. 'चा' ख. पाठः. २. 'स्त' क. ग. ङ. पाठः. ३. 'च' ख. पाठः

**तद्देशोद्भवघोटे** स्यादाघाटः सीमघातयोः ।
**आघातस्ताडने** घातेऽप्यापातः पतने तथा ॥ २४ ॥

तदात्वे चाप्यातनेऽप्याधारस्त्वालवालके ।
अम्बुबन्धेऽधिकरणे वाप्यां त्वजय उक्तवान् ॥ २५ ॥

**आरामः** स्यादुपवने विरामे परिकीर्तितः ।
**आयासस्तु** प्रयत्ने स्यात् क्लेशे स्यादागवाक् पुनः ॥ २६ ॥

दैर्घ्ये रज्जुपटादीनामभितश्च विकर्षणे ।
**आचामस्त्वोदनस्य** स्यान्निःस्रावे मानराहये ॥ २७ ॥

आचान्तौ चाप्यथावाप आलवाले नवीव च ।
प्रक्षेपे न्यसने चान्येऽथाश्वासे विश्रमे तथा ॥ २८ ॥

ग्रन्थावच्छेदभेदे च काव्यादीनां प्रकीर्तितः ।
आशुक्षेपेऽप्यथातङ्को रोगे सन्तापशङ्कयोः ॥ २९ ॥

**आलेपः** पुनरालिप्तावनुलेपनवस्तुनि ।
**आक्षेपः** पुनराकृष्टौ निन्दाभर्त्सनयोरपि ॥ ३० ॥

वातव्याधिविशेषेऽथो परिपूर्णत्वयत्नयोः ।
**आभोगो** वारुणच्छत्रेऽप्यामोदः पुनरुच्यते ॥ ३१ ॥

हर्षे गन्धविशेषे च स च गन्धोऽयमीदृशः ।
विमर्दोत्थः परिमलो गन्धो जनमनोहरः ॥ ३२ ॥

स एव योऽतिनिर्हारी स स्यादालोकवाक् पुनः ।
उद्द्योते दर्शनेऽपि स्यादिति प्राहुर्मनीषिणः ॥ ३३ ॥

**आयोगोऽव्यापृतौ** गन्धमाल्याद्युपहृतौ तथा ।
**आजीवस्तु** क्षपणके जीविकायां च कीर्तितः ॥ ३४ ॥

१. 'रतावपि की'. ख. पाठः. २. 'व' ख. पाठः.

* 'प्रयत्ने' इति स्यात् ।

**आपीडः** शेखरे जातिच्छन्दोभेदेऽप्यथा**सवः** ।
पूगवृक्षे तथा मद्यसन्धाने यस्य चापरम् ॥ ३५ ॥
नाम स्यादासुतिरिति तत्र मतान्तरे तथा ।
अपक्वेक्षुरसैः सिद्धे स्यादाबन्धस्तु बन्धने ॥ ३६ ॥
योक्त्रे च स्यादथा**रक्षो** हस्तिनः कुम्भयोरधः ।
प्रदेशे नगरादीनां चोगादिपरि[illegible]रके ॥ ३७ ॥
**आत्मभूर्मन्मथे** विष्णौ विरिञ्चे चाप्यथो**त्सवः** ।
उत्सेकामर्षयोरिच्छाप्रसरे च महे तथा ॥ ३८ ॥
रभसस्तूत्सुके स्माह तद्[illegible] ।
**उत्सेधो** मकुटच्छत्रध्वजपूर्णापकाययोः ॥ ३९ ॥
प्रसोमदेववर्गस्य चतुर्थे सामि [illegible] ।
**उत्सङ्गः** पुनरङ्के स्याद् [illegible]रान्तरे ॥ ४० ॥
गजस्य पूर्वपादस्य पिण्डिका[illegible] परम् ।
विभज्य सप्तधा तत्र क्रमाद [illegible]ः ॥ ४१ ॥
अधः प्रारभ्य जानीयात् [illegible]रम् ।
अग्न्याधाने च रभसोऽथो[illegible]योः ॥ ४२ ॥
सामान्यवाक्येऽथो**द्धातः** [illegible] ।
स्यात् पादस्खलने चापि [illegible]णि ॥ ४३ ॥
गजस्य कर्णमूलाच्च चूलिका[illegible] ।
प्रदेशे मानभेदे च प्राणायाम[illegible] ॥ ४४ ॥
तस्य लक्षणमप्युक्तं योगवि[illegible] ।
चोटिका त्रिः परामृश्य जानु[illegible]था ताः ॥ ४५ ॥
षट्त्रिंशन्मन्द उद्घातो द्विगुणो [illegible] पुनः ।
**उत्पातस्तूदितः** सद्भिरुपप्लव इति श्रुतेः ॥ ४६ ॥

१. 'तः' ख. पाठः.

* इतःपरं 'मध्यमश्चैवोत्तमश्च प्रथम[illegible]व वा' इत्यर्धमपेक्षितम् ।

अजन्ये स्याच्चोत्पतन उच्छ्वासः पुनरुच्यते ।
ग्रन्थावच्छेदभेदे स्यात् क्वचिदुच्छ्वसनेऽपि च ॥ ४७ ॥

उत्रासस्तु भये सप्तदशारत्नि[illegible] ।
यूपस्य मूलादारभ्य द्वितीयेऽथ निवाहके ॥ ४८ ॥

उद्वाह ऊर्ध्ववहने पुंत्रेऽप्युद्वा[illegible] पुनः ।
ऋणे चावृद्धिके किञ्च भवेदुद्वहनेऽपि च ॥ ४९ ॥

उद्दालस्तु भवेद् वृक्षे श्लेष्मा[illegible] ।
उन्नते मुकुलाकारे मत्स्यग्रहणसाधने ॥ ५० ॥

दाशानां स्यादथोद्गीथः [illegible] पञ्चधा कृते ।
द्वितीयभक्तौ विद्वांस्तु व्याचख्यौ [illegible] ॥ ५१ ॥

सामगाने शुनामूर्ध्वमुखानां [illegible] ।
उदर्को भाविकालस्थफलेऽन्ताद्य[illegible] ॥ ५२ ॥

रभसस्त्वाह मदनकण्टके [illegible] ।
उदयस्तूदयाद्रौ स्याद् धनो[illegible] ॥ ५३ ॥

उन्नतौ चाह रभस उपरिस्थेऽ[illegible] ।
उच्चयो वस्त्रनीव्यां स्याद्धस्तादाने [illegible] ॥ ५४ ॥

अधः स्थितस्य पुष्पादेरूर्ध्वमुत्क्षिप्य [illegible] ।
उपायः पर्वभेदे स्यात् पूर्वस्मिन् [illegible] ॥ ५५ ॥

निधनात् कर्मणां सिद्धेर्लघुमार्गण[illegible] ।
राज्ञां च सामदानादौ विशेषाच्चोपसर्पणे ॥ ५६ ॥

उपवस्तु रवौ दाहेऽप्युपाधिः पुन[illegible] ।
उपधानक्रियायां च रथस्यावयवान्तरे ॥ ५७ ॥

औपधेयसमाख्ये च व्याजे चोपाधिवाक् पुनः ।
कुटुम्बव्यापृते धर्मचिन्तायां च [illegible] ॥ ५८ ॥

कार्यान्वियव्यवच्छेत्तृ तत्राथोदयनोऽपठीत् ।
साधनाव्यापकत्वे स्यात् समव्याप्तिकता तु या ॥ ५९ ॥

साध्येनायमुपाधिः स्यादित्येवमथ कङ्कर: ।
कण्टके च जलस्थानेऽप्यूत्विजपि तथापरे ॥ ६० ॥

पठन्ति तोयधारायामित्यभितुपदं पुनः ।
अग्नौ समुद्रे शैले च ककुभस्त्वर्जुनद्रुमे ॥ ६१ ॥

वीणाप्रसेवके गेयभेदे च कलमः पुनः ।
लेखन्यामङ्कुरे शालिप्रभेदे तस्करेऽपि च ॥ ६२ ॥

कल्लोलस्तु महत्यूर्मौ शत्रौ च रभसोदितः ।
कपर्दस्तु जटाजूटे देवदेवस्य शूलिनः ॥ ६३ ॥

दृश्यते च जटाजूटमात्रे स्यात्स [illegible] ।
कर्दमस्त्वत्र पङ्कारे पङ्के च रभसोदितः ॥ ६४ ॥

कलङ्कस्त्वपवादे च चिह्ने [illegible] कल्कः पुनः ।
युद्धे द्वन्द्वे च कलभः पुनः कीर्तित आतपे ॥ ६५ ॥

तथोक्तो धान्यपवने कटकः [illegible] ।
पर्जन्ये कर्णवति च [illegible] ॥ ६६ ॥

जलपात्रेऽथ कणयः शरभेदे च [illegible] ।
क्रतुभेदे च कचपः पुनः [illegible] ॥ ६७ ॥

पत्रे तिले करूशास्तु [illegible] ।
स्यात्तु क्षत्रियभेदेऽसौ सर्वे [illegible] ॥ ६८ ॥

वैद्यस्तु तण्डुलकणे कश्चित् [illegible] ।
कुसूले रभसस्त्वाह कदरः खदिरे सिते ॥ ६९ ॥

---

१. 'स्य विच्छेद त' (?) इ. पाठ .

---

* 'एधतुः पुरुषेऽग्नौ ना' इति तु मेदिनी .

रोगक्रकचयोश्चाथ कटभेदे **कटोलवाक्** ।
तथा वादित्रभेदे च **कर्कोर**[1]स्तु महीरुहे ॥ ७० ॥

नवनीतेन मिश्रे च तक्रे नवविलोलिते ।
**क्षवथु**स्तु क्षुते कासे **कारुजः** पुनरुच्यते ॥ ७१ ॥

*नाकौ[2] च कलभे चापि जानीयात् पण्डितो जनः ।
**किरण**स्त्वक्ष्वरश्मौ च रश्मौ च कथितो बुधैः ॥ ७२ ॥

**किंशारु**स्तु शरे धान्यशूके च स्यात् तु **कीचकः** ।
वातोद्धूतस्वनद्वेणौ दैत्यभेदे च यः किल ॥ ७३ ॥

स्यालो विराटराजस्य तत्र स्यात् **कुडुबः**[3] पुनः ।
परिमाणे पक्षिनीडे **कुबेर**स्तु द्रुमान्तरे ॥ ७४ ॥

नान्दीवृक्षाह्वये राजराजे च **क्षुरकः** पुनः ।
कोकिलाक्षाह्वयस्तम्बे तिलकाख्ये च पादपे ॥ ७५ ॥

**कृतान्तो** यमसिद्धान्तदैवाकुशलकर्मसु ।
†**केनारः** कुम्भिनरके शिरःकापालसन्धिषु ॥ ७६ ॥

इत्येवं रभसेनोक्तमुत्तरार्धे[5] च तद्वचः ।
§**कोट्टारो** नरके कूपे पुष्करिण्याश्च पाटके ॥ ७७ ॥

**खजक**स्त्वपि मन्थाने घृते चाप्यथ **खर्बरः** ।
भिक्षापात्रे कपाले च करे चाप्यथ **खण्डिकः** ॥ ७८ ॥

१ 'तो' ङ., 'कैरास्तु' ग. पाठः. २. 'मौ' क. पाठः. ३. 'व' क. ख. ग. च. पाठः. ४. 'क्त' क. पाठः. ५. 'र्थं' ख. ग. घ पाठः.

* 'कारुजः कलभे फेने वल्मीके नागकेसरे । गैरिके शिल्पिनां चित्रे स्वयञ्जाततृणेऽपि च ॥' इति हेमचन्द्रः । 'कारुजः शिल्पिनां चित्रे वामलूरे गजार्भके' इति मेदिनी । 'कारुजः कलभे नाके' (पृ. २४०. श्लो. १८) इति तु वैजयन्ती । † 'केनारः कुम्भिनरके शिरःकपोलसन्धिषु' इति मेदिनी । § कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके' इति तु मेदिनी ।

हरेणुसंज्ञधान्ये च कलायाख्ये च धान्यके ।
गमथस्तु पथि ज्ञेयो जलधाने च कीर्तितः ॥ ७९ ॥

गालवस्त्वृषिभेदे च लोध्रे च गिरिणः पुनः ।
आचार्ये जलदे ग्रामे रभसस्त्वाह गुण्डकः ॥ ८० ॥

कलोक्तौ[1] मलिने धूलौ स्नेहपात्र इतीदृशम् ।
गोधूमस्तूदितो नागरङ्गधान्यप्रभेदयोः ॥ ८१ ॥

गोपीथो गोनिपाने च तीर्थे कालान्तरेऽपि च ।
गोकीलो मुसले सीरे[2] गोविन्दस्त्वपि शार्ङ्गिणि ॥ ८२ ॥

गवामधिकृते चाथ गोसर्जः सर्जने गवाम् ।
प्रभाते गोरसस्तु स्यात् कालशेये च दध्नि च ॥ ८३ ॥

गोपतिस्तु रवौ शण्डे शिवे च रभसः पुनः ।
नग्ने वन्दिनि गोरङ्कुरित्याह घुटिकः पुनः ॥ ८४ ॥

गुल्फे गजतुरङ्गादेः पश्चाच्चरणबन्धके ।
शङ्कावथ स्याज्जम्बीरो जम्भलाह्वयपादपे ॥ ८५ ॥

तथा मरुवकाख्ये च स्तम्बेऽथ स्याज्जरूढवाक् ।
अग्नौ संवत्सरे मासे शरीरेऽप्यथ जर्तिलः ॥ ८६ ॥

ऋषिभेदे तथैव स्यादरण्यजतिलेऽपि च ।
जसुरिस्त्वरणौ[3] पत्रे[4] वह्नौ चाथ जटायुवाक् ॥ ८७ ॥

रामायणप्रसिद्धे स्याद् गृध्रराजेऽपि गुग्गुलौ ।
जनिमा मातापितरावुत्पत्तिस्तनयोऽपि च ॥ ८८ ॥

जागृविस्त्वग्निनृपयोर्जामाता त्वात्मजापतौ ।
तथा श्वेततिले चापि सूर्यावर्ते च कश्चन ॥ ८९ ॥

---

१. 'के' ङ. पाठः. २. 'कीले गो' ग. पाठः. ३. 'रुणौ' क. ख. ङ. पाठः. ४. 'पा' ख., 'पत्रव' ग. पाठः.

**जीमूत**स्तु गिरौ मेघे देवताडाख्यवल्लिषु ।
अथोत्तरार्धे रभसः पपाठ बहुवित्तमः ॥ ९० ॥

**तमालो** वरुणे खड्गे तापिञ्छे तिलकेऽपि च ।
**तपन**स्तु रवौ चन्द्रे घर्मेऽपि च पशावपि ॥ ९१ ॥

†**त्र्यङ्गः** शिक्यभेदे च विधौ जन्यां च कीर्तितः ।
**तन्यतु**स्तु रवावुक्तौ गिरौ च परिकीर्तितः ॥ ९२ ॥

**तमोनुत्** त्वग्निचन्द्रार्केष्वथ **तापिञ्छ** इत्ययम् ।
सिंहेनोक्तस्तमालद्रौ काकतुण्डयां तु यादवः ॥ ९३ ॥

**त्रिवर्गो** धर्मकामार्थत्रयेऽप्योषे फलत्रिके ।
स्थितिवृद्धिक्षये राज्ञां त्रयाणां वर्ग एव च ॥ ९४ ॥

**त्रिककुत्** तु त्रिकूटाख्यपर्वतेऽपि च शार्ङ्गिणि ।
**त्रिधामा** वासुदेवेऽग्नौ **दलव**स्तु दलान्तरे ॥ ९५ ॥

धनञ्जयस्तु विदले प्राह प्रहरणेऽप्यथ ।
कुलालचक्रे वहने **दण्डारः** स्थिरयन्त्रके ॥ ९६ ॥

**दरथो** विवरे भीत्यां दिक्षु चापि प्रसारणे ।
**दमुना**स्तु रवौ वह्नावुत्तरार्धे तु राभसम् ॥ ९७ ॥

स्यान्मयूरशिखायां च यवान्यामपि **दीप्यकः** ।
**द्रुघण**स्तु विरिञ्चे च मुद्गलेऽप्यथ **देवलः** ॥ ९८ ॥

ऋषिभेदे तथा देवाजीवे चाप्यथ **देवयुः** ।
धार्मिके याजके होमे **दैत्यारि**र्विष्णुदेवयोः ॥ ९९ ॥

**नरेन्द्र**स्तु नृपे मन्त्रवादिन्याह तु यादवः ।
विषवैद्येऽथ **नभस** ऋतौ व्योम्नि सरित्पतौ ॥ १०० ॥

---

† 'त्र्यङ्गटं शिक्यभेदेऽपि धौताञ्जन्यां च न द्वयोः' इति तु मेदिनी ।

**नर्मठ**स्तु भवेत् षिड्गे चूचुके **नमसः** पुनः ।
वेत्रे प्रणामे **नमुचिः** पुनर्दैत्यान्तरे स्मरे ॥ १०१ ॥

**नदनु**स्तु मृधे मेघे **नाथांत**स्तु प्रजापतौ ।
आहारे चाथ **निगमो** नगरे च वणिक्पथे ॥ १०२ ॥

वेदे च निश्चये मार्गे पदानामर्थशासके ।
ग्रन्थभेदेऽथ रभसो वणिज्यपि कटेऽपि च ॥ १०३ ॥

**निवाप**स्तु भवेदुप्तौ पितॄणामपि तर्पणे ।
**निपातः** स्यादधःपाते चादिप्रभृतिषु स्मृतः ॥ १०४ ॥

**निघात**स्त्वनुदात्ताख्यस्वरे निहननेऽपि च ।
**निकाय**स्तु शरव्ये स्यात् समूहेऽपि सधर्मणाम् ॥ १०५ ॥

गृहे बहूनामेकत्रकरणे परमात्मनि ।
**निष्कुट**स्तु गृहारामे कवाटे च प्रकीर्तितः ॥ १०६ ॥

सहस्रांशुतुरङ्गे तु ***निर्नर**स्तुषपावके ।
**निकार**स्तु तिरस्कारे धान्यस्योत्क्षेपणेऽपि च ॥ १०७ ॥

**नितम्ब**स्तु वधूकट्याः पश्चाद्भागे परे पुनः ।
श्रोणिमात्रेऽद्रिकटके **निर्यूह**स्त्वपि शेखरे ॥ १०८ ॥

द्वारे क्वाथे च निर्यासे नागदन्त्याख्यशङ्कुषु ।
**निष्क्रमो** बुद्धिसामर्थ्ये निर्गतौ दुष्कुले तथा ॥ १०९ ॥

**निर्वेश** उपभोगे स्याद् वेतने मूर्च्छनेऽपि च ।
स्या**न्निषङ्ग**स्तु तूणीरे सङ्गेऽप्यथ **निसर्ग**वाक् ॥ ११० ॥

स्वभावे सर्जने न्यासे निर्गमेऽप्यजयोऽपठीत् ।
**निष्पावः** शिम्बिसंज्ञे स्याद् धान्ये ब्रूते तु यादवः ॥ १११ ॥

---

१. 'माणे न' क. ग. पाठः. २. 'धा' ग. पाठः. ३. 'र्मि' ग. पाठः.

* 'निर्झरस्तु सहस्रांशुतुरङ्गे तुषपावके' इति तु मेदिनी

श्वेतशिम्बौ च निष्पूतिक्रियायां रभसः पुनः ।
कडङ्गरे तथा प्राह पवने निर्विकल्पके ॥ ११२ ॥

निःस्रावणक्रियायां तु **निःस्रावो** भक्तमण्डके ।
**निवेशस्तु** विवाहे स्याच्छिबिरे च निवेशने ॥ ११३ ॥

निवेशनं च रचना स्थितिर्निषदनं तथा ।
**निमेषोऽ**ष्टादशांशे स्यात् काष्ठायाश्च निमीलने ॥ ११४ ॥

**निक्षेपस्तु** निधाने स्यात् तथोपनिधिसंज्ञके ।
द्रव्यभेदे परवशस्थापितेऽथ **निषेध**वाक् ॥ ११५ ॥

प्रसोमदेववर्गस्य पञ्चमे साम्नि कीर्तिता ।
प्रतिषेधे **निरोधस्तु** रोधे संक्षयनाशयोः ॥ ११६ ॥

**निचोलः** प्रच्छदपटे कञ्चुके **निलयः** पुनः ।
गृहे निलयने चाथ **नियमः** स्यान्नियन्त्रणे ॥ ११७ ॥

आज्ञायां च प्रतिज्ञायां व्रतनिश्चययोरपि ।
**निवहस्तु** समूहे स्याद् वायुस्कन्धान्तरेऽपि च ॥ ११८ ॥

**निह्नवस्त्व**पलापे स्याद् विश्वासे निकृतावपि ।
यादवस्तु सुविश्वासे नमस्कारेऽपि साञ्जलौ ॥ ११९ ॥

**निग्रहो** भर्त्सने सीम्नि रभसो बन्धनेऽपि च ।
**निशीथस्त्व**र्धरात्रे स्यात् प्रदोषे कश्चिदब्रवीत् ॥ १२० ॥

**निकुम्भः** कुम्भकर्णस्य पुत्रे स्तम्बान्तरेऽपि च ।
नागदन्तीसमाख्येऽथ हिमानिलनिवारणे ॥ १२१ ॥

प्रावारभेदे **निस्तारस्तू**णीरे कश्चिदब्रवीत् ।
**प्रत्ययोऽ**धीनशपथज्ञानविश्वासहेतुषु ॥ १२२ ॥

---

१. 'ङ्क' क. ग. घ. पाठः. २. 'ने' ख. पाठः. ३. 'शे' क. ङ. पाठः.

रन्ध्रे च प्रथितत्वे चाप्याचारप्रतियानयोः ।
सनादिशब्दावयवे तथैव स्यात् सुबादिषु ॥ १२३ ॥

**प्रभवः** स्यादपां मूले विक्रमे जन्मकारणे ।
आद्योपलब्धिस्थानेऽथ प्रतापे स्यात् **प्रभाववाक्** ॥ १२४ ॥

माहात्म्ये च **प्रग्रह**स्तु बन्द्यामारग्वधद्रुमे ।
तुलासूत्रेऽश्वादिरश्मौ रश्मौ नियमनेऽर्चने ॥ १२५ ॥

**प्रग्राह**स्तु तुलासूत्रे तथैवाश्वादिरश्मिषु ।
**प्रवहो** वायुभेदे स्याद् वायुमात्रे बहिर्गतौ ॥ १२६ ॥

**प्रवाह**स्तु प्रकृष्टाश्वे जलवेगे प्रवर्तने ।
परम्परायामपि च **प्रकर**स्तु कदम्बके ॥ १२७ ॥

तथैव ततपुष्पादौ भेदसादृश्ययोः पुनः ।
**प्रकारो**ऽथ **प्रमाथः** स्याद्धिंसायां च प्रमन्थने ॥ १२८ ॥

वैजयन्तीसमुद्दिष्टो धन्विनां *लस्तकग्रहे ।
**प्रस्तरो** मणिपाषाणकुशेषु कथितो बुधैः ॥ १२९ ॥

**प्रस्तार**स्तु प्रस्तरणे वृत्तविन्यसनेऽपि च ।
**प्रस्तावः** स्यादवसरेऽधिकारे सामवेदिनाम् ॥ १३० ॥

साम्नः प्रथमभक्तौ च **प्रक्रमः** स्यादुपक्रमे ।
प्रमाणभेदे सोऽप्युक्तो द्विपदस्त्रिपदोऽपि वा ॥ १३१ ॥

अथ **प्रयामो** नीवाके[1] प्रयात्ये[2]† च प्रकीर्तितः ।
**प्रसवो** जननानुज्ञापुत्रेषु फलपुष्पयोः ॥ १३२ ॥

पारम्पर्यप्रसङ्गेऽपि‡ प्राणिनां गर्भमोचने ।
प्रेरणे प्रसृतौ चाथ **प्रसरः** प्रणवे स्मृतः ॥ १३३ ॥

१. 'न्रा' क. ख. पाठः. २. 'व' क. ङ. पाठः.

* 'लस्तको धनुषो मध्यम्' (पृ. ११८. श्लो. १७७) इति वैजयन्ती । † 'प्रायत्ये' इति स्यात् । ‡ 'पारम्पर्ये प्रसङ्गेऽपि' (पृ. २४३. श्लो. ४८) इति तु वैजयन्ती ।

वेगे च **प्रणय**स्तु स्याद् याच्ञायां सौहृदेऽपि च।
विस्रम्भे स्यात् परिचये निर्माणे रभसः पुनः ॥ १३४ ॥
प्रसरे चाप्यभाषिष्ट **प्रणव**स्तु स्तुतावपि।
ओङ्कारे **प्रलय**स्तु स्यान्मृत्यावस्पन्दनस्थितौ ॥ १३५ ॥
मूर्च्छायामपि कल्पान्ते श्लेषे चापि क्षयेऽपि च।
**प्रदर**स्तु भवेद् भङ्गबाणयोः स्त्रीरुजान्तरे ॥ १३६ ॥
रक्तस्रुत्यात्मके दीर्णौ **प्रपञ्च**स्तु विपर्यये।
विस्तारे सञ्चये च स्यात् **प्रवेष्ट**स्तु भुजे भवेत् ॥ १३७ ॥
गजस्य दन्तमूलाच्च करीर्याख्यात् परे भवेत्।
प्रदेशेऽथ **प्रकोष्ठः** स्यादलिन्दे राजसद्मनाम् ॥ १३८ ॥
कक्ष्यान्तरे च हस्तस्य कफोणिमणिबन्धयोः।
मध्ये चाथ **प्रयोगः** स्यात् सुरतर्णप्रतानयोः ॥ १३९ ॥
कर्मणां च विधौ चापि प्रयुक्तौ प्रेरणात्मनि।
उच्चारितेषु शब्देषु शब्दस्योच्चारणेऽपि च ॥ १४० ॥
**प्रदेश**स्त्वेकदेशे स्यादुपदेशप्रदानयोः।
प्रादेशेऽप्याह रभसः **प्ररोह**स्तु प्ररोहणे ॥ १४१ ॥
अङ्कुरेऽथ **प्रतोदः** स्यात् तोत्त्रे चापि प्रतोदने।
सामप्रभेदयोश्चापि परीतेत्यृचि गीतयोः ॥ १४२ ॥
**प्रसाद**स्तु प्रसत्तौ स्यात् स्वच्छत्वेऽप्यनुरोधने।
काव्यालङ्कारभेदे च **प्रभास**स्तु प्रभासने ॥ १४३ ॥
तीर्थभेदे **प्रचार**स्तु प्रायशश्चरणे तथा।
खड्गे चाथ **प्रतापः** स्यात् प्रभावभृशतापयोः ॥ १४४ ॥
**प्रपात**स्तु प्रपतने तथा सौप्तिकरोधसोः।
गिरेर्भृगौ च **प्रस्रावः** पुनः प्रस्रुतिमूत्रयोः ॥ १४५ ॥
भक्तमण्डे **प्रघाण**स्तु तरुस्कन्धेऽप्यलिन्दके।
**प्रघण**स्तु तथालिन्दे लोहमुद्गरयोः स्मृतः ॥ १४६ ॥

**प्रतिघ**स्तु प्रतिहतौ स्यात् क्रोधवधयोरपि ।
**परिघ**स्त्वर्गले दण्डे परिघातास्त्रयोरपि ॥ १४७ ॥

कालयोगविशेषे च मूढगर्भे च मुद्गरे ।
**पराक**स्तु द्वादशाहोपवासात्मव्रतान्तरे ॥ १४८ ॥

अहीनक्रतुभेदानां त्रिरात्राणां तथा क्वचित् ।
दूरे खड्गे **पराग**स्तु पुष्परेणौ रजस्यपि ॥ १४९ ॥

स्नानीयादौ च रभसस्त्वद्रिभेदोपरागयोः ।
विख्यातौ चाथ सम्प्रोक्तः **पर्यायो**ऽवसरे क्रमे ॥ १५० ॥

सामस्तोत्रगतस्तोमतृतीयांशेऽप्यथ स्मृतः ।
पर्यस्तिकायां खट्वायां **पर्यङ्कः** स्याच्चतुर्ष्वपि ॥ १५१ ॥

ज्ञेय ‡आसनभेदेषु **पर्जन्य**स्तु पुरन्दरे ।
गर्जदभ्रेऽभ्रनिनदे वास्तुदेवान्तरे तथा ॥ १५२ ॥

अस्त्रयन्त्रे **पर्वत**स्तु मुनिभेदे गिरावपि ।
मेघेऽप्यथ **पटीरः** स्यात् कन्दर्पे चापि चन्दने ॥ १५३ ॥

कन्दरे त्वपरे चाहुः **पल्सल**स्तु प्रकीर्तितः ।
प्रहारेऽन्यैः प्रहासेऽन्यैः **पणव**स्त्वपि डिण्डिमे ॥ १५४ ॥

गजस्कन्धेऽप्यथो चारे **प्रणिधिः** प्रार्थनेऽपि च ।
प्रणिधाने च रभसः प्राहार्धश्लोकमुत्तरम् ॥ १५५ ॥

खड्गधेनुदले फेने **परञ्ज**स्तैल†पत्रके ।
**परिधि**र्यज्ञियतरोः शाखायामुपसूर्यके ॥ १५६ ॥

प्राकारे दृश्यते चापि षट्सु शुक्रियसामसु ।
परिधानक्रियायां च **परशु**स्तु परश्वधे ॥ १५७ ॥

‡ पद्मार्धपद्मनिगूढचरणपादोपवेशात्मकेषु । † 'यन्त्रके' इति स्यात् । 'परञ्जस्तैलयन्त्रे स्याच्छुरिकाफलफेनयोः' इति मेदिनी ।

वज्रे च टङ्कणे क्षारे **पलाण्डु**स्तु निरूपितः ।
कन्दभेदे सुकन्दाख्ये दुर्गन्धे त्यक्तभक्षणे ॥ १५८ ॥
दशानामपि तज्जातिभेदानां कुत्रचित् स्मृतः ।
**परिज्वा** तु मरुद्वह्न्योश्चन्द्रे **प्राग्भार**वाक् पुनः ॥ १५९ ॥
विज्ञेयो गिरिशृङ्गाग्रे तथैवातिशयेऽपि च ।
प्रकृष्टासादने तु स्यात् **प्रासादो** मन्दिरान्तरे ॥ १६० ॥
नृपाढ्यदेवतादीनां **प्राणथ**स्तु प्रजापतौ ।
मदनाख्यद्रुमे चाथ **पार्यरो**† रभसोदितः ॥ १६१ ॥
भक्तसिक्थे कदम्बस्य केसरे रभसः पुनः ।
**पाटीरो** मूलके वङ्गे[3] वार्तिके[4] लितहंन्यपि(?)* ॥ १६२ ॥
केदारे वेणुसारे च प्राह वारिधरेऽपि च ।
इत्येवं **पुलक**स्तु स्याच्छत्रस्थास्वणुराजिषु ॥ १६३ ॥
हीरके रभसस्त्वत्र पठति श्लोकमुत्तरम् ।
कृमिप्रभेदे गल्वर्कमणिदोषप्रभेदयोः ॥ १६४ ॥
रोमाञ्चे हरिताले च रत्नभेदेऽप्यथोदितः ।
स्यात् **पुलाक**स्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥ १६५ ॥
**पुद्गल**स्तु शरीरे स्यात् परमाणौ तथात्मनि ।
**पुङ्गव**स्त्वृषभे पुंसां श्रेष्ठे **पुन्नाग**वाक् पुनः ॥ १६६ ॥
केसराख्यद्रुमे पुंसां श्रेष्ठे जातिफलेऽपि च ।
**पुरन्ध्रिः**[6] पुनरिन्द्रे च वरुणे चाथ **वण्ठरः** ॥ १६७ ॥
करीरकोशे तालस्य पल्लवे रभसोदितः ।
**बिन्दुल**स्तु भवेदम्बुवेतसे वेतसेऽपि च ॥ १६८ ॥

---

१. 'रा' ख., 'ल' ग. पाठः. २. 'च' ग. पाठः. ३. 'ङ्गे' क. पाठः. ४. 'पालिके' क ग. ङ. पाठः. ५. 'ह्रा' ग. पाठः. ६ 'न्ध्री' ग. पाठः.

---

† 'पार्परो भक्तसिक्थे स्यात् कीनाशे राजयक्ष्मणि । जराटेऽपि कदम्बस्य केसरे च गदान्तरे' इति तु मेदिनी । * 'तितउन्यपि' इति स्यात् । 'पाटीरो मूलके वङ्गे तितऔ वार्तिकेऽम्बुदे' इति हेमचन्द्रः ।

**भरत**स्त्वृत्विजि नटे रामस्य च कनीयसि ।
आद्यक्षत्रियभेदे च वर्षेऽस्मिन् नृत्तशास्त्रके ॥ १६९ ॥

**भास्कर**स्तु भवेद् वह्नावादित्ये रभसः पुनः ।
**भाकूटः** शैलभेदे स्यात् तथैवानिमिषान्तरे ॥ १७० ॥

**भुवन्यु**र्भास्करे वह्नौ **भूतात्मा** तु विरिञ्चने ।
जीवात्मनि शरीरे च पवने चाथ **मन्दरः** ॥ १७१ ॥

अब्धिमन्थनशैले च हारभेदेऽष्टयष्टिके ।
**महेन्द्र**स्तु भवेच्छैलविशेषेऽपि पुरन्दरे ॥ १७२ ॥

**मगध**स्तु भवेद् राजभेदे तस्य तु नीवृति ।
मगधा भूम्नि च स्यात्तु वाद्यभेदे च मड्डुके ॥ १७३ ॥

मुष्टौ च फलकादीनां **मारिष**स्तु निरूपितः ।
जीवशाकाह्वये शाकस्तम्बे नाट्योक्तिगोचरे ॥ १७४ ॥

आर्ये स्यादथ **मारीचः** काकोले याजके द्विपे ।
रक्षोभेदे **मासर**स्तु भक्तमण्डे तथैव च ॥ १७५ ॥

मद्यस्य साधनद्रव्ये वल्कसाख्येऽथ **मारुतिः** ।
भीमसेने हनुमति **मुदिरो** मेघसूर्ययोः ॥ १७६ ॥

**मुकुर**स्तु कुलालस्य दण्डे चादर्शनेऽपि च ।
वकुले चाथ **मुरवः** खण्डिकाद्वितयात्मके ॥ १७७ ॥

मानभेदे वाद्यभेदे **मुर्मुर**स्तु तुषानले ।
ज्वलदङ्गारपूर्णाग्नौ त्वपरेऽथ **मुकुन्द**वाक् ॥ १७८ ॥

नवानां निधिभेदानामेकस्मिंश्च निधावपि ।
वासुदेवेऽथ **मुहरिः** सूर्ये चाप्यनडुह्यपि ॥ १७९ ॥

**मोरटः** कृष्णजीरे च रम्भास्थ्नि मलयोद्भवे ।
**यजत**स्तु शशाङ्के स्याद् यज्ञद्रव्येऽथ मन्मथे ॥ १८० ॥

१. 'हु' क. ङ. पाठः.

रमतिः स्वर्गसभयोर्लुब्धकस्तु निगद्यते ।
आर्द्रायां मृगयौ चाथ लोहित्यो दक्षिणाम्बुधौ ॥ १८१ ॥

व्रीहौ च नदभेदे च वञ्चुलस्तु द्रुमान्तरे ।
तिमिशाख्येऽप्यशोके च वेतसेऽथ वरूथवाक् ॥ १८२ ॥

रथगुप्तौ मृगे चाथ वण्डालः स्यात् खनित्रके ।
नौकायां शूरयोर्युद्धे वरण्डस्त्वपि संहतौ ॥ १८३ ॥

तृणकाष्ठादिभारे च मुखरोगान्तरे तथा ।
पुम्बलाख्ये[1]†ऽन्तरावेदौ प्राकारेऽथ वटम्बवाक् ॥ १८४ ॥

शैले च तृणपुञ्जे च वन्दीकस्तु[2] पुरन्दरे ।
तथैव तोरणस्तम्भे वराणस्तु पुरन्दरे ॥ १८५ ॥

वात्स्यायनमुनौ चाथ व्यवायो मैथुनेऽपि च ।
व्यवधानेऽथ वहतिः कुटुम्बेऽमात्यपुत्रयोः ॥ १८६ ॥

वहतुस्तु बलीवर्दे कालेऽग्नौ वमथुः पुनः ।
वमने गजहस्तोत्थशीकरे चाथ वारिदे ॥ १८७ ॥

अमोघ उत्पत्तिक्षेत्रेऽप्युक्तो वावीर[3] इत्यथ ।
व्यायामः पौरुषे व्यामे स्पर्धायां दुर्गसञ्चरे ॥ १८८ ॥

आकर्षणे च वस्त्रादेः स्याद् दीर्घीकरणेऽपि च ।
आयासेऽप्यथ विज्ञेयो व्याघातो व्याहतावपि ॥ १८९ ॥

आरग्वधद्रुमे कालयोगभेदे च भाषितः ।
वाग्योनिर्वचने कल्पे व्याघ्रपात् तु विकङ्कते ॥ १९० ॥

ऋषिभेदेऽथ विस्रम्भो विश्वासस्नेहयोरपि ।
स्यात् केलिकलहाभिख्यविप्रलम्भे च संस्तवे ॥ १९१ ॥

१. 'चु' क. ख. ग. पाठः. २. 'न्दि' ख. ग. ङ. पाठः. ३. 'पी' क., 'डी' ङ. पाठः.

† 'मुखजः पुनः । पुंहलोऽपि वरण्डोऽपि' (पृ. १८३. श्लो. १२५) इति तु वैजयन्ती ।

**विष्कम्भः** प्रतिबन्धे च प्रतिबन्धस्य साधने ।
अर्गलादौ मूढगर्भभेदयोः शस्त्रदार्ययोः ॥ १९२ ॥
कूपकाङ्गप्रभेदे च कालयोगान्तरे तथा ।
विस्तारे चाथ **विष्टम्भः** प्रतिबन्धे प्रकीर्तितः ॥ १९३ ॥
महावैराजनाम्नश्च साम्नः प्रस्तावभक्तितः ।
परेषु दशसु स्तोभेष्वथ क्रान्तौ च **विक्रमः** ॥ १९४ ॥
तथैव शक्तिसम्पत्तौ क्षान्तौ च रभसोऽपठीत् ।
**विष्टरस्त्वा**सने वृक्षे दर्भमुष्टौ च भाषितः ॥ १९५ ॥
रभसस्त्वाह **विस्तारं** विस्तृतिस्तम्बयोरथ ।
**विपाकः** पचने स्वेदे* विरुद्धे कर्मणः फले ॥ १९६ ॥
**विस्मयस्त्व**द्भुते दर्पे **विशयस्त्व**पि संशये ।
वे(श्या (श्मा)पि शयने ज्ञेयो **विषयस्त्व**पि गोचरे ॥ १९७ ॥
देशे रूपरसादौ च तथा स्यान्नित्यसेविते ।
पृथक् तु रभसः प्राह देशाज्जनपदेऽप्यमुम् ॥ १९८ ॥
**विदुलस्तु** भवेदम्बुवेतसे वेतसेऽप्यथ ।
**विद्रुमः** पादपे च स्याद् प्रवालेऽप्यजयः पुनः ॥ १९९ ॥
अूते किसलये चापि तथैव मणिभूरुहे ।
**विलम्बस्त्व**परैरुक्तो विषभेदे विलम्बके ॥ २०० ॥
**विटङ्कः** पादपाङ्गे च गृहस्यावयवेऽपि च ।
**विसर्गस्तु** परित्यागे पुरीषेऽथ **विवेकवाक्** ॥ २०१ ॥
पृथक्कारे पृथग्भावे जलद्रोण्यां विचारणे ।
**विश्लेषस्तु** पृथक्कारे विरहेऽथ **विलासवाक्** ॥ २०२ ॥
लीलायां भावभेदे च स च स्याच्छ्लिष्टविक्रिया ।
**विकुस्रस्तु** समुद्रे च चन्द्रे चाथ **विकारवाक्** ॥ २०३ ॥

---

* 'क्लेदे' इति तु मेदिनी ।

रोगे चाप्यन्यथाभावे **विवधस्तु** दितः पथि।
पर्याहारे च भारे च **विश्वप्सा** त्वन्तरेऽनिले॥ २०४॥
पुरन्दरेऽथ **विश्वात्मा** विरिञ्चेऽपि च भास्करे।
**वीवधस्तु** भवेन्मार्गे स्यात् पर्याहारभारयोः॥ २०५॥
**वीकाशस्तु** रहस्युक्तः प्रकाशे **वृषभः** पुनः।
उक्षिण श्रेष्ठेऽथ **वृत्तान्तः** प्रकारे कार्त्स्न्यवार्तयोः॥ २०६॥
भवेत् प्रकरणे चाथ भल्लाते स्याद् **वृषाङ्कवाक्**।
महादेवेऽथ **वेशन्तः** पल्वलाकाशयोरथ॥ २०७॥
**वैकुण्ठः** केशवे शक्रे **शपथस्तु** सुतादिभिः।
शपने कार आक्रोशे **शमथः** पुनरप्सु च॥ २०८॥
शान्तौ चाप्याश्रमपदे **श्वयीचि**स्तु निशाकरे।
श्वयथौ च **शिखण्डस्तु** चूडायां बर्हिबर्हके॥ २०९॥
**श्रीवत्सः** श्रीपतौ तस्य लाञ्छनेऽप्यथ शार्ङ्गिणि।
श्रीपिष्टाख्ये च निर्यासे **श्रीवासो** वसतौ श्रियः॥ २१०॥
**श्रीगर्भस्तु** श्रियो गर्भे खड्गे **श्रीह्रदवाक्** पुनः।
ह्रदे श्रियः प्रपायां च **श्रीकण्ठस्तु** महेश्वरे॥ २११॥
द्वितीयमर्थमाचष्टे **रभसः** कुरुजाङ्गले।
इत्येवमथ **शुद्धान्तो** गुह्ये कक्ष्यान्तरे तथा॥ २१२॥
अन्तःपुरे च जानीयादथ विद्याद् विचक्षणः।
**सम्भवः** कारणोत्पत्त्योः मङ्गने सङ्गमेऽपि च॥ २१३॥
मात्यर्थे मापयत्यर्थे तौ चार्थौ शाङ्करीरितौ।
अकर्मको मातिधातुः प्रस्थादीनां घटादिषु॥ २१४॥
प्रवर्ततेऽन्तर्भावेऽसौ सम्भृत इति सूत्रग.।
सकर्मको मापयतिः स्थाल्याद्याधारवस्तुना॥ २१५॥

१. 'क' ग. पाठः. २. 'न्ते' क. पाठः. ३. 'ची तु' ग. घ. ङ. पाठः.

ग्रहणेऽन्तर्भावनायामाढकादेः प्रवर्तते ।
स चायं ‡सम्भवत्यादिसूत्रे सूत्रकृतोदितः ॥ २१६ ॥

तत्र ह्याकृष्यते कर्म *तद्धरत्यादिसूत्रतः ।
'असम्भवो हेमम(या?य)जन्तो' 'रेषामसम्भवे' ॥ २१७ ॥

इत्यादिषु प्रयोगेषु भूयिष्ठेषु कृतात्मभिः ।
अर्थः सम्भवशब्दस्य चिन्तनीयो विचक्षणैः ॥ २१८ ॥

**संरम्भः** पुनराटोपे क्रोधे **सम्भेद**वाक् पुनः ।
भेदे च मिश्रणे चाथ **सम्भोगो** रतभोगयोः ॥ २१९ ॥

कश्चित् करिकरे ब्रूते वयं तु ब्रूमहे ध्रुवम् ।
गजस्य करमङ्गुल्या विभज्योर्ध्वं हि सप्तधा ॥ २२० ॥

अङ्गुल्याः परतो भागे तृतीये **सम्भ्रमः** पुनः ।
अत्यादरे च संवेगे व्यग्रतायां च साध्वसे ॥ २२१ ॥

**सङ्ग्रह**स्तु महोद्रङ्गे† स्वीकारे च समुच्छ्रये ।
स्त्रीसङ्ग्रहेऽपि संक्षेपे **सङ्ग्राह**स्तूदितः परैः ॥ २२२ ॥

प्रदेशे फलकादीनां ग्रहणार्थे परैः पुनः ।
मुष्टिमात्रेऽथ **सन्तानः** कल्पवृक्षान्तरे कुले ॥ २२३ ॥

परम्परायां चापत्ये **सञ्चार**स्त्वपि सङ्गतौ ।
अपि सङ्क्रमणे चारभेदे सोऽपीदृशः स्मृतः ॥ २२४ ॥

संस्थाचराख्यचाराणां गत्वा गत्वा परं प्रति ।
जिज्ञासते यः **संवालः** पुनश्चन्द्रस्य दीधितौ ॥ २२५ ॥

विभज्य गजलाङ्गूलं चतुर्धारभ्य मूलतः ।
द्वितीयभागे **संवासः** पुनः स्याद् वसने सह ॥ २२६ ॥

राजधान्यां च **संयावः** पुनः सम्मिश्रणे तथा ।
भक्ष्यभेदे च तस्यापि तज्ज्ञैर्लक्षणमीरितम् ॥ २२७ ॥

‡ 'सम्भवत्यवहरति पचति' (५. १. ५२)। * तद्धरति वहत्यावहति भाराद्वंशादिभ्यः (५. १. ५०)। † 'सङ्ग्रहो बृहदुद्रङ्गे' इति मेदिनी ।'सङ्ग्रहो बृहदुद्धारे' इति तु हैमः ।

शमिता¶ त्वम्लदुग्धार्द्रा पक्वा खण्डे घृतोत्तरे ।
संयावोऽयं युतश्चूर्णैः खण्डैलामरिचार्द्रकैः ॥ २२८ ॥

इत्येवमथ **सङ्घातः** समूहे हननेऽस्थनि ।
काव्यजातिविशेषे च तथैव नरकान्तरे ॥ २२९ ॥

**संस्त्यायस्तु** गृहे चैव सन्निवेशसमूहयोः ।
रभसो विस्तृतौ चाथ **सं(स्ता?स्त)रः** सुस्तरेऽध्वरे ॥ २३० ॥

**स्वस्तरस्तु** स्तृतौ स्वस्य विक्षिप्ततृणसञ्चये ।
**संस्कार** उत्कर्षाधाने सतः सङ्कल्प एव च ॥ २३१ ॥

**स्यमीकस्त्वपि** वल्मीके नृपगोत्रे च कुत्रचित् ।
वृक्षेऽप्यथ **समीकः** स्यादर्णवे मिथुनेऽपि च ॥ २३२ ॥

**सम्मर्दो** मर्दने युद्धेऽप्यथ **सन्दंश** इत्ययम् ।
लोहकारोपकरणभेदे सन्दंशनेऽपि च ॥ २३३ ॥

एकाहक्रतुभेदे चाप्यभिचारात्मके द्विषाम् ।
**सन्नयः** समवाये च पृष्ठस्थायिबलेऽपि च ॥ २३४ ॥

**संवर्तस्त्वृषिभेदे** स्याद् वत्सरे च जगत्क्षये ।
संवर्तनायां संवृत्तौ **सङ्घर्षः** स्पर्धने तथा ॥ २३५ ॥

सङ्घर्षणे **संपुटस्तु** समुद्गे मन्त्रवादिनाम् ।
मन्त्राक्षरप्रग्रथनप्रभेदे चाजयः पुनः ॥ २३६ ॥

केलिकायां ‡शवरुकेऽप्यथ **संमर्श** इत्ययम् ।
तर्के संमर्शने चाथ **सन्देहः** संशये तथा ॥ २३७ ॥

आत्मसंज्ञे मध्यकाये **सहोरस्तु** महीधरे ।
विष्णौ चाप्यथ **संरोधः** क्षये संरोधनेऽपि च ॥ २३८ ॥

---

'श्रु' ख. पाठः. २. 'त' ख. ग. पाठः.

---

¶ शमिता गोधूमचूर्णम् । ‡ 'कुरवके' इति स्यात् ।

**समिधस्तु** समूहेऽग्नौ युद्धगोधूमपिष्टयोः ।
स्वापे तु **संलयश्चै**कीभावे च **स्वधितिः** पुनः ॥ २३९ ॥
वज्रे कुठारे **स्थपतिः** पुनः स्यात् सौविदल्लके ।
तक्षण्यधिपतौ चापि बृहस्पतिसवेष्टिनि ॥ २४० ॥
धनपे शिल्पिभेदे चेन्यजयः **सन्निधिः** पुनः ।
सन्निधाने चेन्द्रियाणां गोचरे **सहुरिः** पुनः ॥ २४१ ॥
अन्धकारे च युद्धे च **सप्तर्षि**स्त्वपि दीधितौ ।
सप्तर्षयस्तु स्याच्चित्रशिखण्डिष्वथ कीर्त्यते ॥ २४२ ॥
**स्वाध्याय**स्तु भवेद् वेदे वेदस्य च जपे तथा ।
**स्थासक**स्त्वपि चर्चिक्ये बुद्बुदे हस्तिनामपि ॥ २४३ ॥
ज्ञेयो नक्षत्रमालाख्यभूषणे **स्नातकः** पुनः ।
गृहस्थे स्यात् कृतसमावर्तनेऽप्यथ **सानसिः** ॥ २४४ ॥
ऋणे नखे हिरण्येऽथ **स्त्रीवासो** वामलूरके ।
स्त्रीणां वासे **सुस्तर**स्तु भवेच्छयनमानयोः ॥ २४५ ॥
**सौप्तिक**स्तु प्रपाताख्यशत्रुनिग्रहकर्मणि ।
तद्वर्णनपरे चापि भवेद् भारतपर्वणि ॥ २४६ ॥
**हर्यश्व**स्तु भवेत् पूर्वराजभेदे पुरन्दरे ।
**हरिद्रु**स्तु कलाप्यन्तेवासिनि प्रथमे स्मृतः ॥ २४७ ॥
तथा दारुहरिद्रायां वृक्षमात्रे तु कश्चन ।
**हिमारि**स्तु रवौ वह्नौ **हृच्छ्रय**स्त्वपि मन्मथे ॥ २४८ ॥
कुक्ष्यग्नौ **हेरुक**स्तु स्यान्महाकालाह्वये गणे ।
बुद्धभेदे च रभस इत्यध्यायः समाप्तवान् ॥ २४९ ॥

इति त्र्यक्षरकाण्डे पुंलिङ्गाध्यायः ।

## अथ त्र्यक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

**अयनं** निलये मार्गे सूर्योदग्दक्षिणागतौ ।
स्यात् सांवत्सरिकाद्येषु सत्राख्यक्रतुकर्मसु ॥ १ ॥

एषां प्रयोगभेदे च गतिमात्रे च दृश्यते ।
**अम्बरं** वाससि व्योम्नि सुगन्धिद्रव्यकान्तरे ॥ २ ॥

**अंशुकं** वस्त्रमात्रे च सूक्ष्मवस्त्रोत्तरीययोः ।
**अलीकं** त्वनृते च स्यादप्रियेऽथो **अनूक**वाक् ॥ ३ ॥

शीलेऽन्वये च प्राण्यङ्गभेदे कण्ठसमीपगे ।
**अवनं** रक्षणे तृप्तौ याचनादिष्वपि स्मरेत् ॥ ४ ॥

**अञ्चनं** त्वर्चने गत्यामङ्कनं त्वङ्कने भवेत् ।
अर्थे सोऽप्यतियोगः स्याच्छस्त्राणां च निवारणे ॥ ५ ॥

वेत्रादिरचिते खेटभेदेऽथा**शन**मोदने ।
भुक्तौ च व्यापने चाथो **अकुलं** जलपोतयोः ॥ ६ ॥

**अपत्यं** तु भवेत् तोके सामगानां च विश्रुते ।
आरण्यके सामभेदे 'उच्चतेजे'त्यृचि स्थिते ॥ ७ ॥

**आस्पदं** तु भवेत् कृत्ये स्थाने **चालान**वाक् पुनः ।
आदाने स्तम्भमात्रे च बन्धनार्थे च हस्तिनाम् ॥ ८ ॥

स्तम्भ **आदान**वाक् तु स्याद् ग्रहणे चोत्तरायणे ।
**आधानं** तु निधाने स्यात् त्रेताग्न्याधान एव च ॥ ९

**आपानं** तु सुरापानगोष्ठ्यामाकृष्य पानके ।
**आयानं** त्वश्वभूषायामागतौ वचने पुनः ॥ १० ॥

**आख्यानं** स्यात् कथायां च स्यादा**राग्रं** त्विषोर्भवेत् ।
अग्रे तथाग्र आराया **इन्द्रियं** धनरेतसोः ॥ ११ ॥

---

'बि' क. पाठः.

हृषीक इन्धनं तु स्याद् दीपनाग्न्यर्थकाष्ठयोः ।
ईक्षणं तु क्रियायां स्यात् पश्यतेर्नयनेऽपि च ॥ १२ ॥
उदकं तु भवेत् तोये ह्रीबेरे द्विशतस्वरे ।
छन्दोभेदे भगवता निदानोक्तं प्रतीयताम् ॥ १३ ॥
उत्थानमुद्गमे वास्तौ तन्त्रेहापौरुषेषु च ।
औदरस्य मलस्यापि स्रुतौ स्याद् रभसः पुनः ॥ १४ ॥
हर्षमुस्तकयोराजावङ्गणे चोद्यमेऽपि च ।
उद्यानं सङ्कहोद्गत्योर्वनभेदे प्रयोजने ॥ १५ ॥
तथा निःसरणेऽथ स्यादूवध्यं हि गुदानिले ।
वृक्षायुर्वेदसिद्धे च भूरुहादेर्गदान्तरे ॥ १६ ॥
ऋजीषं[1] पिष्टपचनसाधनान्तर एव च ।
वैद्युताग्नौ च नैरुक्ता औशीरं पुनरासने ॥ १७ ॥
चामरे शयने दण्डे कटीरं त्वपि कन्दरे ।
जघने च जले चाथ कटित्रं यत्र तद्विदः ॥ १८ ॥
द्यूते रमन्ते सुस्यूते तस्मिंश्चर्मणि किञ्च तत् ।
रशनायां च रभसः कटिवेष्टनचर्मणि ॥ १९ ॥
अथ श्रोण्यां च भार्यायां कडत्रं स्यात् कलत्रवत् ।
कलत्रं तु नृपादीनां दुर्गस्थाने च कीर्तितम् ॥ २० ॥
क्रन्दनं पुनराह्वाने रोदनेऽप्यथ कज्जलम् ।
कंसोत्पलाख्ये[2] वनज उत्पलेऽप्यञ्जनान्तरे ॥ २१ ॥
धूमयोनिन्यथ ज्ञेयं कश्मलं मोहविष्ठयोः ।
अथ स्यात् कत्तृणं कुथ्यां तृणभेदेऽथ काननम् ॥ २२ ॥
ब्रह्मास्ये च वने चाथ कीलालं रुधिरे जले ।
अन्ने पक्वान्ननिःष्यन्देऽप्यमृते रभसोऽपठीत् ॥ २३ ॥

१. 'बीसं' क. ख. ङ. पाठः. २. 'ह्य' ग. पाठः.

स्यात् **कुत्राणं** तु कुण्डे च शिक्ये चाथ **कूपीटवाक्** ।
उदरे सलिले चाथ ध्वजे चोपनिमन्त्रणे ॥ २४ ॥

**केतनं** स्यादकार्ये च चापे कृत्येऽथ **कैतवम्** ।
द्यूते च कपटे चाथ **कैवल्यं** मोक्ष एव च ॥ २५ ॥

केवलत्वेऽथ **कोदण्डं** वेणुचापे धनुष्यपि ।
चापे चतुररत्नौ च **कौतुकं** तु कुतूहले ॥ २६ ॥

मङ्गले विषयाभोगे कामे ख्याते तथैव च ।
हस्तसूत्रेऽथ **कौपीनं** गुह्ये चाकार्य एव च ॥ २७ ॥

केचित् कक्षापुटेऽप्याहुश्चीरे त्वन्येऽध्यगीषत ।
स्यात् **कौलीनं** लोकवादे युद्धे पश्वहिपक्षिणाम् ॥ २८ ॥

अपवादे कुलीनत्वे **ग्रहणं** त्विन्दुसूर्ययोः ।
उपरागे चोपलब्धौ वन्द्यादानादरेषु च ॥ २९ ॥

प्रत्यये **गैरिकं** तु स्यात् पीतधातौ च हेम्नि च ।
**गोपुरं** तु पुरद्वारे द्वारमात्रे तथैव च ॥ ३० ॥

मुस्ताभेदे च कैवर्तिमुस्तकाख्येऽथ **गोरुतम्** ।
गवां रुते च गव्यूतौ **गोशीर्षं** त्वपि चन्दने ॥ ३१ ॥

ताम्रसारे गवां मूर्ध्नि **चमकं** तु प्रकीर्तितम् ।
ह्रीबेरेऽपि यजुर्मन्त्राध्यायभेदेऽथ **चामरम्** ॥ ३२ ॥

प्रकीर्णके च ह्रीबेरे **छदनं** तु तरुच्छदे ।
पक्षिपक्षेऽथ **जघनं** स्त्रीकट्याः पूर्वभागके ॥ ३३ ॥

कटिमात्रे परे पश्चाद्भागे कस्यापि वस्तुनः ।
**जयनं** तु रथादीनां सन्नाहे विजयेऽपि च ॥ ३४ ॥

अश्वचर्मणि तु प्राह रभसोऽथ **जनित्ववाक्** ।
कुले द्यावापृथिव्योश्च मातापित्रोश्च कीर्तिता ॥ ३५ ॥

---

१. 'कू' ख. ग. ङ. पाठः।

**तालिमं** कुट्टिमे तल्पे द्वारयन्त्रे तु **तालकम्** ।
कर्णभूषणभेदे च तालपत्राह्वयेऽप्यथ ॥ ३६ ॥

**तालितं** *तूलितपटे गुणवादित्रभाण्डयोः ।
वाद्यभेदेऽजयः प्राह व्यञ्जने त्वपि **तेमनम्** ॥ ३७ ॥

क्लेदेऽथ **तोदनं** तोत्रे व्यथने **द्रविणं** पुनः ।
धने बले **दुकूलं** तु क्षौमेऽन्ये सूक्ष्मवाससि ॥ ३८ ॥

शुक्लवस्त्रे परेऽथ स्याद् **दौहृदं** दोहलाह्वये ।
इच्छाविशेषे गर्भिण्या द्विहृत्त्वे रभसः पुनः ॥ ३९ ॥

**दौर्वीणं** †म्लिष्टपर्णे च दूर्वायाश्च रसेऽभ्यधात् ।
**नाभीलं** नाभिगन्धे स्याद् वङ्क्षणे च वरस्त्रियाः ॥ ४० ॥

अजयो नाभिगर्ताण्डे रभसस्त्वाह शब्दवित् ।
गन्धर्वकृच्छ्रयोः स्यात्तु **निमित्तं** हेतुलक्ष्ययोः ॥ ४१ ॥

शुभादेः सूचके चाथ **नियुतं** लक्षसंज्ञके ।
सङ्ख्याभेदे परे त्वाहुर्लक्षाणां दशके तथा ॥ ४२ ॥

उशीरेऽथ **निदानं** स्यात् कारणेऽप्यादिकारणे ।
सूत्रभेदे च भगवत्पतञ्जलिमुनीरिते ॥ ४३ ॥

खण्डनेऽप्यवदाने च **निर्याणं** त्वपि हस्तिनः ।
नेत्रान्ते निर्गमे मोक्षे मरणे च प्रकीर्तितम् ॥ ४४ ॥

**प्रमाणं** हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ।
सम्यग्वक्तरि नित्ये स्यादेकतावोधयोगपि ॥ ४५ ॥

छन्दोवृत्तविशेषेऽथ **प्रयाणं** मरणे गतौ ।
नेत्रपूर्वप्रदेशे च हस्तिनामिति यादवः ॥ ४६ ॥

---

१. 'क' क. पाठः.

---

* रञ्जितपटे । † 'दौर्वीणं मृष्टपर्णे स्याद्' इति तु मेदिनी ।

**आदौ** प्रधाने **प्रमुखं** **प्रज्ञानं** बुद्धिचिह्नयोः।
**प्रसूनं** पुष्पफलयोः **प्रपदं** तु पदाग्रके ॥ ४७ ॥
निगदाख्ययजुर्वेदविशेषे **प्लवनं** पुनः।
उन्मज्जने प्लुतीभावे क्रमणे च प्रकीर्तितम् ॥ ४८ ॥
**पञ्चत्वं** पञ्चतायां च मरणेऽथ **पचत्रवाक्**।
स्थाल्यां स्याद् रन्धनार्थायां तथैवापूपकारके ॥ ४९ ॥
**पतत्रं** गरुति व्योम्नि **पत्राङ्गं** रक्तचन्दने।
भूर्जे च **पतनं** तु स्यात् पा(त्रे[1]ते) तरुपलाशके ॥ ५० ॥
द्विजातिकर्मभ्यो हानौ **पत्तनं** तु पुरे विदुः।
पुटभेदनसंज्ञे तु क्षुद्रग्रामे परे विदुः ॥ ५१ ॥
क्रयविक्रयभूमौ तु केचिदन्ये तु सूरयः।
नौभिरेव तु यद् गम्यं पत्तनं तत् प्रचक्षते ॥ ५२ ॥
**पट्टनं** तु पुरेऽन्ये तु पुटभेदनसंज्ञके।
क्षुद्रग्रामे परे त्वाहुः सर्वशब्दार्थकोविदाः ॥ ५३ ॥
पट्टनं शकटैर्गम्यं घोटकैर्नौभिरेव च।
**पद्मकं** पद्मकाष्ठे स्याद्धस्तिनां बिन्दुजालके ॥ ५४ ॥
**परीरं** तु हले ज्ञेयं तथा हलमुखेऽपि च।
**पवीरं** तु हले केचिद् रङ्गस्थाने परे विदुः ॥ ५५ ॥
**प्रान्तरं** तु वने ज्ञेयं दूरशून्ये च वर्त्मनि।
रसातले तु **पातालं** बडवानल एव च ॥ ५६ ॥
**पीयूषं** त्वमृते दुग्धे नवसूतगवीभवे।
**पुरीषं** मृत्तिकाचूर्णे विष्ठायां सलिलेऽपि च ॥ ५७ ॥
मालाबन्धविशेषे तु भक्षभेदे च **पूरिमम्**[2]।
**बडिशं** त्वध्वमानस्य विशेषे स्याद् विरज्जुके ॥ ५८ ॥

---

१. 'प' ख. ङ., 'परे के' ग. पाठः. २. 'त' ग. पाठः.

मत्स्यवेधनयन्त्रे च **ब्राह्मण्यं** तु द्विजन्मनाम् ।
समूहे ब्राह्मणानां च जानीयाद् भावकर्मणोः ॥ ५९ ॥

अथ **बाह्लव**[1]*मित्येतद्धिङ्गुकुङ्कुमयोः स्मृतम् ।
**भस्मकं** तु विडङ्गे स्याद् व्याधिभेदेऽथ **भण्डनम्** ॥ ६० ॥

परिहासे च दुग्धे च कवचे च प्रकीर्तितम् ।
**भावित्रं** तु भवेद् भद्रे त्रैलोक्ये चाथ **भूतिकम्** ॥ ६१ ॥

भूनिम्बे भूस्तृणे चैव यवान्यामपि कत्तृणे ।
**भोजनं** तु भवेद् भुक्तौ **मन्दनं** स्तुतिमोदयोः ॥ ६२ ॥

गतौ मदे च स्वप्ने च **मणीचं** त्वपि मौक्तिके ।
अग्रहस्ते च पुष्पेऽथ **माहिनं**[2] राज्यशय्ययोः ॥ ६३ ॥

**मैथुनं** रतिसङ्गत्योर्यागोपकरणे पुनः ।
यजत्रसंज्ञे **यजनं** यागे चाप्यथ **यावसम्** ॥ ६४ ॥

मित्रे भक्ततृणे चाथ तारुण्ये **यौवनं** तथा ।
युवतीनां समूहे च **वचनं** तूक्तिवाक्ययोः ॥ ६५ ॥

आच्छादनक्रियायां तु **वसनं** वस्त्र एव च ।
स्यान्निवासक्रियायां च **वहनं** त्वपि धारणे ॥ ६६ ॥

भारस्य स्यन्दतेश्चार्थे रथादीनां च यापने ।
रथभेदे च विज्ञेयं चतुरश्रे सकूबरे ॥ ६७ ॥

**वहित्रं** तु विजानीयाद् वहनाख्यरथान्तरे ।
यानपात्रे च पोताख्ये **वधत्रं** त्वायुधे स्मृतम् ॥ ६८ ॥

शूरे धवयिमर्माख्ये(?) कन्दुके च प्रकीर्तितम् ।
तन्तुवायस्य दण्डे च शाकटायन उक्तवान् ॥ ६९ ॥

१. 'ल्ह' ग. पाठः. २. 'ही' ङ. पाठः.

* 'बाह्लीकं रामठेऽपि च' इत्यमरः । कोशान्तरे तु कुङ्कुमार्थको बाल्हकशब्दो दृश्यते ।

**व्यसनं** सक्तिविपदोर्दैवानिष्टफलेऽहसि ।
पैशुन्यादौ च कोपार्थे मृगयादौ च कामजे ॥ ७० ॥

निक्षेपे निष्फलोद्योगेऽप्यशुभे च प्रकीर्त्तितम् ।
**वार्धकं** वृद्धसङ्घाते वृद्धत्वे वृद्धकर्मणि ॥ ७१ ॥

उत्तरस्त्वद्भुतश्लोको रभसेन समीरितः ।
*काकचिण्डीभवे बीजे वारिक्रिमिजनीरयोः ॥ ७२ ॥

दक्षिणावर्तशङ्खे च †**वार्दूरं** स्यादितीदृशम् ।
**विधानं** हस्तिकवले प्रेरणेऽभ्यर्चने धने ॥ ७३ ॥

वेदनायामुपाये च प्रकारे वैरकर्मणि ।
**विष्टपं** त्वपि देवानां विमाने भुवने तथा ॥ ७४ ॥

**व्युत्थानं** प्रतिकूलत्वे स्वातन्त्र्यकरणेऽपि च ।
सिंहस्तु प्रतिरोधे च विरोधाचरणेऽपि च ॥ ७५ ॥

**वेष्टनं** मुकुटोष्णीषवाटेषु श्रोत्रशष्कुलौ ।
तथा परिवृतौ चाथ **वैकक्ष्य**मुरसि स्थिते ॥ ७६ ॥

तिर्यक्क्षिप्ते पुष्पमाल्ये तथा प्रावरणेऽपि च ।
**शमलं** तु भवेत् पापे विष्ठायां च प्रकीर्तितम् ॥ ७७ ॥

**शासनं** निग्रहे लेख्ये वेदवाक्येषु कर्मणि ।
वाङ्नियोगे प्रहरणे शास्त्रे ग्रामे च निष्करे ॥ ७८ ॥

आज्ञायामुपदेशे च **शालूकं** तूत्पलादिनः ।
कन्दे स्यात् पङ्कगन्धे च जले **शालारवाक्** पुनः ॥ ७९ ॥

सोपाने स्याद्धस्तिनखे पक्षिणामपि पञ्जरे ।
अथो **शिताम**( ? ) दोष्णि स्याद् योनौ यकृति मेदसि ॥ ८० ॥

---

* गुञ्जापर्यायोऽयं 'काकचिञ्ची' इति पठ्यते कोशान्तरे । † 'वार्दरं कृष्णलाबीजदक्षिणावर्तशङ्खयोः' इति तु मेदिनी ।

**श्रीपुष्पं** तु श्रियः पुष्पे सितपद्मेऽथ भोजने ।
आस्वादने च **स्वदनं** शोभनेऽप्यदने विदुः ॥ ८१ ॥

**सदनं** तु गृहे तोये सीदत्यर्थे च कीर्तितम् ।
**स्तननं** स्तनिते ध्वाने **स्तरणं** छादने वधे ॥ ८२ ॥

**संस्थानं** तु समासौ[1] च सन्निवेशे चतुष्पथे ।
सम्यक्स्थितौ च मरणे **संव्यानं** तूत्तरीयके ॥ ८३ ॥

तथा संवरणे चापि **सन्दानं** त्वपि बन्धने ।
पशुबन्धनरज्जोश्च विशेषे **सलिलं** पुनः ॥ ८४ ॥

जले छन्दोविशेषे च प्रकृत्याख्येऽक्षराणि वै ।
यस्य चत्वार्यशीतिश्च तत्र स्याच्च बहून्यपि ॥ ८५ ॥

**स्वरसं** तु दिने गेहे **स्थानकं** त्वालवालके ।
लङ्घनं कर्तुकामानां सिंहादीनां क्रमाह्वये ॥ ८६ ॥

अवस्थानविशेषे च **स्थानीयं** तु पुरे तथा ।
स्थातव्येऽपि महाग्रामे **सामर्थ्यं** तु बले भवेत् ॥ ८७ ॥

शक्तिसंज्ञे तथैकार्थ्ये सम्बन्धार्थत्व एव च ।
कश्चित्तु योग्यतायां च कथयामास नामवित् ॥ ८८ ॥

**साधूतं** *बर्हिसङ्घाते पण्यवीथ्यातपत्रके ।
**सुलोहं** त्वारकूटे स्याच्छस्तलोहेऽथ **सेचनम्** ॥ ८९ ॥

नावः स्यात् सेकपात्रे च सिक्तौ चाप्यथ **सौष्ठवम्** ।
अवष्टम्भे प्रशस्तत्वे **हयनं** तु गतावपि ॥ ९० ॥

कर्णीरथाख्ये च तथा रथभेदेऽथ काञ्चने ।
**हिरण्यं** मानभेदे च धने चापि कपर्दके ॥ ९१ ॥

१. 'धौ' ग. पाठः

* कोशान्तरे 'साधूतम्' इति पदमुक्तार्थकं दृश्यते

अक्षये चाप्यकुप्ये च रेतस्यप्यथ बोधत ।
वराटहेमरेतस्सु **हिरणं** रभसोऽपठीत् ॥ ९२ ॥

**हृदयं** तूरसि स्वान्ते वृके च रभसोऽपठीत् ॥ ९२½ ॥

इति त्र्यक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

## अथ त्र्यक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

अथाभिधेयलिङ्गानां त्र्यक्षराणां प्रणीयते ।
अध्यायोऽ**ध्यक्ष**शब्दोऽयं प्रत्यक्षेऽधिकृतेऽप्यथ ॥ १ ॥

**अभ्यग्रो**ऽभिमुखे नव्ये समीपेऽप्य**धमः** पुनः ।
न्यूनेऽपि गर्हितेऽ**धीरः** पुनर्भीरौ च चञ्चले ॥ २ ॥

**अवरस्त्व**प्रशस्ते स्यादर्वाच्यप्य**खिलं** पुनः ।
कृत्स्ने गर्ह्येऽ**नुगस्तु** स्यादनुगामिनि सेवके ॥ ३ ॥

**अगाढो**ऽनवगाढे चाप्यभृशे च प्रकीर्तितः ।
अथानक्षरवाक्ये चाप्यवक्तव्येऽप्य**वाच्य**वाक् ॥ ४ ॥

अगर्ह्ये चाथ रभसः प्रमादीदमवोचत ।
**अवद्य**मपशब्दे च गर्ह्ये चेत्या**प्लुतः** पुनः ॥ ५ ॥

स्नाते चापि समावृत्तेऽथा**त्मीयो** निजमित्रयोः ।
**आविद्धं** कुटिले क्षिप्ते रभसस्तु पराहते ॥ ६ ॥

**आहार्य**माहर्तव्ये चाभिनये भूषणादिभिः ।
कृते स्या**दाहतं** तु स्यात् ताडिते गुणिते हते ॥ ७ ॥

मृषार्थवाक्येऽप्याहाथो **आदृतः** सादरेऽर्चिते ।
**आपन्नस्तु** विपन्ने च प्राप्ते च कथितो बुधैः ॥ ८ ॥

आयस्तः कुपिते क्षिप्ते क्लेशिते तेजितेऽपि च ।
अनुज्ज्वले त्वाविलं[1] स्यात् कलुषे चेतरः पुनः ॥ ९ ॥
अन्यस्मिन् पामरे चाथ स्यादुत्कृष्टः प्रकृष्टके ।
ऊर्ध्वस्थानं प्रापिते चाप्युत्क्षिप्ते तूद्धृतं विदुः ॥ १० ॥
मुक्तोज्झितेऽप्यथोत्तानं निम्नस्य प्रतियोगिनि ।
ऊर्ध्वीकृतपुरोभागेऽप्युच्छ्रितं तून्नतेऽपि च ॥ ११ ॥
प्रवृद्धोत्पन्नयोरूर्ध्वस्थापितेऽप्युदितं पुनः ।
उद्गते कथितेऽथ स्यादुदूढं विपुलेऽपि च ॥ १२ ॥
ऊढे च पीवरे चाथो उपोढो निकटोढयोः ।
उपितं न्युषिते दग्ध इति सर्वे निघण्टवः ॥ १३ ॥
उपित न्युषिते युक्तं दग्धे त्वेतदसाम्प्रतम् ।
*उषित्वा(?)दोषतेरेतच्छाकटायन उक्तवान् ॥ १४ ॥
प्रत्युष्टः रक्ष इति च प्रयोगः शाश्वतस्तथा ।
उत्थितं प्रोद्यते जाते वृद्धिमत्यपि दृश्यते ॥ १५ ॥
उदारो महति ख्याते दानशौण्डविदग्धयोः ।
उत्तालं पुनरुत्तान उन्नतोच्चण्डयोरपि ॥ १६ ॥
उत्कटस्तूद्भटे मत्ते तीव्रेऽपि रभसोऽपठीत् ।
उज्जटः शून्यदेशे स्यादूर्ध्वीभूतजटादिषु ॥ १७ ॥
उज्झकस्त्वपि निःस्नेहे स्यादुज्झितरि च स्मृतः ।
उन्निद्रस्तु भवेत् फुल्ले निद्रया हीन एव च ॥ १८ ॥
उद्बुद्धस्तु भवेत् फुल्ले प्रवृद्धे च प्रकीर्तितः ।
एकाग्रमग्रं यस्यैकं तत्र तत्पर एव च ॥ १९ ॥

1. 'लः' इ. पाठः.

* 'उष्टमित्योषतेरेतद' इति पाठः स्यात् । ‡ 'आदितश्च (७. २. १६) इति चकारस्यानुक्तसमुच्चयार्थत्वादिट्प्रतिषेध' इति भट्टभास्करः । आगमशासनानित्यत्वाद्विड्भावः ।

अनाकुलेऽथ **कलितं** सङ्ख्याते ज्ञातबद्धयोः[1] ।
**आप्ते** च **विहिते** चाह रभसः **कमरः** पुनः ॥ २० ॥
मूर्खे च कामुके चाथ **कनीयांस्तु** जघन्यजे ।
युवतरे चाल्पतरे **क्षुल्लकस्त्वल्पनीचयोः** ॥ २१ ॥
दरिद्रे चाथ **कुचरः** कुवादे भूचरेऽपि च ।
**गान्धिको** लेखके चापि सुगन्धव्यवहारिणि ॥ २२ ॥
**जठरः** कठिने जीर्णे कुक्षौ च **ज्वलितं** पुनः ।
दीप्ते च ज्वलिते चाथ **डिङ्गरौ** क्षेप्यगङ्गरौ ॥ २३ ॥
**तलिनं** विरलेऽल्पेऽथ **तीरितं** पारिते तथा ।
तीरं च प्रापिते तीरीकृते च व्यवहारगैः ॥ २४ ॥
मदेवासत्कृतं सभ्यैर्यत् तत्राप्यथ **दुर्विधः** ।
नीचे दरिद्रे **दोषज्ञः** पुनर्भिषजि पण्डिते ॥ २५ ॥
दोषस्य बोधके चाथ **नदीष्णः** कुशले मतः ।
तरणे यः पटुस्तस्मिन् नदीष्ण इति सज्जनः ॥ २६ ॥
**नश्वरं** नाशशीलादौ दैन्यगर्भवचस्यपि ।
**निवातस्त्वाश्रये** शस्त्राभेद्यवर्मण्यमारुते ॥ २७ ॥
**निकृतो** विप्रलब्धेऽपि हते विप्रकृतेऽपि च ।
**निसृष्टं** जनिते न्यस्ते **निरस्तस्तु** निराकृते ॥ २८ ॥
निष्ठ्यूते प्रास्तबाणे च वचने च द्रुतोदिते ।
**निहतस्तु** हते नीचस्वरयुक्तेऽक्षरेऽपि च ॥ २९ ॥
**निर्ग्रन्थः** स्यात् क्षपणके दरिद्रे ग्रन्थवर्जिते ।
**निर्दटः** परदोषोक्तिपरे निष्ठुरभाषिणि ॥ ३० ॥
**प्रहृष्टस्तु** सरोमाञ्चे प्र(क ? ह)र्षवति विस्मिते ।
तथा प्रतिहते चाथ **प्रमीतः** प्रोक्षिते मृते ॥ ३१ ॥

१. 'नबन्धयोः' क. ख. ङ. पाठः.

**प्रतीतो** हर्षिते ख्याते ज्ञाते प्रत्ययिते बुधे ।
सादरे प्रतियातेऽथ **प्रणीतः** स्यात् प्रवेशिते ॥ ३२ ॥
उपसम्पन्नौदनादौ निर्मितक्षिप्तयोरपि ।
स्थानात् स्थानान्तरं नीते वह्नौ च विधिना स्मृतः ॥ ३३ ॥
**प्रबुद्धो** विरतस्वापे सावधानेऽपि पण्डिते ।
**प्रवृद्धस्त्वे**धिते चापि प्रसृतेऽथ **प्रसिद्ध**वाक् ॥ ३४ ॥
ख्यातभूषितयोः सिद्धे **प्रभिन्न**स्तु विदारिते ।
मत्तहस्तिनि चाथ स्याद् व्युत्पन्नक्षुण्णयोरयम् ॥ ३५ ॥
**प्रहतः प्रयत**स्तु स्यात् संस्कृते पूत एव च ।
**प्रततं** वितते क्षुण्णे **प्रदीप्तं** त्वपि भासिते ॥ ३६ ॥
दग्धेऽप्यथ **प्रगाढः** स्याद् भृशे कृच्छ्रेऽप्यथ स्मृतः ।
**प्रतीक्ष्यः** प्रतिपाल्ये च पूज्ये चाथ **प्रणाय्य**वाक् ॥ ३७ ।
असम्मते च निष्कामे **प्रसव्यं** पुनरुच्यते ।
प्रतिकूलेऽनुकूले च सव्यदक्षिणयोरपि ॥ ३८ ॥
आयत्ते **पतित**स्त्वेष धर्मशास्त्रनिरूपितः ।
द्विजातिकर्मभ्यो हीने प्रस्कन्ने **परुषः** पुनः ॥ ३९ ॥
अस्निग्धे कर्बुरे मिश्रे तथा निष्ठुरभाषिते ।
**प्रयोक्ता** तूत्तमर्णे स्यात् तथैव स्यात् प्रयोजके ॥ ४० ॥
**प्रत्यर्थी** त्ववगन्तव्यः शात्रवप्रतिवादिनोः ।
**पामर**स्तु भवेदज्ञे नीचे च रभसः पुनः ॥ ४१ ॥
खण्डेऽप्याह **प्रार्दितं** तु हतयाचितयोरपि ।
अभियुक्ते **पेशल**स्तु चारौ दक्षे च कीर्तितः ॥ ४२ ॥
**प्रोक्षितं** निहते सिक्ते **बहुलं** त्वपि पुष्कले ।
सान्द्रे च **बालिश**स्तु स्याद् बाले मूर्खेऽथ **बेटकः** ॥ ४३ ॥
सञ्जातयौवने चापि तथा वैकटिकेऽपि च ।
**भङ्गुरो** नश्वरे नम्रे **भावितं** त्वपि वासिते ॥ ४४ ॥

१. 'स्त्रे' ङ. पाठः. २. 'हृ' क. ङ. पाठः.

तथैवोत्पादिते लब्धे **मलिनं** तु मलीमसे ।
कृष्णे च **मत्सरी** तु स्यात् परसम्पदसोढरि ॥ ४५ ॥
कदर्याढ्ये **मूर्छितस्तु** मूढसोच्छ्राययोरपि ।
अजयस्तु **प्रवृद्धे**ऽपि **वदान्यस्त्वपि** दातरि ॥ ४६ ॥
वल्गुवाग्वाग्मिनोश्चापि **वरद**स्तु समर्धके ।
प्रसन्ने **वल्लभ**स्तु स्यादध्यक्षे दयितेऽपि च ॥ ४७ ॥
**वर्णाटो** गायने चित्रकरे स्त्रीकृतजीवने ।
**वक्तव्यः** कुत्सिते नीचेऽप्यधीनकथनीययोः ॥ ४८ ॥
**वठर**स्तु भवेत् स्थूले रभसस्तु शठेऽपि च ।
**वरीयान्** स्यादुरुतरे प्रशस्ततर एव च ॥ ४९ ॥
**व्यायतं** व्यापृते दीर्घे दृढे **विगत**वाक् पुनः ।
वीते च निष्प्रभे चाथ **विसृतं** विगते तते ॥ ५० ॥
**विदितं** संश्रुते ज्ञाते **विधुतं** त्वपि कम्पिते ।
त्यक्ते च **विकृतं** तु स्याद् दूरूपे व्याधितेऽपि च ॥ ५१ ॥
तथा विकारापन्ने च बीभत्सेऽथ **विविक्त**वाक् ।
निर्जने च पृथग्भूते शुद्धे चापि विचारिते ॥ ५२ ॥
असम्बाधेऽथ **विच्छिन्नं** समालब्धे द्विधाकृते ।
**विस्रब्धं** निभृते शस्ये तथा विश्वसितेऽपि च ॥ ५३ ॥
**विवश**स्त्वस्वतन्त्रात्मन्यवश्ये रभसोऽपठीत् ।
अरिष्टदुष्टबुद्धौ च कथयन्ति मनीषिणः ॥ ५४ ॥
विज्ञेयं **विधुरं** सद्भिः कष्टविश्लिष्टयोरपि ।
विकले §प्रत्यवेते च **विलीनं** त्वपि विद्रुते ॥ ५५ ॥
लीनेऽथ **वेल्लितं** वक्रे कम्पिते स्याद् रथे पुनः ।
व्याघ्रचर्मावृते ज्ञेयो **वैयाघ्रो** व्याघ्रयोगिनि ॥ ५६ ॥

§ 'पत्न्यपेते' इति स्यात् । 'विधुरः पत्न्यपेते स्यात् क्लिष्टविश्लिष्टयोरपि' (पृ. २५ श्लो. १७) इति वैजयन्ती ।

**शिरःस्थो** व्यवहारस्थेऽभियोक्तरि शिरःस्थिते ।
**समर्थ**स्तु समानार्थे सम्बन्धार्थे हितेऽपि च ॥ ५७ ॥
न्याय्ये शक्ते **सदस्य**स्तु यज्ञानां विधिदर्शिनि ।
सभ्ये च **संस्थित**स्तु स्यात् समाप्ते च मृतेऽपि च ॥ ५८ ॥
सम्यक्स्थिते **सत्तम**स्तु श्रेष्ठे चाप्यतिशोभने ।
तथा पूज्यतमे चाथ **सङ्कीर्णो** निचितेऽपि च ॥ ५९ ॥
अशुद्धव्याप्तयोश्चापि कुत्रचिद् वर्णसङ्करे ।
**सङ्कुलं** तु भवेद् व्याप्ते परस्परपराहते ॥ ६० ॥
वचने स्यादविस्पष्टवचनेऽन्येऽथ मिश्रिते ।
**संसृष्ट**शब्दं जानीयाच्छुद्धे च वमनादिभिः ॥ ६१ ॥
**समूढः** पूजिते भुग्ने सद्योजातेऽप्युपप्लुते* ।
**संहतं** दृढसन्धौ च सङ्गते **स्थायुकः** पुनः ॥ ६२ ॥
स्याद् ग्रामाधिकृते स्थास्नावथ **साधिष्ठ** इत्ययम् ।
भवेद् भृशतमे चैव तथा साधुतमेऽपि च ॥ ६३ ॥
अथो भृशतरे साधुतरे **साधीय** इत्यदः ।
**स्तिमितं** निश्चले क्लिन्ने तृप्ते तु **सुहितो** भवेत् ॥ ६४ ॥
तथा सुष्ठु हितेऽपि स्यात् सेनारक्षे तु **सैनिकः** ।
स्यात् सेनासमवेते च **हृषित**स्तु मनोहरे ॥ ६५ ॥
सरोमाञ्चे प्रतिहते सहर्षे विस्मितेऽपि च ।
तथा स्तब्धे च रोमादावित्यध्यायः समाप्तवान् ॥ ६६ ॥

इति त्र्यक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

१. 'हर्षित' क. ङ. पाठः

* 'समूढः पुञ्जिते भुग्ने सद्योजातेऽनुपप्लुते' इति तु मेदिनी

## अथ त्र्यक्षरकाण्डे नानालिङ्गाध्यायः ।

**अमृतं** व्योम्नि देवान्ने यज्ञशेषे रसायने ।
अयाचिते जले जग्धौ[1] मोक्षेऽन्ने हेम्नि गोरसे ॥ १ ॥

धारोष्णदुग्धेऽप्यमृतौ क्षीरमात्रे धनञ्जयः ।
एतेष्वर्थेषु जानीयात् क्लीबं वेदे तु पुंस्ययम् ॥ २ ॥

देवे तु द्वे स्त्रियां तु स्यादमृता मद्यभिक्षयोः ।
आमलक्यां हरीतक्यां गुडूच्यां रभसः पुनः ॥ ३ ॥

मागध्यां चाह सूर्यस्य पुनस्तेषु गभस्तिषु ।
ये वृष्टिसर्जने प्रोक्ता येषां सङ्ख्या चतुःशती ॥ ४ ॥

त्रिस्त्वम्र(ती?र्मा)त एकान्तसुन्दरे स्वादुनित्ययोः ।
हये चाथा**क्षरः** पुंसि विरिञ्चे विष्णुखड्गयोः ॥ ५ ॥

क्ली तु वाचि विधौ धर्मे वर्णेऽम्बुतमसोः क्रतौ ।
अक्षराख्ये सामभेदे खे मोक्षे मूलकारणे ॥ ६ ॥

परमाणौ ब्रह्मणि च प्रणवे तु नृशण्डयोः ।
त्रिस्त्वक्षारितरि स्याच्चाविद्यमानक्षरे तथा ॥ ७ ॥

**अनन्तः** पुंसि विष्णौ स्यान्नागराजे हलायुधे ।
क्लीबं तु व्योम्न्यनन्ता तु पौर्णमास्यां मरुद्दिशि ॥ ८ ॥

शारिबाभूमिदूर्वासु विशल्यानाम्नि चौषधौ ।
दुःस्पर्शे च स्त्रियां भेद्यलिङ्गं त्वनन्तास्त्रि(स?व)र्जिते ॥ ९ ॥

**अन्तरं** तु नपि प्रत्यासत्तौ मध्यावकाशयोः ।
तादर्थ्येऽवसरे कालभेदे मन्वन्तराह्वये ॥ १० ॥

विशेषविवरान्तर्धिष्ववसानविनार्थयोः ।
अवधौ च त्रिषु पुनस्तुल्येऽल्पपरिधानयोः ॥ ११ ॥

---

१. 'ग्धे' ड. पाठः.

बाह्ये स्वीये प्रतिभुवि नृनपोस्त्वन्तरात्मनि ।
**अर्जुन**स्तु पुमान् कार्तवीर्ये मध्यमपाण्डवे ॥ १२ ॥
मातुरेकसुते शौक्ल्ये यमे दृष्टिरुजान्तरे ।
ककुभाख्यद्रुमे क्ली तु तृणे रूपे च हेम्नि च ॥ १३ ॥
स्त्रियां तु सुरभौ रात्रावुषस्यप्यापगान्तरे ।
बाहुदाख्येऽर्जुनी च स्यात त्रि तु स्यादच्छशुक्लयोः ॥ १४ ॥
रभसस्तु द्वयोराह केकिनि क्ली तु दृग्रुजि ।
**अरिष्ट**स्तु पुमान् निम्बे फेनिलाख्ये महीरुहे ॥ १५ ॥
लशुने दैत्यभेदे च कृष्णेन विनिपातिते ।
स्याद् दंशबन्धने चाथ क्लीबं मरणलाञ्छने ॥ १६ ॥
अप्यारण्यकयोः साम्नोः 'पवित्रं त'ऋगुत्थयोः ।
अशुभे च शुभे वर्णविकारे सज्जनः पुनः ॥ १७ ॥
अञ्जनाभे वर्ण इति निकार इति चापठीत् ।
सुरायां सूतिकागेहे स्त्रियां त्वेकोऽपठीद् भिषक् ॥ १८ ॥
कटुकानागबलयोस्तक्रे तु नृनपोस्तथा ।
भेषजद्रवभेदे च द्वे तु काके त्रिषु त्वयम् ॥ १९ ॥
अहिंसिते तथा व्याधिनिर्मुक्ते निरुपद्रवे ।
**अदृष्टं** वह्नितोयादिदैवभीतौ महीभुजाम् ॥ २० ॥
क्ली त्रि त्वनीक्षितेऽथ स्या**दक्षतं** क्लीबलिङ्गकम् ।
धान्येऽपि तण्डुलेऽथ स्त्रीनपोर्लाजेषु ना यवे ॥ २१ ॥
अन्यस्मिंस्तु क्षतात् त्रि स्या**दक्षितं** तु जले नपि ।
सङ्ख्याविशेषे चान्यस्मिन् क्षितात् त्रि स्याद**थाच्युतः** ॥ २२ ॥
पुमान् विष्णौ त्रिषु पुनश्च्युतादन्यत्र वस्तुनि ।
‡**अन्तस्था** तु स्त्रियां प्रोक्ता यरलेषु वकारके ॥ २३ ॥

‡ कान्तोऽयम् । विबन्तस्तु विश्वपावन् पुंसि बोद्धव्यः ।

तथा छन्दोविचित्यां च व्यक्षरप्रभृतिष्वपि ।
षड्विंशतौ चच्छन्दस्सु चतुर्वृद्धेषु दृश्यते ॥ २४ ॥
प्रयोगे ब्राह्मणेनोपास्थानीयां जीयके तथा(?) ।
त्रिष्वन्तावस्थिते चापि तथैवान्तरवस्थिते ॥ २५ ॥
**अरुणा** स्त्री विषायां च मञ्जिष्ठात्रिवृतोरपि ।
क्ली तु ताम्रे पुमांस्तु स्यात् सूर्ये सूर्यस्य सारथौ ॥ २६ ॥
शशिजे चाप्युषसि च काण्डर्षिष्वपि केषुचित् ।
अव्यक्तरागवर्णे च सन्ध्यारागे तु केचन ॥ २७ ॥
लोहितेऽन्यस्तु कपिले त्रि त्वत्र कथिता गुणाः ।
अव्यक्तरागाद्या ये तेषामन्यतमेन यत् ॥ २८ ॥
युक्तं वस्तु भवेत् तत्र निःशब्दे चाजयादयः ।
**अजिरं** क्ली शरीरे च विषये चाङ्गणेऽपि च ॥ २९ ॥
शैघ्र्ये च नगरे चास्य प्रयोगोऽर्थान्तरेऽपि च ।
दृश्यते भारते क्रौञ्चधरणीधरवर्णने ॥ ३० ॥
कुरङ्गारुतनिर्घोषमुद्भ्रान्तभ्रमराजिरम् ।
इत्यत्रार्थश्चिन्तनीयोऽथ नद्यामजिरा स्त्रियाम् ॥ ३१ ॥
उमायामपि च प्राह रभसः शब्दवित्तमः ।
त्रि तु शीघ्रे जर्जरे च स्यादथो **अमरा** स्त्रियाम् ॥ ३२ ॥
गुडूचीन्द्रपुरीस्थूणास्वमर्तरि तु वाच्यवत् ।
द्वे तु देवेऽथ पुंसि स्याद**ररः** सोमसंज्ञके ॥ ३३ ॥
यज्ञाङ्गेऽग्नौ च युद्धे तु लोहलोहशलाकयोः ।
अपि क्लीबं कवाटे तु स्यात् स्त्रीशण्डेऽररी इति ॥ ३४ ॥
आरायामररा स्त्र्येव शीघ्रे स्याद् भेद्यलिङ्गकम् ।
**अर्गला** तु न ना द्वारकवाटद्वयबन्धने ॥ ३५ ॥

१. 'पा' ग. पाठः. २. 'यं' ग. पाठः. ३. 'ते' ख. ग. पाठः.

क्लीबं तु द्वारपटले विदण्डे तु त्रिलिङ्गिका ।
रभसस्त्वाह कल्लोले दण्डिकान्तःकपोलयोः ॥ ३६ ॥
**अचलो** ना गिरौ विष्णौ पृथिव्यां त्वचला स्त्रियाम् ।
देव्यां च काञ्चिकस्थालमधितिष्ठति या सदा ॥ ३७ ॥
निश्चले तु त्र्य**मात्य**स्तु राज्ञो धीसचिवे पुमान् ।
त्रिस्त्वमाभवजातादा**वहतं** त्रिर्नवांशुके ॥ ३८ ॥
अहिंसितेऽप्यहिंसायां पुनः क्लीबेऽ**हितः** पुनः ।
ना रिपौ त्रि त्वपथ्येऽथ स्या**दषाढा** स्त्रियामियम् ॥ ३९ ॥
अब्देवते च नक्षत्रे वैश्वदेवे च भे तथा ।
तद्युक्ते कालसामान्ये ताभ्यां यज्ञाद्विजन्मनाम्(?) ॥ ४० ॥
अग्निचित्येष्टकाभेदेऽप्यथ स्याद् भेद्यलिङ्गकम् ।
असोढरि तथाषाढायुक्तकालजवस्तुनि ॥ ४१ ॥
**अभिज्ञा** तु स्त्रियां स्मृत्यां निपुणे त्वभिधेयवत् ।
**अन्नादो** ना व्रतान्ताग्नावन्नस्यात्तरि तु त्रिषु ॥ ४२ ॥
मनुष्ये तु द्वयोराह शब्दवेदी धनञ्जयः ।
**अजित**स्तु पुमान् विष्णौ दूर्वायामजिता स्त्रियाम् ॥ ४३ ॥
अनिर्जिते पुनस्त्रि स्या**दव्यक्त**स्तु पुमान् हरौ ।
परमात्मनि च क्ली तु साङ्ख्यतत्त्वान्तरेऽपि च ॥ ४४ ॥
प्रधानाख्ये त्रिषु पुनरस्पष्टे मूर्खे एव च ।
रभसस्तु प्रमाद्याह परमात्मन्यमुं नपि ॥ ४५ ॥
**अव्ययो**ऽस्त्री स्वराद्याद्येष्वीश्वरस्य दशस्वपि ।
ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः ॥ ४६ ॥
स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमित्यपि ।
एतेषु त्रि तु यस्यास्ति न व्ययस्तत्र वस्तुनि ॥ ४७ ॥

१. 'ज्ञ' क. ख. पाठः.

पार्वत्यां त्वद्रिजा स्त्री स्यात् क्ली शिलाजतुनामनि ।
धातुभेदे त्रिषु पुनरद्रिजाते नपि त्वदः ॥ ४८ ॥

शिलाजतुन्यश्मजं स्यादश्मजाते पुनस्त्रिषु ।
अनीकं तु नृशण्डे स्यात् सेनायां समरेऽपि च ॥ ४९ ॥

बाणावयवभेदे चाप्यथानूकं नपुंसकम् ।
देहावयवभेदे च शीले चान्वय एव च ॥ ५० ॥

गते जन्मनि नाथ स्यादनूपो महिषे द्वयोः ।
जलप्राये तु देशे त्रिरथाहीनो नृलिङ्गकः ॥ ५१ ॥

द्विरात्रादिषु यज्ञेषु प्राक् त्रयोदशरात्रतः ।
अथ त्रिषु स्यादन्यूने स्यादहीनामिनेऽपि च ॥ ५२ ॥

अक्षीबं त्वब्धिजे क्लीबं लवणे ना तु शिग्रुके ।
अमत्ते तु त्रिरमतः पुनर्मृत्यौ नृलिङ्गकः ॥ ५३ ॥

द्वे तु मर्त्येऽधरस्तु स्यादोष्ठे पुंस्यथ भेद्यवत् ।
अवाचीने च हीने क्ली त्वध्वरं खे मखे तु ना ॥ ५४ ॥

अत्वरस्तु त्वराहीने त्रि द्वे तु महिषे स्मृतः ।
अधृष्या तु नदीभेदे स्त्री त्रिपु त्वप्रधृष्यके ॥ ५५ ॥

नाद्भुतो वैश्वदेवाग्नौ महदाश्चर्ययोस्त्रिपु ।
अखातं क्ली देवखातजलाधारेऽथ भेद्यवत् ॥ ५६ ॥

खातादन्यत्र पुल्लिँङ्गस्त्वपायोऽपगमे तथा ।
पलायनेऽथापेताये त्रिरपाङ्गः पुनः पुमान् ॥ ५७ ॥

नेत्रान्तेऽपगताङ्गे तु त्रिरलिङ्गं तु नप्यदः ।
प्रधानाख्ये साङ्ख्यतत्त्वे निर्लिङ्गे त्वभिधेयवत् ॥ ५८ ॥

त्रिस्त्वनङ्गोऽङ्गरहिते क्ली तु व्योम्नि स्मरे तु ना ।
अङ्गनाशब्द आख्यातः कल्याणाङ्ग्यां स्त्रियां स्त्रियाम् ॥ ५९ ॥

१. 'म्रा' ख. पाठः.

गतिप्राङ्गणयोस्त्वन्ये कथयन्त्यङ्गनं बुधाः ।
ग्रन्थावच्छेदभेदे तु **नाध्यायो**ऽध्ययनेऽपि च ॥ ६० ॥
ध्यातुरन्यत्र तु त्रिः स्याद**न्यथा** तु स्त्रियामियम् ।
हरीतक्यां स्तम्बभेदे यस्याख्या पद्मचारिणी ॥ ६१ ॥
महाश्रावणिकायां च वैद्यः कश्चिदभाषत ।
पीतझिण्ट्यां तु पुंस्येष निर्व्यर्थे त्वाभिधेयवत् ॥ ६२ ॥
पन्नगेऽपि पठत्येनं रभसस्तद् विचार्यताम् ।
**अश्वत्थ**स्तु नृलिङ्गः स्याद् वृक्षे पिप्पलसंज्ञके ॥ ६३ ॥
अश्विनीसंज्ञनक्षत्रे स्यान्मुहूर्तान्तरेऽपि च ।
पौर्णमास्यां त्वाश्वयुज्यामश्वत्था स्यात् स्त्रियामियम् ॥ ६४ ॥
**अशोकः** पुंसि कङ्केलिसंज्ञवृक्षे स्त्रियां पुनः ।
अशोका कटुरोहिण्यां वीतशोके तु भेद्यवत् ॥ ६५ ॥
पथ्याविडङ्गयोः स्त्री स्याद**मोघा** सफले त्रिषु ।
**अर्शोघ्नः** सूरणे पुंसि तक्रे तु स्यान्नपुंसकम् ॥ ६६ ॥
अर्शोघ्नी मुसलीसंज्ञस्तम्बे स्त्री भेद्यवत् पुनः ।
अर्शसो घातकेऽथ स्याद**योगः** पुंसि कीर्तितः ॥ ६७ ॥
वियोगे विधुरे तु त्रिर्योगहीनेऽपि लोहगे ।
**अन्तिका** तु स्त्रियां चुल्ल्यां समीपे भेद्यलिङ्गिका[1] ॥ ६८ ॥
**अण्डज**स्तु द्वयोर्मत्स्ये कृकलासपतत्रिणोः ।
स्त्री त्वण्डजा स्यात् कस्तूर्यामण्डजाते पुनस्त्रिषु ॥ ६९ ॥
**अब्धिजा** तु स्त्रियां लक्ष्म्यां भेद्यवत् तु समुद्रजे ।
**अञ्जनः** पुंसि वरुणादिग्गजेऽथाञ्जना स्त्रियाम् ॥ ७० ॥
हालाहलाख्यजन्तौ स्याद् जनन्यां च हनूमतः ।
लेप्यनार्यां तु रभस ईदन्तामाह चाञ्जनीम् ॥ ७१ ॥

१. 'ङ्ग' ख. ग. पाठः.

क्ली त्वनक्तिक्रियायां स्यान्नेत्रसंस्कारवस्तुनि ।
रसाञ्जने च रभसो विशेषादिदमब्रवीत् ॥ ७२ ॥
नपुंस्त्रियोस्त्वञ्जयत्यर्थे त्रिषु त्वञ्जनसाधने ।
**अम्बुजं** पङ्कजे क्लीबं पुंस्यपि स्माह वाक्पतिः ॥ ७३ ॥
अनाप्तत्वादनादृत्यं तद् ना निचुलशङ्खयोः ।
अम्बुजा तु स्त्रियां लक्ष्म्यामिति केचित् त्रिषु त्वदः ॥ ७४ ॥
जलजाते नपि त्वेष सङ्ख्याभेदे च सेदृशी ।
कोटेरारभ्य याः सङ्ख्याः क्रमाद् दशगुणोत्तराः ॥ ७५ ॥
सप्तमी तासु या सङ्ख्या सा ज्ञेयाथा**ङ्गजः** स्मरे ।
केशे च ना द्वे तु पुत्रे क्ली तु रोगेऽपि शोणिते ॥ ७६ ॥
त्रिस्त्वङ्गजातेऽथा**बद्धं**[1]स्त्रिर्निरर्थकवाचि च ।
अनन्यबन्धेऽबन्धे[2] तु क्लीबेऽथ स्यात् स्त्रियामियम् ॥ ७७ ॥
**अपर्णा** गिरिजायां स्यात् पर्णहीने तु भेद्यवत् ।
**असनो** ना पीतसालसंज्ञवृक्षे नपि त्वदः ॥ ७८ ॥
क्षेपणे गतिदीप्त्योश्च स्यादादानेऽप्यथा**र्जकः** ।
सिते कठिञ्जरे[3] पुंसि स्यादार्जयितरि त्रिषु ॥ ७९ ॥
**अरूढस्तु** यवे पुंसि त्रिषु त्वकृतरोहणे ।
रूढादन्यत्र चा**स्थानं** पुनस्त्रिषु जलाश्रये ॥ ८० ॥
अगाधे स्थानहीने च क्ली तु स्थानात् परत्र च ।
**अङ्गुलोऽ**स्त्री तिर्यगष्टयवमाने पुमांस्तु सः ॥ ८१ ॥
†पक्षिलस्वामिसंज्ञर्षावङ्गुष्ठेऽ[4]श्वत्थपादपे ।
हर्षनन्दी तु पर्यायमङ्गुलेरिममामनत् ॥ ८२ ॥

---

१. 'द्धं त्रिरनर्थं' ग. २. 'नबद्धेऽपबद्धे तु' ख. ङ. पाठः. ३. 'लि' क. पाठः. ४. 'ले' ग. पाठः.

---

† 'द्राविलः पक्षिलस्वामी मल्लनागोऽङ्गुलोऽपि च' (पृ. ९६. श्लो. १५९) इति वात्स्यायने वैजयन्ती ।

अङ्गारस्तु पुमान् भौमे स्यादुष्णगुण एव च ।
त्रिस्तु तद्वति निर्वाणज्वाले त्वग्नौ नृशण्डयोः ॥ ८३ ॥
निर्वाणाग्नाविन्धने च स्यात् त्वपानं गुदेऽपि च ।
वृषणे च पुमांस्तु स्याच्छारीरपवनान्तरे ॥ ८४ ॥
आरण्यके सामभेदेऽप्यथ स्यादक्षयो नरि ।
विष्णोरकारवाच्यस्य गृहादौ च त्रिषु त्वयम् ॥ ८५ ॥
क्षयहीनेऽष्टका तु स्त्री मार्गशीर्ष्याः परत्र या ।
तामिस्राष्टमिकास्तिस्रस्तासु तासु च कर्म यत् ॥ ८६ ॥
पितॄनुद्दिश्य कर्तव्यं तत्र च क्ली तु सूत्रके ।
अष्टावयवके त्रिस्तु तस्याध्येतरि यस्य च ॥ ८७ ॥
सङ्घस्यावयवा अष्टौ तस्मिन्नध्ययनस्य च ।
यस्याष्टावृत्तयस्तस्मिन्नष्टमी तु स्त्रियामियम् ॥ ८८ ॥
तिथौ रुद्रस्याष्टमं स्यादष्टानां पूरणे त्रिषु ।
अम्बकं नयने क्लीबं पार्वत्यां त्वम्बिका स्त्रियाम् ॥ ८९ ।
जनन्यामपि शब्दज्ञः पुनर्ब्रूते धनञ्जयः ।
स्त्रीमात्रे चाप्यथागाधमतलस्पर्शवारिणि ॥ ९० ॥
त्रिः क्ली तु विवरेऽहार्यः पुनर्ना धरणीधरे ।
अहर्तव्ये पुनस्त्रि स्यादभ्यासो गुणने पुमान् ॥ ९१ ॥
द्विरुक्तधातुपूर्वार्धेऽ*प्यभीतस्त्रिस्तु निर्भये ।
अम्लानस्तु पुमान् पुष्पस्तम्बे यस्य महासहा ॥ ९२ ।
इति संज्ञान्तरं तस्य पुनः पुष्पे नपुंसकम् ।
त्रिस्त्वम्लानवति त्रिस्तु स्यादभीकश्च निर्भये ॥ ९३ ॥

१. 'तु' ङ. पाठः.

* अभिगत इत्यर्थान्तरं तु प्रसिद्धमेव

कमितर्य्यपि ना तु स्याद्द[1]र्षिभेदे च साम[2]गे ।
रभसस्तु कवौ चाह पुंस्येवैनं बहुश्रुतः ॥ ९४ ॥

अजिनं चर्मणि क्लीबं जिनहीने तु भेद्यवत् ।
अजपस्त्वसदध्येनर्ययं ना निर्जपे त्रिषु ॥ ९५ ॥

अजस्य पातर्यपि च क्लीबं त्वर्दितमामये ।
वातजे हिंसने गत्यां याचने च त्रिषु त्वदः ॥ ९६ ॥

गते हृते याचिते च स्यादथो अर्बुदोऽस्त्रियाम् ।
मांसकीलाह्वये रोगभेदेऽन्ये त्वाहुरक्षिजे ॥ ९७ ॥

रुग्भेद इति शण्डस्तु सङ्ख्यायां कोटिनामनि ।
ना तु सर्पान्तरे सर्पसत्रयाजिफणाभृताम् ॥ ९८ ॥

एकस्मिन्नपरे त्वेनं शैलभेदेऽपि चामनन् ।
अविषस्तु पुमानब्धौ गिरौ स्त्रीपुंसयोः पुनः ॥ ९९ ॥

दिवि स्त्री त्वविषी भूमौ निर्विषे त्वभिधेयवत् ।
तत्रापि स्यात् स्त्रियां वृत्तिर्यदा स्यादविषा तदा ॥ १०० ॥

अरुषस्तु पुमान् सूर्येऽरोषे वर्णेऽपरे पुनः ।
रूपव[3]त्याहुरश्वे तु द्वयोरुषसि तु स्त्रियाम् ॥ १०१ ॥

अरुषीत्यपुषस्त्वग्नौ नासारोगे पुनस्त्रिषु ।
अर्पि[4]षं बालवत्साया[5] दुग्धे स्यादग्रमांसके ॥ १०२ ॥

क्लीबमन्ये पुनः प्राहुर्हस्तिनि द्वे अथो नपि ।
लाजेष्वभ्योषमाहान्यः साज्याम्भःपेयसक्तुषु ॥ १०३ ॥

पुमांसम[6]ङ्गुषस्तु द्वे पक्षिजातौ च हस्तिनि ।
धनञ्जयस्त्विमं प्राह पुमांसं हस्तवाचकम् ॥ १०४ ॥

१. 'ष्टि' ग. पाठः. २. 'गरे' ग. पाठः. ३. 'इ' क. ख. ङ. पाठः. ४. 'वि' क. ग., 'पि' ख. पाठः. ५. 'यां' क. ख. ङ. पाठः. ६. 'मंशुष' ग. पाठः

**अगस्त्य**स्तु पुमान् कुम्भसम्भवे स्यान्महामुनौ ।
अगस्तिसंज्ञवृक्षे च क्लीत्वस्य फलपुष्पयोः ॥ १०५ ॥
**अजन्यं** क्लीबमुत्पाते जन्यहीने तु तत् त्रिषु ।
**अरालो** यक्षधूपाख्यनिर्यासे पुंसि कीर्तितः ॥ १०६ ॥
नटानां हस्तविन्यासभेदे भुग्ने तु भेद्यवत् ।
अतिप्रमाणकाये तु गजभेदे द्वयोरयम् ॥ १०७ ॥
**अलात**मुल्मुके[1] (क्लीब)मनात्ते त्वभिधेयवत् ।
**अङ्गदं** नपि केयूरे वालिपुत्रे तु पुंस्ययम् ॥ १०८ ॥
रभसो वामनाख्यस्य दिग्गजस्याह योषिति ।
**अर्दनं** तु गतौ क्लीबं याचने चापरे पुनः ॥ १०९ ॥
अर्दना याचने स्त्रीत्वे हिंसायां त्वर्दना न ना ।
**अपटी** स्त्री काण्डपटे पटहीने तु भेद्यवत् ॥ ११० ॥
तत्रापि च स्त्रियां वृत्तिर्यदा स्यादपटा तदा ।
**अवट**स्तु पुमान् गर्ते कूपे मानान्तरेऽपि च ॥ १११ ॥
चतुर्विंशत्यङ्गुलके वटहीने तु स त्रिषु ।
**अगम**स्तु गिरौ वृक्षे गतिहीने तु भेद्यवत् ॥ ११२ ॥
**अनृतं** तु कृषौ क्लीबमसत्ये(तु[2]? च) त्रिषु त्वदः ।
असत्ययुक्तेऽप्यनृतेऽप्यपुंस्त्वे त्वै[3]नृता स्त्रियाम् ॥ ११३ ॥
**असुर**स्तु पुमान् मेघे वास्तुदेवान्तरेऽपि च ।
कोष्ठपङ्क्तौ पश्चिमायां षष्ठे दक्षिणतः स्थिते ॥ ११४ ॥
द्वे तु दैत्ये गजे च स्त्री पुनः कांस्याख्यलोहके ।
**आसित**स्तु पुमान् ज्ञेय इक्ष्वाकुकुलजे नृपे ॥ ११५ ॥

१. 'के मत्ते निचाते (?) त्व' ख. ग. पाठः. २. 'पु' क. ख. ङ. पाठः. ३. 'प्य' क. ग. पाठः.

**शनैश्चरे** च वर्णे च कृष्णे तद्वति तु त्रिषु।
**अबद्धे** चाप्यथासाध्यजिह्वारोगान्तरेऽ**लसः** ॥ ११६ ॥

पादरोगविशेषे च स्यादुष्ट्रस्य ज्वरेऽपि च।
आलस्यवति तु त्रिः स्यादलसा तु स्त्रियामियम् ॥ ११७ ॥

हंसपाद्यामथाध्वर्यावविनः पुंसि पावके।
तथाविधाने गुप्तावप्युदकेऽपि नपुंसकम् ॥ ११८ ॥

द्वयोस्तु विहगे भासे मृगे चाथाकृतं नापि।
यवव्रीह्यादिसतुषहविष्यजनिते त्रिषु ॥ ११९ ॥

**अधरस्तु** पुमान् बन्धुसमूहे भूरुहान्तरे।
क्ली तु युद्धे द्वयोस्तु स्यान्मातृवाहाख्यजन्तुके ॥ १२० ॥

जलपक्षिविशेषे च स्यादथो **अनसः** पुमान्।
वनस्पतिप्रभेदे स्यादतसी तु स्त्रियामियम् ॥ १२१ ॥

उमासंज्ञे धान्यभेदे वने तु स्याद् नपुंसकम्।
**अवसं** क्ली भवेत्तापे ना पाथेयाशनीयके ॥ १२२ ॥

वसाहीने पुनस्त्रिः स्यादवला तु स्त्रियामियम्।
तथा चर्विततांबूलरसे भार्याग्रजे तु ना ॥ १२३ ॥

बलहीने पुनस्त्रिः स्यादजयस्योत्तरं वचः।
**अवेलः** पुंस्यपलापे स्त्र्यवेला पूगचूर्णके ॥ १२४ ॥

इत्यन्यत्र च वेलाया वेलाहीने तु भेद्यवत्।
**अलर्कस्तु** सितार्के ना क्ली तु तत्फलपुष्पयोः ॥ १२५ ॥

शाकभेदेऽप्यैलर्कोल्यां द्रे तु स्याद् रोहिते शुनि।
**अलका** स्त्री कुबेरस्य नगरे मूर्धजे पुनः ॥ १२६ ॥

कुटिले पुंसि शण्डस्तु स्यादश्वीयं कदम्बके।
अश्वानां त्रिस्त्वश्वहिते स्त्री त्वश्वीयाश्वलाञ्छने ॥ १२७ ॥

१. 'पि' क., 'भि' ग. पाठः. २. 'बृ' क. पाठः. ३. 'त्व' ख. पाठः. ४. 'ल्ये' क. पाठः.

**अण्डीरः** पुरुषे पुंसि सज्जने मुष्कवत्पशौ ।
त्रि तु शक्तेऽथाण्डुको ना मुष्के स्याद् द्वे तु टिट्टिभे ॥ १२८ ॥

**अङ्कुरस्त्व**स्त्रियां बीजप्ररोहे किञ्च शाखिनाम् ।
प्रतानभेदे क्लीबं तु रुधिरे रोम्णि वारिणि ॥ १२९ ॥

अथापरं क्लीबलिङ्गं सिद्धान्ते मुनयो विदुः ।
गजपाश्चात्यभागेऽथ त्रिः पूर्वप्रतियोगिनि ॥ १३० ॥

अन्यस्मिन्नप्यथापारः समुद्रे ना त्रिषु त्वयम् ।
अविद्यमानपारे स्याद**शित्र**स्तु पुमानयम् ॥ १३१ ॥

अम्रो क्ली रश्मिहविषो**रम्बष्ठ**स्तु द्वयोरयम् ।
वैश्यायां ब्राह्मणाज्जाते विवाहादपरे पुनः ॥ १३२ ॥

ब्राह्मणात् क्षत्रियाजाते विवाहेनेति मन्वते ।
सवर्णाख्ये नृपात् तृढवैश्यायामपरे विदुः ॥ १३३ ॥

जाते माहिष्यसञ्ज्ञाके स्त्री त्वम्बष्ठा विधीयते ।
पाठाशार्ङ्गष्ठयोर्यूथीचाङ्गेर्योः स्थावरान्तरे ॥ १३४ ॥

मयूरविदलासंज्ञे काकमाच्यां च कश्चन ।
वैजयन्त्यां तु पिप्पल्यामप्यम्बष्ठामभाषत ॥ १३५ ॥

**अग्निष्ठः** पुंस्युपस्थावसंज्ञयूपद्वयान्तरे ।
स्थितयूपे त्रिषु त्वेष वह्निस्थे क्ली त्वपष्ठवाक् ॥ १३६ ॥

अङ्कुशाग्रे पष्ठहीने पुनः स्यादभिधेयवत् ।
पष्ठश्च पर्वतप्रस्थ आख्यातः कृतबुद्धिभिः ॥ १३७ ॥

**अत्यूहो** गजभेदे ना त्रि त्वत्यर्थोहकादिषु ।
अत्यूहा नीलिकायां स्त्री नीलकण्ठखगे द्वयोः ॥ १३८ ॥

**अर्णीचि**स्तु पुमान् वेर्णा त्रिषु शाकटिके मतः ।
असौम्येऽक्षण्य**दृष्टिः** स्त्री दृष्टिहीने तु भेद्यवत् ॥ १३९ ॥

१. 'त्व' ङ. पाठः २. 'प' क ख. ग., 'या' ग. पाठः. ३. 'णि' ङ. पाठः.

**अरणिः** पुंस्त्रियोर्यज्ञवह्निमन्थनकाष्ठयोः ।
ना मुहुर्वचने[1] स्त्री तु या कन्या निःस्पृहा स्वतः ॥ १४० ॥
अविवाह्या भवेत तस्यामथ स्याद**ङ्कतिः** पुमान ।
वायौ प्रजापतौ च स्त्रीलिङ्गस्त्वर्थान्तरेऽस्त्ययम् ॥ १४१ ॥
इति बह्वादिपाठेन विज्ञेयमथ **नाञ्चतिः** ।
अग्नावर्थान्तरे नास्ति स्त्रीलिङ्ग इति निश्चयः ॥ १४२ ॥
बह्वादिपाठादेवास्य स्यादथो **अंहतिः** स्त्रियाम ।
दाने व्याधौ च पिशिते पुल्लिङ्गस्त्वंहिधातुके ॥ १४३ ॥
**अमतिस्त्व**मिधातौ ना द्वयोस्त्वाहुर्विचक्षणाः ।
छागचातकयोर्लिङ्गं त्वस्माभिर्नैव निश्चितम् ॥ १४४ ॥
रूपे प्रावृषि च त्रिस्तु निर्भनाव**रतिस्तु** ना ।
असुखक्रोधयोस्त्रिस्तु रतिहीनेऽ**दितिः** पुन ॥ १४५ ॥
ज्ञेया शैलेन्द्रकन्यायां पृथिव्यामपि सूरिभिः ।
देवमातरि गोवाचोर्होमार्थसामिदुक्षणे ॥ १४६ ॥
द्यावापृथिव्योस्त्वदितिः स्त्री त्रिस्तु दितिवर्जने ।
**अगस्तिस्तु** पुमान् कुम्भसम्भवे मुनिपुङ्गवे ॥ १४७ ॥
अगस्त्यवृक्षे च क्ली तु स्यात् तस्य फलपुष्पयोः ।
**अवन्तिर्ना** राजभेदे नीवृद्भेदे च भूम्नि च ॥ १४८ ॥
स्त्रियां त्ववन्तिराजस्य स्यादवन्ती स्त्र्यपत्यके ।
उज्जयिन्याख्यनगरेऽप्य**ततिस्तु** पानि स्त्रियाम ।
पुमांस्त्वततिधातौ स्या**दतिथिस्तु** पु[illegible]
कुशस्य तनयेऽपि स्यात् तथैव ग[illegible]
**अबन्धौ** भोक्तुकामे च त्रि[illegible]
**अरातिः** पुंस्त्रियोर्हम्ने [illegible]ल्लो ॥ १५१ ॥

1. 'लेपने' ब. पाठ. २ स्व' ख ग. ब. पाठः

कीलकूर्परयोश्चान्ये पुनर्मानान्तरे विदुः ।
चतुर्विंशत्यङ्गुलेऽथ स्यादश्मावमनिः पुमान् ॥ १९२ ॥

कश्चित् त्वाह स्त्रियां रोगे पुंस्त्रियोस्त्वशनिः पवौ ।
वज्रनिर्घातयोश्च त्रिः पुनः स्याच्छनिवर्जिते ॥ १९३ ॥

अ(न्म?ग्न)निस्तु पुमानग्नौ जयहस्तिन्यथ स्त्रियाम् ।
पशूनां भक्षणे द्रोण्या तालुन्यप्यथ दीधितौ ॥ १९४ ॥

अभीशुः प्रग्रहेऽश्वस्य बाहौ चाथाङ्गुलौ स्त्रियाम् ।
अविष्टस्तु द्वयोरश्वे पुल्लिङ्गस्त्वपहोतरि ॥ १९५ ॥

अजिष्णुस्तु पुमानग्नावुदके तु नपुंसकम् ।
अररुस्त्वसुरे द्वे स्यान्मन्थनेऽथायुधे नपि ॥ १९६ ॥

अगुरु स्त्री शिंशपायां जोङ्गके पुन्नपुंसकम् ।
लघुनि स्याद् भेद्यलिङ्गमश्वयुक् तु स्त्रियामियम् ॥ १९७ ॥

अश्विन्याह्वयनक्षत्रे तद्युक्ते कालमात्रके ।
जाते तु तत्र त्रिरथो अहिशुग् गरुडे पुमान् ॥ १९८ ॥

द्वे मयूरे भेद्यलिङ्गस्त्वहिमार्जिनि कीर्तितः ।
अंशुमांस्तु पुमान् सूर्ये चन्द्रे चाद्यमहीपतौ ॥ १९९ ॥

दिलीपाख्यस्य नृपतेर्नप्तरिऽथांशुमती स्त्रियाम् ।
पृश्निपर्णीसालपर्ण्योरंशुयुक्ते तु भेद्यवत् ॥ १६० ॥

मुहूर्तभेदे त्वभिजित् क्रतुभेदे न पुंसि स ।
नक्षत्रभेदे तद्युक्तकालमात्रे च स त्रि तु ॥ १६१ ॥

तत्र जाते पुमांस्तु स्यादहिजिद् विष्णुशक्रयोः ।
अहेस्तु जेतरि त्रि स्यादरुन्धत् त्वभिधेयवत् ॥ १६२ ॥

अरोधके वसिष्ठर्षिपत्न्यां तु स्यादरुन्धती ।
वचायां च स्त्रियामस्थिसंयुक्ते त्वभिधेयवत् ॥ १६३ ॥

**अस्थिमान**स्थिसङ्घातसंज्ञवल्ल्यन्तरे तु ना ।
**अङ्कुरी** तु वसन्ते ना वृक्षे चाथ त्रि साङ्कुरे ॥ १६४ ॥

**अहिद्विड्** गरुडे पुंसि शक्रे च नकुले पुनः ।
द्वे मयूरे त्रिषु पुनरहेर्द्वेषस्य कारिणि ॥ १६५ ॥

**अनड्वांस्तु** बलीवर्दे नार्घ्यायां तु स्त्रियां द्विधा ।
**अनडुह्यप्यनड्वाहीत्याषाढा** तु स्त्रियामियम् ॥ १६६ ॥

आषाढानक्षत्रयुक्तपौर्णमास्यां पुमांस्त्वयम् ।
आषाढः शुचिसंज्ञे स्यान्मासे शैलान्तरेऽपि च ॥ १६७ ॥

आचष्टे वैजयन्त्यां ते विद्वान् मलयभूधरे ।
पालाशे व्रतिनां दण्डेऽप्यथार्लीढं नपुंसकम् ॥ १६८ ॥

धानुष्कस्थितिभेदे स्यात् तस्योक्तं चापि लक्षणम् ।
वाममाकुञ्च्य चरणं दक्षिणं प्रततेऽग्रतः ॥ १६९ ॥

इत्येवमास्वादने च त्रिषु त्वाम्यादिते भवेत् ।
**आढकोऽस्त्री** चतुष्प्रस्थपरिमाणे स्त्रियां पुनः ॥ १७० ॥

आढकी तुवरीसंज्ञधान्ये स्यात् **त्वाश्रमोऽ**स्त्रियाम् ।
**मुनिस्थाने** ब्रह्मचर्यगार्हस्थ्यादौ मठेऽपि च ॥ १७१ ॥

**आश्रवो**ऽङ्गीकृतौ पुंसि त्रि तु स्याद् वचनस्थिते ।
**आग्नेयः** पुंस्यगस्त्यर्षौ द्वापराख्ययुगेऽपि च ॥ १७[illegible]

संवत्सरे च क्लीबं तु रुधिरेऽप्युत्तरायणे [illegible]
दशाहकार्यश्राद्धे च त्रेतायां तु [illegible]

आग्नेयी भेदवत् त्वग्नि[illegible] [illegible]पुनः ।
**रजस्वलायामात्रेयी** [illegible] [illegible]र्तिना ॥ १७४ ॥

**क्ली** तु सामविशेषे स्यात् द्वयोस्त्वत्रेरपत्यके ।
अबहुष्वेव धातौ तु शारीरे रससंज्ञके ॥ १७५ ॥

पुमानथ स्यादाश्लेषो नक्षत्रे सर्पदैवते ।
स्त्रीणां त्वालिङ्गनेऽथ स्यादास्फोता स्त्री वनोद्भवे ॥ १७६ ॥

मल्लिकायाः प्रभेदे च गिरिकर्ण्यां च ना पुनः ।
पलाशवृक्षे रभसस्त्वर्कवृक्षे प्रमादवान् ॥ १७७ ॥

भेद्यलिङ्गं तु विज्ञेयमायतं दीर्घवस्तुनि ।
स्यात् कृतायमने चाथ क्ली शराकर्षणान्तरे ॥ १७८ ॥

आकर्णकर्षणाच्चेदमङ्गुलेनाधिकं विदुः ।
ज्ञेयमायमने चैतत् पीठादौ त्वासनं नपि ॥ १७९ ॥

पुंस्यप्येके क्रियायां तु स्यादास्तेरासना न ना ।
क्ली तु गात्रस्य विन्यासभेदे पद्मासनादिके ॥ १८० ॥

गजस्य स्कन्धदेशे च स्यादास्थानी तु नप्स्त्रियोः ।
सदस्यथ प्रतिज्ञायां क्लीबमाक्रमणेऽपि च ॥ १८१ ॥

आनकः पटहे भेर्यामपि स्यादस्त्रियामथ ।
द्राक्षायां स्त्रीत्व आनन्दी ना त्वानन्दः सुखे भवेत् ॥ १८२ ॥

आशयस्तु पुमान् स्थानेऽभिप्रायाधारयोरपि ।
कोष्ठागारे जलस्थाने त्वाह सारस्वतस्तथा ॥ १८३ ॥

सङ्गे चेतसि चेत्याह सज्जनो विभवे त्वमुम् ।
अजयः प्राह *रूपेण पुनर्जीर्णे च भेद्यवत् ॥ १८४ ॥

आमिषं त्वस्त्रियां मांसे तथा स्याद् भोग्यवस्तुनि ।
उत्कोचे च स्त्रियां तु स्यान्मांसीत्याख्ये तथामिषी ॥ १८५ ॥

गन्धद्रव्ये स्त्रियां तु स्यादाश्विनी पूर्णिमान्तरे ।
अश्विनीतारया युक्ते कासुचिच्चेष्टकासु सा ॥ १८६ ॥

अभिचित्यगतासु स्यादाश्विनस्तु पुमानयम् ।
ज्ञेय आश्वयुजे मासि क्ली तु शास्त्रान्तरे क्रतौ ॥ १८७ ॥

---

* 'कृपणे' इति स्यात् । 'कोटरे कृपणे जीर्णे स्थानेऽभिप्राय आशयः' (पृ. २५८, श्लो. १७) इति वैजयन्ती ।

सम्बन्धिनि त्वदोऽश्विन्या अश्विनोश्चापि भेद्यवत्।
अथ प्रचक्षते धीराः स्यादावन्त्यः पुमात्मजे॥ १८८॥

अवन्तिराजस्य पुमान् मर्त्यजात्यन्तरे पुनः।
विप्रपूर्वकविप्रस्त्रीजाते व्रात्याद् द्वयोर्भवेत्॥ १८९॥

आहतं तु त्रिषु ज्ञेयं ताडिते गुणितेऽपि च।
मृषार्थके च वाक्येऽथ ताडने गुणने च नप्॥ १९०॥

आत्मजो मन्मथे पुंसि रुधिरे क्ली मनस्यपि।
द्वे तु पुत्रे स्वजे तु त्रिरायुधं तु जले नपि॥ १९१॥

पुन्नपुंसकयोः शस्त्रे स्यादथार्द्रकमस्त्रियाम्।
शृङ्गिबेराख्यकन्दे स्यादथ स्याद् भेद्यलिङ्गकम्॥ १९२॥

आर्द्रासंज्ञकनक्षत्रयुक्तकालोद्भवेऽथ नप्।
आर्तवं रजसि स्त्रीणां पुष्पे च रभसोऽपठीत्॥ १९३॥

वस्तुमात्रे त्वृतूत्थे स्याद् भेद्यलिङ्गमिति स्मृतम्।
यस्य प्राप्त ऋतुः कालस्तस्मिंश्चाथ नपुंसकम्॥ १९४॥

आर्षभं सामभेदे स्यात् त्रिषु त्वृषभयोगिनि।
आनद्धं मुरजाद्येषु वाद्येषु क्लीबलिङ्गकम्॥ १९५॥

बद्धे तु भेद्यलिङ्गः स्यादिति शब्दविदो विदुः।
आसक्तमन्धकारे क्ली त्रि त्वासज्जनकर्मणि॥ १९६॥

आयसं त्वयसि क्लीबमयःसम्बन्धिनि त्रिषु।
आविकस्तु नृलिङ्गः स्यादाविरोमजकम्बले॥ १९७॥

अविसम्बन्धिनि त्रिः स्यादाभीत*स्तु द्वयोरयम्।
मर्त्यजात्यन्तरे विप्रादुग्रस्त्रीजनिते त्रि तु॥ १९८॥

---

१. [illegible]

---

* '[illegible]' (पृ. ७२. श्लो. ५) इति तु वैजयन्ती।

**ज्ञेयो**ऽभिनवमृत्पात्रे प्रीतेऽप्या**ख्यात**मित्यदः ।
क्लीबं तिङन्ते त्रिस्तूक्तेऽ**थाचितं** स्यान्नपुंसकम् ॥ १९९ ॥

तुलाविंशतिरूपाणां भाराणां दशके स्मृतम् ।
ना तु शाकटभारे स्यान्निश्चिते त्वभिधेयवत् ॥ २०० ॥

स्या**दातिथ्य**मतिथ्यर्थे त्रिः पुमांस्त्वतिथौ मतः ।
**आचार्य** उपनीत्यादिकारिणि स्यान्नृलिङ्गकः ॥ २०१ ॥

मन्त्रव्याख्याकृतीत्येक आचार्या तु स्त्रियामियम् ।
स्वतो या स्यादुपाध्याया तस्यां भार्या तु या भवेत् ॥ २०२

आचार्यस्य भवेत् तस्यामाचार्यानी स्त्रियां पुनः ।
ज्ञेया यवाग्वा**माश्राणा** पक्के त्वन्यत्र भेद्यवत् ॥ २०३ ॥

क्षीराद्य[1] हविषश्चापि स्यादथो **आशरो** द्वयोः ।
राक्षसे शरसम्बन्धहीनसम्बन्धिनि त्रिषु ॥ २०४ ॥

**आशिर**स्तु पुमान् विष्णौ सूर्ये वह्नौ च भोजने ।
तथा क्षीरविकारे स्यादथ बह्वाशिनि त्रिषु ॥ २०५ ॥

*'नाशिरं दुह्' इत्यत्र चिन्त्योऽर्थोऽ**थाशुगः** पुमान् ।
अर्के वायौ शरे त्रिस्तु शीघ्रगेऽथ नृलिङ्गकः ॥ २०६ ॥

**आलिङ्गो** वाद्यभेदे स्यादित्यूचे शाकटायनः ।
आलिङ्गने च त्रिषु तु स्यादालिङ्गस्य योगिनि ॥ २०७ ॥

**आलिङ्ग्यः** पटहे पुंसि मध्यमे भेद्यवत् पुनः ।
आलिङ्गनीये विज्ञेय **आञ्जनः** पुनरुच्यते ॥ २०८ ॥

१. 'ज्यहविषश्चापि' ग. पाठः.

* अयं च प्रयोगः ऋग्वेदे. ३. अष्टके. ५३. सूक्ते. १४. मन्त्रे दृश्यते । तत्र आशिर सोममिश्रणयोग्यं पय इति तद्भाष्यम् ।

पुंसि सप्तदशारत्नेर्यूपस्य स्याच्चतुर्थके।
आदितः स्यादरत्नौ च तथा चाञ्जन एव च ॥ २०९ ॥
त्रिषु त्वञ्जनसम्बन्धिन्यथ स्त्री मत्तवारणे।
आलम्बमालम्बने तु पुंस्यालस्यं तु नप्यदः ॥ २१० ॥
अलसत्वेऽलसे तु त्रिराचारस्तु पुमानयम्।
चारित्रे स्त्री तु शक्तीनां नवानां शार्ङ्गिणः क्वचित् ॥ २११ ॥
शक्तौ तदा स्यादाचारा स्यादासारस्तु पुंस्ययम्।
सार्थे स्याद् वेगवद्वर्षे नृपाणां च सुहृद्बले ॥ २१२ ॥
सैनिकानां प्रसरणे प्रसृतौ च स्त्रियां पुनः।
आसारी स्यात् स्थलेऽथ स्यादाक्षिको नरलिङ्गकः ॥ २१३ ॥
व्याधौ दीव्यति तु त्रि स्यादक्षैरादित्यवाक् तु ना।
त्रिविक्रमावतारे स्याद् विष्णोश्च द्वादशस्वपि ॥ २१४ ॥
देवतागणभेदस्थेष्वर्के देवे तु स द्वयोः।
अदित्यादित्ययोः पुत्रेऽप्येष तु स्यात् त्रिषु स्मृतः ॥ २१५ ॥
अदित्यादित्यसम्बन्धिन्यथ स्त्री रजसि स्मृतम्।
आभीलं स्त्री भवेत् कष्टे त्रि तु तद्वति भीकरे ॥ २१६ ॥
आग्नीध्रस्तु पुमानृत्विग्विशेषेऽथ नपुंसकम्।
अग्निधिष्ण्यविशेषे स्यादाग्नीध्री तु स्त्रियामियम् ॥ २१७ ॥
अग्निकार्येऽथ पुंसि स्यादाह्निको ग्रन्थकारिणाम्।
प्रपाठकाख्ये ग्रन्थस्यावच्छेदे भेद्यवत् पुनः ॥ २१८ ॥
अहर्निर्वृत्तकादौ स्यात् स्त्री तु नित्यक्रियाशने।
इत्याह रभसः प्राज्ञ आधेयं तु नपुंसकम् ॥ २१९ ॥
अग्न्याधाने निधेये तु त्रिराधर्षति च।
आदेशके त्रिरादेष्टा नाभ्यर्थितानि स्मृतः ॥ २२० ॥

---

१. 'ष्वे' ग. पाठः.

**आत्माशी** तु द्वयोर्मत्स्ये त्रि तु स्यादात्मभक्षिणि ।
**इल्वका** मृगशीर्षाख्यनक्षत्रे स्त्री तया युते ॥ २२१ ॥
कालमात्रे च नप् त्वेतत् सामभेदेषु केषुचित् ।
व्यापके तु व्यथ द्वे स्यादि**ल्वलो** मत्स्यरक्षसोः ॥ २२२ ॥
यूपे तु पुंसीत्यपरे भ्रान्तिमूलास्तु केचन ।
मृगशीर्षाख्यनक्षत्रशिरोदेशस्थितोडुपु ॥ २२३ ॥
इल्वलाः स्त्रिय इत्येवमभाषिषत तन्मृषा ।
**इष्वासो** न स्त्रियां चापे नप् त्विषोरसने त्रि तु ॥ २२४ ॥
इषोः क्षेप्तर्यथ पुमा**निषिरो** जातवेदसि ।
ऐषिराख्यस्य साम्नश्च द्रष्टरि स्यादिषावपि ॥ २२५ ॥
तृणे तु क्ली त्रिषु पुन**रिरिणं** शून्य ऊषरे ।
क्लीबं तु केचिन्मन्यन्ते क्लीबं दुर्गे वनेऽपि च ॥ २२६ ॥
**इत्वरं** गत्वरे त्रिः स्यात् पुंश्चल्यां त्वित्वरी स्त्रियाम् ।
**इषीकास्तु** नृभूम्नि स्युर्दक्षिणापथवर्तिनि ॥ २२७ ॥
नीवृद्भेदे तृणस्तम्बे तूलिकायां त्वियं स्त्रियाम् ।
इषीका तृणजातौ तु शाकटायन उक्तवान् ॥ २२८ ॥
हलायुधस्य स्खलनमिषीका काश इत्यदः ।
**इङ्गुदी** तापसतरौ स्त्रियां पुंसि च भाषितः ॥ २२९ ॥
ज्योतिष्मत्यां स्त्रियामेव स्या**दिक्ष्वाकुः** पुनर्नरि ।
वैवस्वतमनोः पुत्रे राजन्ये मदनद्रुमे ॥ २३० ॥
तिक्तालाब्वां पुनः स्त्री स्यादि**रा**[1]विरया युते ।
भेद्यलिङ्गो नदीमात्रे पुनः स्त्री स्यादिरावती ॥ २३१ ॥
वाह्लीकदेशप्रथितनदीभेदेऽप्यथ स्त्रियाम् ।
**ईषिका** हस्तिनो नेत्रकूटे स्याद् भेद्यवत् पुनः ॥ २३२ ॥

---

१. 'षि' क. ख. ङ. पाठः. २. 'त्तलाया पु' ग. पाठः.

**ईषीको** गन्तृहिंसित्रोर्द्रष्टरि स्यात् तु म मथे।
**ईश्वरो** ना महादेवे स्यात् तथा शब्दगोचरतौ ॥ २३३ ॥
त्रिस्तु स्वामिनि तत्रापि यदा स्त्र्यर्थस्तदेश्वरा।
पार्वत्यां तु स्त्रियां विद्याद् द्रू रूपे ईश्वरीश्वरा ॥ २३४ ॥
**ईशानो** ना महादेवे पार्वत्यां त्वाह यादवः।
ईशानीति स्त्रियां त्रिस्तु प्रभौ तत्र यदा स्त्रियाम् ॥ २३५ ॥
ईशाने[2]ति तदा भाव्यमिति शाब्दिकनिश्चयः।
**उत्सेधो** मकुटच्छत्रध्वजोष्णीषतनूषु ना ॥ २३६ ॥
'प्रसोमदेव'वर्गस्य चतुर्थे साम्नि चोत्सवौ।
अत्र तूच्छास्त्रमाचष्टे रभसः स्वमनीषया ॥ २३७ ॥
नृशण्डालङ्गमुच्छ्राय शरीरे तु नपुंसकम्।
**उत्पलं** त्वस्त्रियां केचिद् विदुः कुवलयेऽथ नपुं ॥ २३८ ॥
कुष्ठाख्यभेषजेऽथ स्यादुपरः पुंसि वारिदे।
यूपस्य त्वक्षते मूले क्लीं स्त्री स्यादपरा दिशि ॥ २३९ ॥
उपलस्तु पुमान् मेघे पाषाणे पुन्नपुंसकम्।
मणौ च शर्करायां तु दृषत्पुत्रेऽपि च स्त्रियाम् ॥ २४० ॥
उपला सज्जनस्त्वाह दिशि चाथो(पलो[1]ल्पो†)ऽस्त्रियाम्।
आदिसर्गस्थभूतानामन्नभेदे नपि त्ववः ॥ २४१ ॥
गुल्मिन्यां सलिले काष्ठेऽप्यूर्ध्वफलाह्वये पनः।
स्तम्बभेदे कलापाख्यमुनेः शिष्यान्तरे च ना ॥ २४२ ॥
हलायुधेन तूक्तं यदुलपा बल्बजा इति
तत्प्रमादकृतं विद्यादुडुपं तु प्लवे ...

1. 'षि' क. पाठः. 2. 'ना' ... पाठः. 3. 'पला व' ख. ग. पाठः.

† 'चन्द्रे पुंस्युलपो न स्त्री गुल्मिन्यां ना तृणान्तरे' इति मेदिनी।

ना चन्द्रेऽथोटजोऽस्त्री स्यादृषीणां पर्णवेश्मनि ।
गृहमात्रेऽप्यु(दि ? द)ञ्चस्तु पुमान् वादनदण्डके ॥ २४४ ॥
कोणाख्ये परपुष्टे तु द्वे उदात्तस्तु पुंस्ययम् ।
उच्चैःस्वरे तद्वति तु महति नि च भेदवत् ॥ २४५ ॥
उद्भ्रान्तो निर्मदगजे पुमानुच्छर्दिते त्रिषु ।
उद्भिदं कूप्यलवणे क्लीबं ना तु जलोद्गमे ॥ २४६ ॥
कूपादेस्त्रिषु तूद्भिज्जे तरुगुल्मादिवस्तुनि ।
उल्मुकं स्यादलाते स्त्री पूर्वराजान्तरे तु ना ॥ २४७ ॥
उत्तंसस्तु नृशण्डे स्यात् कर्णपूरेऽपि शेखरे ।
उत्तरं प्रतिवाक्ये क्ली त्रिस्तूर्ध्वोदीच्ययोस्तथा ॥ २४८ ॥
श्रेष्ठे चाप्यजयन्स्त्वाह परे चैतत् स्त्रियां पुनः ।
कौबेर्यां दिशि ना तु स्यान्निम्नादुत्तारणे तथा ॥ २४९ ॥
उत्तमस्तु विभक्तीनां पाश्चात्यत्रितये त्रि तु ।
उत्कृष्टे दुग्धिकायां तु स्त्रियां स्यादुत्तमाथ ना ॥ २५० ॥
उद्घनो यत्र निक्षिप्य काष्ठे काष्ठस्य तक्षणम् ।
तत्रोद्धतघनादौ तु त्रिरुदक्या तु सा स्त्रियाम् ॥ २५१ ॥
ऋतुमत्यां प्रियाचारशूद्रे तु स पुमान् मतः ।
उदकार्हे पुनस्त्रि स्यात् तथैवोदकसाधुनि ॥ २५२ ॥
उपस्थोऽस्त्री भगे मेढ्रेऽप्युत्सङ्गेऽप्यौरसे पुनः ।
उरस्यो द्वे सुते ना तु स्तने त्रिस्तूरसा सह ॥ २५३ ॥
एकदिके तत्र साधावुरोभव उरोहिते ।
उचितं तु स्वभावे क्ली निश्चिताभ्यस्तयोः पुनः ॥ २५४ ॥
त्रिर्युक्तेऽनुमते चाथ प्रोक्तवाञ्छाकटायनः ।
योग्ये चिरानुयाते चेत्यथोद्यानं नपुंसकम् ॥ २५५ ॥

१. 'टि' क. ख. ङ. पाठः. २. 'वरपुष्पस्तु' ग. पाठः.

चुल्ल्यामुद्गमने च त्रिः पुनः स्यादुद्गते तथा ।
उष्णीषमस्त्री मकुटे शिरोवेष्टेऽप्यथ द्वयोः ॥ २५६ ॥
उच्छीतष्टिष्टिभे स्वप्ने पुनर्नाथोपबर्हणे ।
उच्छीर्षं क्ली त्रिषु पुनरुन्मूर्धनि पुमान् पुनः ॥ २५७ ॥
उदारः काककङ्गौ स्यात् त्रिस्त्वग्राम्यमहात्मनोः ।
दानशौण्डेषु चैतेषु स्त्र्यर्थे वृत्तिर्यदा तदा ॥ २५८ ॥
उदारा चाप्युदारी चेत्येवं रूपद्वयं भवेत् ।
उदरं तु न ना ज्ञेयं जठरे क्ली तु संयुगे ॥ २५९ ॥
उद्दामो वरुणे पुंसि त्रिषु तु स्याद् विशृङ्खले ।
उल्लोलः पुंसि कल्लोले भृशंलोले तु भेद्यवत् ॥ २६० ॥
उन्मत्तः पुंसि धुर्धूरे तत्फले क्ली त्रिषु त्वयम् ।
उन्माद(स्त्रिषु ? वति) पूगस्य पुनः क्लीबं फले भवेत् ॥ २६१ ॥
उद्वेगमिति सिंहोक्तं वैजयन्त्यां तु खण्डिते ।
पूगस्य फल इत्युक्तं पुमांस्तूद्वेजने त्रि तु ॥ २६२ ॥
भवेदुद्गतवेगादावुष्णिका तु स्त्रियामियम् ।
यवाग्वामुष्णकस्तु त्रिर्दक्षे क्लीबं तु चेतसि ॥ २६३ ॥
उच्चलं चापभेदे च त्रिषु तूच्चलितर्यदः ।
उद्धर्षस्तु महे पुंसि त्रिषु तूत्कटहर्षके ॥ २६४ ॥
उन्मदस्तु पुमान्कूर्पे कच्छपे तु द्वयोरयम् ।
उत्सृष्टस्त्रिषु दत्ते स्यात् त्यक्ते चाथ नृलिङ्गकः ॥ २६[illegible]
शाकजातिविशेषस्य मारिषाख्यस्य भेदके ।
देवमारिषसंज्ञेऽथो उन्माथः पाशयन्त्र[illegible] [illegible] ॥
ना हिंसायामथोन्मार्गे त्रिः [illegible] जयोऽब्रवीत् ।
उत्साहोऽध्यवसाये ना [illegible] च रभसोऽब्रवीत् ॥ २६७ ॥

१. 'च्छि' क ङ. पाठः. २. 'शं' क ग. ङ. पाठः. ३. 'गे स्यात् पु' ख. पाठः.
४. 'धु' ख. ग. ङ. पाठः. ५. 'हो व्यव' क. ख ग. पाठः.

उत्साहा तु स्त्रियामुक्ता वैजयन्त्यां मनीषिणा ।
आरकूटाह्वये लोहभेदेऽथोत्कीर्ण इत्ययम् ॥ २६८ ॥

जलाशयविशेषे ना पुरीसंज्ञेऽथ स त्रिषु ।
भवेदुल्लिखितेऽथार्यम्(?)उपेन्द्रस्तु पुमानयम् ॥ २६९ ॥

विष्णावुपगते त्विन्द्रं त्रिरथो उच्छुनः पुमान् ।
वैशाखमासे त्रिषु तु स्यादुद्गतशुनादिके ॥ २७० ॥

उद्गता विषमे वृत्तविशेषे स्त्री त्रि तूत्सवे ।
उत्पिबो द्वे चकोराख्यपक्षिण्युत्पातरि त्रिषु ॥ २७१ ॥

उत्करस्तु पुमान् पुञ्जे यज्ञभूमेश्च कुत्रचित् ।
प्रदेशभेदे त्रिषु तु स्यादुद्गतकरादिके ॥ २७२ ॥

उत्कटं तु भवेत् क्लीबं योगिनामासनान्तरे ।
उद्भटक्लीबयोस्तु त्रिरुदीच्यं तु नपुंसकम् ॥ २७३ ॥

ह्रीबेरे त्रिः पुनरुदग्भवादौ स्यात् पुमान् पुनः ।
उल्लम्बने स्यादुद्बन्धो मर्त्यजात्यन्तरे पुनः ॥ २७४ ॥

खनकात् क्षत्रियाजाते† द्वे उत्तप्तं तु नप्यदः ।
शुष्कमांसे त्रिषु पुनस्तप्ते दीप्तेऽप्यथो पुमान् ॥ २७५ ॥

उर्वारुश्चिर्भिटे स्त्री तु कर्कट्यामेतयोः पुनः ।
फले क्लीबमथोद्गाता पुमान् स्यादृत्विगन्तरे ॥ २७६ ॥

उच्चैर्गातरि तु त्रि स्यादुन्नेता त्वृत्विगन्तरे ।
पुमानुन्नायके तु त्रिरूहितर्यप्यथो पुमान् ॥ २७७ ॥

उदर्चिदग्नौ त्रि पुनरुद्गतार्चिष्यथो नपि ।
ऊर्दरं स्यादावपने भेद्यलिङ्गं तु दुर्बले ॥ २७८ ॥

१. 'ल्पम्' क. पाठः. २. 'र्यो' क. पाठः. ३. 'ल' ख. पाठः.

† 'उद्बन्धं खनकाच्छूद्रा' (पृ. ७५. श्लो. ४१) इति तु वैजयन्ती ।

ऊधस्यं तु नपि क्षीरे त्रिषु तूधोभवादिके ।
ऊरव्यस्तु द्वयोर्वैश्ये त्रिषु तूरुभवे भवेत् ॥ २७९ ॥
ऊरुजस्तु द्वयोर्वैश्य ऊरुजाते पुनस्त्रिषु ।
ऊषणो ना कटुरसे विज्ञेयस्त्रि तु तद्वति ॥ २८० ॥
क्लीबं तु मरिचे शुण्ठावूषणाख्ये च कर्मणि ।
पिप्पल्यां तूषणा स्त्री स्यादूर्णायुस्तु द्वयोः क्रिमौ ॥ २८१ ॥
मेषाख्यपशुजातौ स्यान्ना तु तल्लोमनिर्मिते ।
कम्बले क्षीणभङ्गे[1] च रभसः प्रोक्तवानमुम् ॥ २८२ ॥
वेदकीर्तितगन्धर्वभेदेऽथोर्जस्वति त्रिषु ।
ऊर्जस्वत् स्त्री तु नद्यां स्यादूर्जस्वत्यथ ना भवेत् ॥ २८३ ॥
ऋषभो वृषभे कर्णरन्ध्रे नक्रस्य पुच्छके ।
स्वराणामपि सप्तानां षड्जादीनां क्वचित् स्वरे ॥ २८४ ॥
एकाहक्रतुभेदे च सामभेदेषु केषुचित् ।
अर्हत्तीर्थकराणां च कस्मिंश्चिन्मत्तहस्तिनि ॥ २८५ ॥
श्रृङ्गिसंज्ञे च भैषज्ये केचिच्छ्रेष्ठेऽपि मन्वते ।
अन्ये शब्दात् परः श्रेष्ठ इत्यूचू रभसः पुनः ॥ २८६ ॥
वराहपुच्छे च स्त्री तु नराकारस्त्रियां भवेत् ।
ऋषभा शूकशिम्ब्यां च रभसेन प्रकीर्तिता ॥ २८७ ॥
क्लीबे त्वृजीकं वज्रे स्यादृषिभेदे परे नरि ।
एधितं तु वने क्लीबलिङ्गमौणादिका विदुः ॥ २८८ ॥
ना स्याद् गिरिसरिद्वाहेऽथैकाङ्गो ना बुधग्रहे ।
त्रिस्त्वेकावयवे काणे त्वेकाक्षो भेद्यलिङ्गकः ॥ २८९ ॥

---

1. 'यौ चि' क. पाठः.

---

[1] 'ऊर्णायुर्ना ऊर्णनाभे मेषकम्बलमेषयोः' इति मेदिनी ।

द्वयोस्तु वायसे विद्यादेकाहं त्वेकवासरे ।
क्ली पुमांस्त्वेकदिवससाध्ययज्ञेषु कीर्तितः ॥ २९० ॥

ज्योतिष्टोमादिषु पुमान् पुनर्नारङ्गपादपे ।
एलकस्त्रि त्वेलितरि स्यान्मेषे त्वेडका द्वयोः ॥ २९१ ॥

त्रिः कुत्सितादिबधिरे नाराचे पुनरेषणः ।
नाराच्यां त्वेषणी स्त्री स्यात् कुस्तुम्बुर्यां तु सैषणा ॥ २९२ ॥

इच्छायां क्लीच्छतेर्हेतुव्यापारे नपुंस्त्रियोर्यदा ।
एषणं चैषणा चेति स्यादथो ए(नं[2] ? त)शः पुमान् ॥ २९३ ॥

इन्द्रे चन्द्रे तथाध्वर्यौ द्वयोस्तु स्यात् तुरङ्गमे ।
एधतुस्तु स्त्रियां लक्ष्म्यां ना त्वग्नौ पुरुषेऽपि च ॥ २९४ ॥

एकदृङ् ना यमे काके पुनर्द्वे त्रि तु काणके ।
ए(नं ? त)शास्त्वश्मनि द्वे ना त्वग्नौ ब्रह्मणि होतरि ॥ २९५ ॥

ऐश्वरं क्ली चतुर्हस्तप्रमाणे भेद्यवत् पुनः ।
सम्बन्धिनीश्वरस्य स्यादोदनस्त्वस्त्रियामयम् ॥ २९६ ॥

अन्ने क्लीबं तु मेघे स्यात् काञ्जिके तु पुमानयम् ।
ओलकस्तु पुमाञ्छाके काणमारि[3]षसंज्ञके ॥ २९७ ॥

मारिषाख्यस्य शाकस्य जातिभेदे स्त्रियां पुनः ।
ओलिका धान्यभेदे स्यान्नीवाराख्येऽथ नप्यदः ॥ २९८ ॥

औजसं काञ्चनेऽथ स्यादोजःसम्बन्धिनि त्रिषु ।
औरसो द्वे स्वजाते स्यात् पुत्रे ना सूक्ष्मजीरके ॥ २९९ ॥

उरःसम्बन्धिनि त्रिः स्यादौरभ्रस्तु पुमानयम् ।
कम्बले मेषरोमोत्थे मेषसम्बन्धिनि त्रिषु ॥ ३०० ॥

कल्याणं तूत्सवे क्लीबं मङ्गलेऽक्षयरुक्मयोः ।
हलायुधः स्वर्णपत्रे[4] पठत्यनतिसूक्ष्मदृक् ॥ ३०१ ॥

---

१. 'क' क. ख. ङ. पाठः. २. 'नशा तु शुनि' ख, 'कशस्तु शुनि' ङ, 'कशास्तु शुनि' क. पाठः. ३. 'री' ग. पाठः. ४. 'र्णे' ग. पाठः.

श्रुतौ च स्त्री तु **कल्याणी** क्षमागिरिजयोस्त्रि तु ।
शुभयुक्ते शाश्वतस्तु वदत्यक्षयमात्रके ॥ ३०२ ॥
एतयोरर्थयोः स्त्रीत्वे यदा वृत्तिस्तदा द्वयम् ।
कल्याणा चापि कल्याणीत्यथ पुंसि चिरन्तने ॥ ३०३ ॥
कचिदाङ्गिरसे मर्त्ये **कलापस्तु** पुमानयम् ।
काञ्चीतूणीसमूहेषु भूषणे बर्हिबर्हके ॥ ३०४ ॥
कलापी तु स्त्रियामेषा कणिशेऽन्यस्तु कश्चन ।
ब्रूते कणिशपूलेऽथ **कनकः** पुंसि चम्पके ॥ ३०५ ॥
नागकेसरधुर्धूरकिंशुकेषु बृहस्पतौ ।
क्लीबं तु काञ्चनेऽत्रोक्तवृक्षाणां फलपुष्पयोः ॥ ३०६ ॥
**कपिलस्त्वृ**षिभेदेऽग्नौ ना कडाराख्यवर्णके ।
तुरुष्काख्ये च निर्यासे बभ्रुवर्णे ककुद्मति ॥ ३०७ ॥
कडारवर्णयुक्ते तु त्रि स्त्री तु कपिला द्रुमे ।
शिंशपासंज्ञके बभ्रुवर्णायां सुरभावपि ॥ ३०८ ॥
ब्रह्मरीतिसमाख्ये च लोहभेदे जलौकसाम् ।
जातिभेदे द्वादशानां तस्योक्तं लक्षणं यथा ॥ ३०९ ॥
मनःशिलारञ्जिताभ्यां पार्श्वाभ्यामिव लक्षिता ।
पृष्ठे स्निग्धा मुद्गवर्णैर्त्र्यम्निदिग्वासिहंस्तिनः ॥ ३१० ॥
करिण्यां विद्युति तथा हरेण्वाख्ये च भेषजे ।
द्वयोस्तु शुनि ना तु स्यात् **कपिशः** श्यावसंज्ञके ॥ ३११
वर्णे तद्वति तु त्रिः क्ली मध्वासव इति श्रुते ।
मद्यभेदेऽथ **कलशः** कुम्भे लिङ्गद्वयान्वितः ॥ ३१२ ॥
स्थाल्यां तु दधिमन्थन्यां कलशी स्त्रीति केचन ।
द्रोणाख्यपरिमाणे तु पुमानथ **करीरवाक्** ॥ ३१३ ॥

---

१. 'दत्ते' ङ, 'मंते' क. पाठः. २. 'र्ण' क. ग. ङ. पाठः. ३. 'त' क. ख. ङ. पाठः.
४. 'त्व' ग. पाठः.

वंशाङ्कुरे घटे चापि कुकराख्ये च पादपे ।
करीरी तु स्त्रियां हस्तिदन्तमूलेऽथ भेद्यवत् ॥ ३१४ ॥

करिणः प्रेरयितरि करकस्तु पुमानयम् ।
कमण्डलौ च कर्कर्यां शण्डे त्वप्याह कश्चन ॥ ३१५ ॥

करङ्कः तु पुमानाम्रे दाडिमेऽप्येतयोस्तु नप् ।
फले स्त्रीपुंसयोस्तु स्यात् करका जलदोपले ॥ ३१६ ॥

द्वयोस्तु पक्षिभेदे स्यादित्याह रभसः कविः ।
कटकस्त्वास्त्रियां शैलनितम्बे वलयेऽपि च ॥ ३१७ ॥

सैन्ये च राजधान्यां चामरदत्तस्तु पुंस्यमुम् ।
हस्तमुष्टावभाषिष्ट स्त्रियां तु कटिका कृते ॥ ३१८ ॥

सूत्रस्यूतशलाकाभिरायुधस्य निवारणे ।
परिमण्डलसंस्थानद्रव्येऽथो कण्टकोऽस्त्रियाम् ॥ ३१९ ॥

वृक्षस्यावयवे सूचिसदृशे क्षुद्रविद्विषि ।
रोमाञ्चे वेणुवृक्षे च कण्टका तु स्त्रियामियम् ॥ ३२० ॥

कण्टकाख्ये[1] कीटभेदे ह्यनुवाकस्तु कण्टिका[2]* ।
कर्कटो द्वे कुलीरे स्यात् कङ्कसंज्ञे च पक्षिणि ॥ ३२१ ॥

ना तु राशौ चतुर्थे स्यात् कचिच्चावयवान्तरे ।
आरोह्यायास्तुलायाः[3] स्यात् कर्कशस्तु त्रिषु स्मृतः ॥ ३२२ ॥

कठिने प्रखरस्पर्शे निर्दये साहसप्रिये ।
ना तु खड्गे तथान्ये च काम्पिल्याख्यमहीरुहे ॥ ३२३ ॥

पटोलसंज्ञवल्ल्यां[4] च स्यादिक्षौ चाथ कर्कशी ।
स्त्रियां स्याद् बदरीभेदे नरकोलेति विश्रुते ॥ ३२४ ॥

कर्करस्तु पुमानस्थ्नि पाषाणे दर्पणेऽपि च ।
दृढे तु भेद्यलिङ्गः स्यादित्याहुरथ कर्करी[5] ॥ ३२५ ॥

१. 'ख्य' ग. पाठः. २. 'ण्ट' ग. पाठः. ३. 'यां तु' क. ग. पाठः. ४. 'यां' क. ग. ङ. पाठः. ५. 'म्ब' ग. पाठः.

* कोशान्तरेष्वनुवाकवाची 'कण्डिका' इति समर्थ्यते ।

स्त्रियां स्यात् करकेऽथ क्लीं **कङ्कणं** करभूषणे ।
तथा भूषणमात्रे च सूत्रे त्वजय उक्तवान् ॥ ३२६ ॥
**कङ्कणी** तु स्त्रियां क्षुद्रघण्टायामथ **कङ्कतः** ।
केशमार्जनकद्रव्ये त्रयी द्वे काकजातिषु ॥ ३२७ ॥
चतसृष्वेकजातौ स्यात् **कमलं** तु नपुंसकम् ।
पद्मे रक्ताम्बुजे तोये स्थौणेये छुरिकादिनः ॥ ३२८ ॥
हेमाद्यैश्चित्रिते चर्मण्यथ स्त्री कमला श्रियाम् ।
मृगे तु द्वे **कश्मलं** तु क्लीबं मोहपुरीषयोः ॥ ३२९ ॥
मलीमसे तु त्रिः क्ली तु **कललं** चर्मकोशके ।
अस्थन्यप्यथ न स्त्री स्याद् रेतसो गर्भतां यतः ॥ ३३० ॥
स्यादवस्थान्तरे सिंहवैजयन्त्यौ तु पेठतुः ।
उल्बेऽथ ताम्रकलशे किट्टे लोहमलेऽपि च ॥ ३३१ ॥
**कलिलं** तु नपि ज्ञेयं समूहे कायपापयोः ।
गाम्भीर्ये सङ्गतेऽप्यात्माधिष्ठिते शुक्रशोणिते ॥ ३३२ ॥
गहने तु त्रिषु ज्ञेयं **कलुषं** तु नपि ह्यघे ।
सूक्ष्मैलायां तु कलुषी स्त्री त्रिषु त्वाविलद्रवे ॥ ३३३ ॥
महिषे तु द्वयोर्ना तु कृष्णे वर्णेऽन्यैकीर्तितः ।
तद्युक्ते भेद्यवदथो **कल्माषः** कृष्णपाण्डरे ॥ ३३४ ॥
ना मिश्रवर्णेऽन्ये त्वाहुश्चित्रवर्णेऽथ भेद्यवत् ।
वर्णयोरेतयोरेकवर्णयुक्ते नपि त्वदः ॥ ३३५ ॥
आरण्यके सामभेदे 'कया नश्चित्र' इत्यृचि ।
सर्पसामाह्वये गीते **कालिङ्ग**स्तु नृपान्तरे ॥ ३३६ ॥
नापत्येषु बहुष्वस्य भूम्नि चैषां च नावृति ।
द्वे तु धूम्याटसंज्ञे स्यात् पक्षिभेदेऽथ नपुंस्त्रियोः ॥ ३३७ ॥

1. 'पि' म. पाठः

कलिङ्गा कुटजाख्यस्य फले वृक्षस्य यत् पुनः ।
दृश्यतेऽजयकोशेऽत्र कलिङ्गाख्येत्युपस्थिते ॥ ३३८ ॥
तिक्तकेशर इत्येवं ता[2]चिन्त्यं कदली पुनः ।
स्त्रियां स्यात् करिणां केतौ चर्मयोनौ मृगान्तरे ॥ ३३९ ॥
तस्य लक्षणमप्युक्तं मृगज्ञैः पूर्वसूरिभिः ।
कदली तु बिले शेते मृदुरूक्षोच्चकर्बुरैः ॥ ३४० ॥
नीलाग्रै रोमभिर्युक्ता सा विंशत्यङ्गुलायता ।
इत्येवं नृस्त्रियोस्तु स्यात् कदलः कदलीति च ॥ ३४१ ॥
रम्भायां स्यात् त्रिलिङ्गयां तु कन्दली नवपल्लवे ।
झाटभेदे कच्छरूढेऽजिनयोनिमृगान्तरे ॥ ३४२ ॥
तस्य लक्षणमप्युक्तं मृगज्ञैः पूर्वसूरिभिः ।
कन्दली तु श्यामवर्णा ह्रस्वायामा महोदरी ॥ ३४३ ॥
इत्येवं रभसस्त्वाह तं कलापोपरागयोः ।
स्त्रियां तु क्षणिका ज्ञेया विद्युति क्षणवत्तु यत् ॥ ३४४ ॥
तत्र त्रिः क्षणमात्रावस्थायिवस्तुनि चाथ सः ।
राजन्ये क्षत्रियो द्वे स्यात् तत्र योनियुते यदा ॥ ३४५ ॥
अर्थे वृत्तिस्तदा द्वे स्तः क्षत्रिया क्षत्रियाण्यपि ।
पुंयोगात् तु स्त्रियां वृत्तौ क्षत्रियीत्यथ न स्त्रियाम् ॥ ३४६ ।
कषायस्तुवराभिख्यरसे क्वाथरसे तथा ।
निर्यासे सौरभे च स्यादनुरागाङ्गरागयोः ॥ ३४७ ॥
रागद्रव्ये रक्तवर्णे रक्तपीतद्वयात्मके ।
मिश्रवर्णे तथा क्रोधलोभादौ भेद्यवत् पुनः ॥ ३४८ ॥
रक्तवर्णयुते रक्तपीतवर्णद्वया[3]न्विते ।
सुरभौ तुवराख्येन रसेन च समन्विते ॥ ३४९ ॥

'प्यु' क. पाठः. २. 'व' क. ख. ङ. पाठः. ३. 'त्मके' क. ग. पाठः.

**कपालो**ऽस्त्री क्वचित् स्त्री च कपालीति शिरोस्थनि ।
घटादिशकले केचित् पुनः शकलमात्रके ॥ ३५० ॥

**कटाहो** ना कर्णवति विशाले लोहभाजने ।
द्वीपभेदे च महिषे पुनर्द्वे अथ भेद्यवत् ॥ ३५१ ॥

**करालो** दन्तुरे तुङ्गे विशाले विकृतेऽपि च ।
कडारवर्णयुक्ते च कराली तु स्त्रियामियम् ॥ ३५२ ॥

अग्निजिह्वाविशेषे च दंष्ट्राभेदे च भोगिनः ।
पार्वत्यामपि ना तु स्यात् कालमाले गुणे तथा ॥ ३५३ ॥

कर्डार इति विख्याते चर्मकोशे तु नप्यदः ।
अविश्वास्योऽत्र रभसो वाक्यमेतदधीतवान् ॥ ३५४ ॥

**कलह**स्तु पुमान् खड्गकोशे भण्डन एव च ।
क्लीबं युद्धे च रागे चेत्येवं चैतदसाम्प्रतम् ॥ ३५५ ॥

**कडारं** तु जले क्लीबं रूक्षताशूलयोस्तु ना ।
तथा कपिलवर्णे च तद्युक्ते त्वभिधेयवत् ॥ ३५६ ॥

विषमीभूतदशने निःसारेऽपि द्वयोः पुनः ।
आचष्टे रभसो दासे शब्दवेद्यथ नप्यदः ॥ ३५७ ॥

**कण्डारं** रक्तपद्मे स्याद् वर्णभेदे तु पुंस्ययम् ।
सितकाचरमिश्रे स्यात् त्रिस्तु तद्वति कः पुनः ॥ ३५८ ॥

काचरो वर्णभेदोऽयं कृष्णधूमलमिश्रकः ।
पुन्नपुंसकयोस्तु स्यात् सन्नाहे **कवचं** तथा ॥ ३५९ ॥

रभसस्त्वाह पटहे नान्दीवृक्षे च पुंस्यमुम ।
**कर्मार**स्तु पुमान् वेणावयस्कारे द्वयोरथ ॥ ३६० ॥

**कङ्कारो** ना गृहे गूढे मणौ कश्चिदथ त्रिषु ।
अशोभनेऽथ **कवटं** क्लीबमुच्छिष्टभिस्सयोः ॥ ३६१ ॥

१. 'ह्रा' ग. पाठः .

मर्त्यजात्यन्तरे तु द्वे पुल्कसीशूद्रसम्भवे ।
क्रकरस्तु करीरद्रौ दीनक्रकचयोश्च ना ॥ ३६२ ॥

द्वयोस्तु पक्षिभेदे स्यादेतद्रभसभाषितम् ।
करटस्तु पुमान् बिल्वे गजगण्डेऽप्यथाब्रवीत् ॥ ३६३ ॥

रभसोऽमुं नवश्राद्धे शब्दवेदी द्वयोः पुनः ।
काके दुर्दुरुटे तु त्रिः कुङ्कुमे तु नपुंसकम् ॥ ३६४ ॥

करटा तु स्त्रियां दुःखदोह्यायां गवि नप् पुनः ।
करोटं वस्त्रकोशे च कपाले शिरसस्तथा ॥ ३६५ ॥

द्वे तु भृत्ये घनाम्लायां ख्वागुल्यां स्यात् करोटिका ।
कर्पटो ना वर्णभेदे त्रिस्तु तद्वत्यथ द्वयोः ॥ ३६६ ॥

कितवेऽथ कपोतो ना वर्णभेदे त्रि तद्वति ।
द्वे तु पारावताभिख्यखगेऽन्यस्मिन्नपि क्वचित् ॥ ३६७ ॥

गृहप्रवेशनायोग्ये पक्षिभेदेऽथ कर्परः ।
पुमान् घटादिशकले कपालाख्ये शिरोस्थनि ॥ ३६८ ॥

कटाहे शस्त्रभेदे च वृक्षस्यावयवान्तरे ।
रसाञ्जने तु स्त्रीलिङ्गा कर्परीति विदुर्बुधाः ॥ ३६९ ॥

कर्पूरोऽस्त्री चन्द्रसंज्ञगन्धद्रव्ये स्त्रियां पुनः ।
कर्पूरी नागवल्ल्याख्यवल्लीभेदेऽथ कर्बुरम् ॥ ३७० ॥

क्लीबं स्वर्णे हरिच्छुक्लामिश्रवर्णे तु पुंस्ययम् ।
सिंहस्तु चित्र इत्याह त्रि तु वर्णसमन्विते ॥ ३७१ ॥

तद्वर्णयुक्तसुरभौ पुनः स्त्री कर्बुरा तथा ।
जलौकाजातिभेदे च सविषे तस्य लक्षणम् ॥ ३७२ ॥

या छिन्नोन्नतकुक्षिः स्याद् वर्मिमत्स्यवदायता ।
सविषा कर्बुरा नामेत्यथ स्यात् कच्छुरास्त्रिषु ॥ ३७३ ॥

१. 'वा' क. ङ. पाठः. २. 'पि' क. पाठः.

**पामाभिः** संयुते जन्तौ कच्छुरा तु स्त्रियामियम्।
शठ्यामप्यात्मगुप्तायां यवासे **कण्डुरस्तु** ना ॥ २७४ ॥
सूरणेऽथात्मगुप्तायां कण्डुरा स्त्री नृभूम्नि तु।
**कम्बोजा** देशभेदे स्यान्ना तु स्यात तस्य राजनि ॥ २७५ ॥
द्वयोस्तु तदपत्ये स्याद् गजभेदे च ना पुनः।
शङ्खेऽपि रभसेनोक्तः **कपर्दस्तु** पुमानयम् ॥ २७६ ॥
महादेवजटाजूटे जटाजूट इतीतरे।
जलजन्तुविशेषे तु वराटाख्ये द्वयोरथ ॥ २७७ ॥
**क्रमुको** ना पूगवृक्षे पट्टिकाख्ये च पादपे।
ब्रह्मदारुसमाख्ये च भद्रमुस्ते च नप् पुनः ॥ २७८ ॥
एषां प्रसूने **क्रमणं** पुनर्विद्यान्नपुंसकम्।
पादे क्रान्ते तथा द्वे तु तुरङ्गे **कन्दरा** पुनः ॥ २७९ ॥
त्रयी गिरेरवयवे दरीसंज्ञे द्वयोः पुनः।
स्यादुच्चजानुके भेदे मृगजातेरथो पुमान् ॥ २८० ॥
**कन्धरो** वारिदे ग्रीवासिरयोस्तु स्त्रियामियम्।
कन्धरा कथिता सद्भिः पुन्नपुंसकयोः पुनः ॥ २८१ ॥
क्षुद्रग्रामे द्रोणमुखसंज्ञे **कर्वट** इत्ययम्।
देशसन्धिषु संस्त्यायो यस्तस्मिन्निति शाकटः ॥ २८२ ॥
**कर्वरो** नाङ्क्लौ[1] देशे पापे च रभसोऽब्रवीत्।
द्वयोस्तु रक्षसि व्याघ्रे क्लीबं तु जलक[illegible]
सतृणाभ्यवहार्या तु रभसः शबले [illegible]
कर्वरी तु स्त्रियां भूमौ शिव[illegible] [illegible]ऽपः ॥ २८४ ॥
द्वे कूर्मे निधिभेदे तु पुं[illegible] [illegible]स्त्री तु कच्छपी।
वीणायां स्यात् सरस्वत्याः ऋषिभेदे तु **कश्यपः** ॥ २८५ ॥

---

1 'व' ग. पाठः.

ना द्वे तु कच्छपे त्रिस्तु मद्यपे **कम्बलस्तु** ना ।
कस्मिंश्चित् पार्वतीभक्ते रभसस्तूक्तवानमुम् ॥ ३८६ ॥

उत्तरासङ्गमात्रे च सास्नायां च गवामथ ।
रभसः सलिले क्लीबं रल्लके तु त्रिलिङ्गकम् ॥ ३८७ ॥

कम्बली स्त्री तु विज्ञेया सज्जनायां च हस्तिनः ।
**कल्पना** क्ली तु क्लृप्तौ स्याच्छेदने चाथ नपुंस्त्रियोः ॥ ३८८ ॥

क्रियायां स्यात् कल्पयतेरथ स्यात् **कर्षकः** पुमान् ।
अङ्गारके कृष्टरि तु भेद्यवच्च कृषीवले ॥ ३८९ ॥

**ककुदो**ऽस्त्री बलीवर्दस्कन्धयोर्मध्य उन्नते ।
प्रधाने राजचिह्ने च हस्तिनो मद एव च ॥ ३९० ॥

**कठिनं** तु कठोरे त्रिः कठिना तु स्त्रियामियम् ।
शुक्लधातुसमाख्ये स्यादित्याहुर्दृषदन्तरे ॥ ३९१ ॥

रभसो गुडशर्करेत्यमुमर्थमभाषत ।
**कमठः** कच्छपे द्विः स्याद् वामने भेद्यलिङ्गकम् ॥ ३९२ ॥

कूर्मास्थनि तु ना क्ली तु भिक्षापात्रेऽथ **कक्खटम्** ।
कठिने त्रिः कक्खटी तु शुक्लधातुसमाख्यके ॥ ३९३ ॥

पाषाणभेदे स्त्री त्रिस्तु **कनिष्ठो**ऽल्पतमेऽनुजे ।
तथा युवतमे स्त्री तु कनिष्ठाल्पतमाङ्गुलौ ॥ ३९४ ॥

क्ली तु भूलवणे कृप्यसंज्ञेऽथ **करजः** पुमान् ।
नखे करञ्जवृक्षे च क्ली तु व्याघ्रनखाह्वये ॥ ३९५ ॥

भेषजे **कञ्चुकस्त्व**स्त्री कवचे वारवाणके ।
निर्मोके भोगिनश्चाह रभसः शब्दवित्तमः ॥ ३९६ ॥

१. 'ह द' ग. पाठः. २. 'र्के' क. ग. द. पाठः.

वर्धापकगृहीताङ्गस्थितवस्त्रेऽप्यभाषत ।
**कर्षा**[1]**कं** तु खनित्रे स्यात् क्लीबलिङ्गमथ स्त्रियाम् ॥ ३९७ ॥

मक्षिकायां कर्षीका स्यात् **कर्णि**[2]**का** तु वनस्पतेः[3] ।
बीजे स्त्री स्यात तथा भिन्नतण्डुलावयवेऽत्र तु ॥ ३९८ ॥

पुंस्याहार्थे हर्षनन्दी ना त्वेव पटवासके ।
कणिकोऽथ **कबन्धोऽ**स्त्री क्रियायुक्तेऽपमूर्धके ॥ ३९९ ॥

शरीरे सलिले चापि रक्षोभेदे तु पुंस्ययम् ।
रभसस्तूदरे राहावपि भाषितवानमुम् ॥ ४०० ॥

**करण्डो** ना समुद्गे स्यात् पुटीसंज्ञे तु भाजने ।
स्त्री करण्डी द्वयोस्तु स्यात् पक्षिभेदेऽथ ना स्मृतः ॥ ४०१ ॥

**कदम्बो** व्यञ्जनीभूतशाकनाले द्रुमान्तरे ।
क्लीं तु तत्प्रसवेऽथो ना **कलम्बः** शाकनालके ॥ ४०२ ॥

बाणे चाथ कलम्बोऽस्त्री शतपर्[4]वसमाख्यके ।
स्तम्बे[5] शाके **क**[6]**दम्बस्तु** सर्षपे ना च नीपके ॥ ४०३ ॥

क्लीबं तु प्रसवे तस्य समूहे चाथ ना स्मृतः ।
**करम्बः** सेकमिश्रान्ने मिश्रमात्रे तु भेद्यवत् ॥ ४०४ ॥

केचित् तु पुष्पे क्लीत्याहुः **कबरस्तु** नृलिङ्गकः ।
लवणेऽ(म्ले)*च रसयोर्भेद्यलिङ्गस्तु तद्वतोः ॥ ४०५ ॥

केशविन्यासभेदे तु कबरी स्त्री तथैव [illegible]
चाष्पिकासंज्ञभैषज्ये शोकेऽपि रभसोऽप[illegible] ॥ ४०६ ॥

---

१. 'षि' ख. ङ. पाठः. [illegible] क. ख घ. पाठः. ३. 'तौ' ग. पाठः. ४. 'र्वा' क. ख. ङ. पाठः. ५. 'म्बऽशाके' ग. पाठः. ६. 'ट' ग. पाठः. ७. 'द' ग. पाठः. ८. 'णे चरयो' क, 'णे चारसाधरयो' ख., 'णे चारसरयो' ङ. पाठः.

* 'कबरं लवणाम्लयोः' इति मेदिनी ।

व्याकीर्णमाल्यकबरां कबरीमिति सत्कवेः ।
वाक्ये कबरशब्दस्य चिन्त्योऽर्थोऽथ करम्भवाक् ॥ ४०७ ॥
पुंसि स्याद् दधिमिश्रेषु सक्तुषु स्त्री पुनर्भवेत् ।
करम्भी पात्रभेदेऽथ करभो गर्दभे द्वयोः ॥ ४०८ ॥
उष्ट्रस्य च शिशौ पाणेर्मणिबन्धकनिष्ठयोः ।
मध्ये स्यात् कर्तनं तु क्ली छेदने सूत्रसर्जने ॥ ४०९ ॥
अश्वस्य धूलिलुठने कर्तनी तु स्त्रियामियम् ।
नापितस्योपकरणे क(र्तृ ? र्त्रि)* काव्येऽथ नपुंस्त्रियोः ॥ ४१० ॥
कर्तना कर्तयत्यर्थे स्यादथैदं नपुंसकम् ।
करणं कारणे काये साधने कर्मणीन्द्रिये ॥ ४११ ॥
क्षेत्रेऽपि साधकतमे नाट्यगीतिप्रभेदयोः ।
रतिबन्धे तथा ज्योतिःशास्त्रज्ञानां च कुत्रचित् ॥ ४१२ ॥
ग्रहवारेक्षणोपायप्रभेदे च निरूप्यताम् ।
स्पृष्टाद्युच्चारणाभेदे योगिपद्मासनादिषु ॥ ४१३ ॥
मर्त्यजात्यन्तरे तु द्वे शूद्रायां वैश्यसम्भवे ।
करुणा तु स्त्रियां चित्तवृत्तौ क्लिष्टेषु [illegible] ॥ ४१४ ॥
धार्मिकस्य त्रिषु पुनः करुणाविषये [illegible] ।
सरूपे चाथ वदति हर्षनन्दी नपुंसकम् ॥ ४१५ ॥
दैन्ये करुणमित्येतन्ना तु च्छागान्तरे [illegible] ।
कर्मण्या तु भृतौ स्त्री स्यात [illegible] ॥ ४१६ ॥
सम्पादिनि च विज्ञेयं कर्मणा [illegible] ।
कट्वङ्गस्तु द्रुमे टुण्डुसंज्ञे ना द्वे खगान्तरे ॥ ४१७ ॥

---

१. 'थैतन्न' क. ख. इ. पाठः. २. 'य' क. ख ग. पाठः. ३. 'स्व' ड. च. पाठः. ४. 'दु' ड. पाठः.

---

* 'क्षुरोऽस्य वपनं शस्त्र कर्त्रिका कर्तनी कृर्वा' (पृ. १३८. श्लो. २६) इति वैजयन्ती ।

ज्ञेयश्च पर्कटी प्लक्षो द्वे मयूरे स्त्रियां पुनः ।
कलापिनी स्यात् पार्वत्यां कलापवति तु त्रिषु ॥ ४३० ॥

**ककुदी** तु पुमान् षण्डसंज्ञके गोपतौ त्रि तु ।
ककुदेन समायुक्ते **काञ्चनं** तु नपुंसकम् ॥ ४३१ ॥

हेम्न्यब्जकेसरे ना तु धुर्धूरे नागकेसरे ।
उदुम्बरे च रभसो हरिद्रायां तु काञ्चनी ॥ ४३२ ॥

ब्रह्मरीतिसमाख्ये च लोहभेदेऽस्त्रियामथ ।
विषप्रभेदे **काकोलः** पुन्नपुंसकयोः स्मृतः ॥ ४३३ ॥

द्वयोस्तु कृष्णकाके स्यात् काकोलीति स्त्रियामियम् ।
वयस्यासंज्ञके वल्लीजातिभेदेऽथ **काहला** ॥ ४३४ ॥

स्त्री वाद्यभेदे सुषिरे रथ्यावादे* तु नप्यदः ।
त्रि तु निष्ठुरवाक्ये[1] स्यादाकुले चाथ न स्त्रियाम् ॥ ४३५ ॥

**कान्तारः** स्यान्महारण्ये दुर्गमार्गे च तं पुनः ।
रभसो वनमात्रे च प्रोक्तवानथ पुंस्ययम् ॥ ४३६ ॥

इक्षुभेदेऽथ **कादम्बः** कलहंसे द्वयोरयम् ।
कदम्बसम्बन्धिनि तु त्रिषु[2] स्यान्मार्गणे तु ना ॥ ४३७ ॥

**काम्बोजी** तु स्त्रियां माषपर्णीति प्रथितौषधौ ।
ना तु पुन्नागवृक्षे च वलक्षखदिरे तथा ॥ ४३८ ॥

तद्देशसम्भवे तु स्याद् द्वयोरेष तुरङ्गमे ।
क्लीबं तु **कारणं** हेतौ रभसस्त्वभिधानवित् ॥ ४३९ ॥

करणेऽपि पठत्येनं[3] स्त्रीनपोस्त्वपि कारणा ।
क्रियायां स्यात् कारयतेर्घाते चेत्यजयोऽब्रवीत् ॥ ४४० ॥

१. 'द्ये' ग. पाठः. २. 'तु' क. पाठः. ३. 'नत्' ख., 'तत्' ग. पाठः.

* 'रथ्यावादे तु कोहलम्' (पु. ३३. श्लो. २७) इति तु वैजयन्ती

कारणा तु स्त्रियां तीव्रवेदनायामथो नपि ।
कार्मुकं स्याद् धनुर्मात्रे धनुर्भेदे च ना पुनः ॥ ४४१ ॥
वेणौ त्रिस्तु प्रभवति कर्मणे तत्र वस्तु यत् ।
कावृकः[1] कृकवाकौ द्वे पीतमस्तककोकयोः[2] ॥ ४४२ ॥
त्रि तु स्याद् रभसेनोक्तः कार्मणः कर्मकारके ।
मन्त्रादियोजने[3] तु क्ली मूलकर्मेति तद् विदुः ॥ ४४३ ॥
कार्मिकस्तु भवेद् राज्ञां शुल्केष्वधिकृते त्रिषु ।
कर्मणां तु समूहे क्ली कातरस्त्वभिधेयवत् ॥ ४४४ ॥
भीरौ स्यात् पण्डके त्वेष पुमान् स्याद् भेद्यवत् पुनः ।
कालेयः कालसम्बन्धिन्यर्थे सर्वत्र नप् पुनः ॥ ४४५ ॥
कलिना साम्नि दृष्टे स्याद् कलीनां च कदम्बके ।
रागद्रव्ये जापकाख्ये दार्व्यां[4] त्वेव पुमानयम् ॥ ४४६ ॥
दार्वी दारुहरिद्रोक्ता काकाण्डस्तु पुमानयम् ।
कृष्णशिम्बौ नपि त्वेतत् काकस्याण्डे पुमान् पुनः ॥ ४४७ ॥
क्षालनोऽरत्निके षष्ठे यस्य यूपस्य सप्त च ।
दश चारत्नयो मानं तस्य स्त्रीशण्डयोः पुनः ॥ ४४८ ॥
प्रक्षालनेऽथ कामाङ्गः चूतवृक्षे पुमानयम् ।
कामस्य पुनरङ्गे क्ली काश्यपस्तु पुमानयम् ॥ ४४९ ॥
ऋषिभेदे च चन्द्रे च स्यादिक्ष्वाकोः कुलस्य यः ।
द्वितीयो नृपतिस्तत्र मरीचितनये स्मृतः ॥ ४५० ॥
काश्यपस्य तु पुत्रे द्वे काश्यपीति स्त्रियां भुवि ।
क्ली तु मांसेऽथ काण्डीरस्त्रिषु काण्डवति स्मृतः ॥ ४५१ ॥
पुमांस्तु हस्तिपिप्पल्यां क्षारकस्तु नृशण्डयोः ।
पक्षिमत्स्यादिपिटके तथा स्यात् पुष्पजालके ॥ ४५२ ॥

---

१. 'का' ख. ङ. पाठः. २. 'का' ख. पाठः. ३. 'के तु त्रि मू' ग. पा
४. 'बं' ग. पाठः.

**क्षरि**तृक्षारयित्रोस्तु भेद्यवत् **कासिका** पुनः ।
स्त्री वनस्पतिभेदेऽन्ये छेदनद्रव्य ऊचिरे ॥ ४५३ ॥

त्रिस्तु कासयितर्येष कासकः कासितर्यपि ।
**काचिक**स्तु पुमाञ्ज्ञेयः कमुण्डे द्वे तु मृषिके ॥ ४५४ ॥

**काकली** तु कले सूक्ष्मे शब्दे स्त्री काकलं पुनः ।
ग्रीवाया उन्नते देशे क्ली कण्ठ[illegible]के ॥ ४५५ ॥

**कारुज**स्तु पुमाञ्ज्ञेयो वल्मीके कलभे तथा ।
चित्रे चित्रकराणां च त्रि [illegible] ॥ ४५६ ॥

**काश्मीरी** कृष्णवर्णा[illegible] वन[illegible] स्यात् [illegible]रागियम् ।
क्ली तु पुष्करमूलाख्यभेषजे कुङ्कुमेऽपि च ॥ ४५७ ॥

त्रिः कश्मीरनिवासे च कश्मीराभिजनेऽपि च ।
**काणक**स्त्रिषु हिंस्रे स्यात् क्लीबं त्वजिमले विदुः ॥ ४५८ ॥

**कायस्थो** लेखके त्रिः स्याच्छरीरस्थेऽप्यथ स्त्रियाम् ।
हरीतक्यामिदं चोक्तं रभसेनैव धीमता ॥ ४५९ ॥

**कानीनः** पुंसि कर्णे स्याद् व्यासे च रभसोऽपठीत् ।
द्वयोस्त्वपत्ये कन्याया लुब्धे स्वप त्रिषु स्मृतः ॥ ४६० ॥

**कायिका** तु स्त्रियां ज्ञेया प्रदेये स्याद् दिने दिने ।
ऋणवृद्धिविशेषेऽर्थे त्रिः कायकृतकर्मणि ॥ ४६१ ॥

**कारिका** स्त्री यातनायां व्याख्याश्लोके कृ[illegible] ।
क्रियानिर्वर्तके तु क्ली कर्मादौ त्रिस्तु कर्तरि ॥ ४६२ ॥

हिंसके च स्वयं दृष्टं त्वृणवृद्ध्यन्तरे स्त्रियाम् ।
**कारितापि** च कारित्वे त्रिस्तु नि(र्वा॰सि॰)तेऽप्यथ ॥ ४६३ ॥

१. 'च' क. ख. ग. ङ. पाठः. २. 'तद्वति' ङ. पाठः.

म(सु?रौ)* रोगविशेषे ना काके त्रिषु कामलः।
कालिका तु स्त्रियां मासि मासि देयेऽधमर्णकैः॥ ४६४॥
ऋणवृद्धिविशेषे स्याद् मेघाः ङ्गे तु यस्य वै।
कालः प्रासः प्रकृष्टोऽस्मि तत्र तत्र च वर्तते॥ ४६५॥
यदा स्त्रियां तदा रूपं कालिकीत्यथ कालका।
अङ्गारकसमाख्यस्य शकुनेर्योषित स्त्रियाम्॥ ४६६॥
कालिका त्विति सौगापर्णीसंज्ञके भेषजे भवेत्।
प्रशान्ताग्नौ दग्धकाष्ठे मृगभेदेऽन्य लक्षणम्॥ ४६७॥
कालिका त्वसिता यद्वा कपोता पिङ्गबिन्दुका।
इत्येवमविवाह्यानां कन्यानां कन्यकान्तरे॥ ४६८॥
अस्योक्तं लक्षणं कुब्जा दुर्दर्शा कालिका च सा।
अश्वस्य दन्तरेखायां सूक्ष्मजीरक एव च॥ ४६९॥
मनोविकारप्रभवकायवैवर्ण्य एव च।
मेघजाले च चिक्रोडसंज्ञ... तेऽपि च॥ ४७०॥
क(य?म)†दियेव... ...मोऽपठीत्।
कालकस्तु पुमान् ... ॥ ४७१॥
रक्ते तु कालद्रव्येण ...
कोपादिना च काले स्या... ...अपि॥ ४७२॥
तथैव कालयितरि कार्त्तिकी ...
कृत्तिकाख्यर्क्षसंयुक्तपौर्णमास्यां ... पुनः॥ ४७३॥

१. 'ङ्गौ' च. पाठः. २. 'श' क. ... पाठः. ३. 'ले' ग. पाठः.

* 'कामला रोगभेदे वा ना ना मरुद्वसन्तयोः' इति मेदिनी। † का ........क्रमदेये वस्तुमूल्ये' इति मेदिनी, 'कालिका योगिनीभिदि..............स्तुमूल्ये' इति हेमचन्द्रश्च।

कार्त्तिकी यत्र मासेऽस्ति तस्मिन्नथ नृलिङ्गकः ।
**किष्किन्धः** शैलभेदे स्यात् किष्किन्धा तु स्त्रियामियम् ॥ ४७४ ॥
धराधरविशेषस्थगुहाभेदे पुमान् पुनः ।
**किञ्जल्कः** केसरे क्ली तु स्यादाकाशे च लाञ्छने ॥ ४७५ ॥
इदं धनञ्जयेनोक्तं **किरातस्त्वभिधेयवत्** ।
स्वल्पकायेऽथ रभसो भूनिम्बे पुंस्यधीतवान् ॥ ४७६ ॥
स्त्रियां चामरवाहिन्यां मर्त्यजात्यन्तरे द्वयोः ।
शबरात् पर्णशबरी निष्टचपूर्वासविष्ट यम् ॥ ४७७ ॥
तत्र द्वे तु **किराटः** स्यान्म्लेच्छे वणिजि चाप्यथ ।
[1]**किम्मीरः** स्यात् पुमान् रक्षोविशेषे चित्रवर्णके ॥ ४७८ ॥
त्रि तु तद्वर्णयुक्ते स्याद् विष्ठायां तु नपुंसकम् ।
**किल्बिषं** क्ली पापरुजोर्वेश्यायां किल्बिषी स्त्रियाम् ॥ ४७९ ॥
**कितवः** पुंसि धुर्धूरे क्ली तु तत्प्रसवे त्रि तु ।
द्यूतकारेऽथ रभसो मत्तवञ्चकयोरपि ॥ ४८० ॥
क्लीबलिङ्गं तु विज्ञेयं **क्रिमिजं** गन्धवस्तुनि ।
अगुर्वाख्ये **क्रिमेस्तु** स्याज्जाते त्रि क्रिमिरस्तु ना ॥ ४८१ ॥
सितलोहितसम्मिश्रवर्णे तद्वति तु त्रिषु ।
ज्ञेया तु क्रिमिरा स्त्रीत्वे मृगभेदे बिलेशये ॥ ४८२ ॥
**क्रिमिघ्नो** ना विडङ्गाख्यभेषजे त्रि तु हन्तरि ।
अमनुष्ये क्रिमेः स्त्री तु **किन्नरी** पिङ्गलाह्वये ॥ ४८३ ॥
पक्षिभेदे तथा वीणाभेदे चण्डालवल्लकी ।
इति ख्याते **किंशुकस्तु** पलाशाख्यमहीरुहे ॥ ४८४ ॥
इङ्गुदाह्वयवृक्षे च तयोस्तु प्रसवे नपि ।
**क्षिपण्युस्तु** पुमान् वायावायुधेऽर्थवसन्तयोः ॥ ४८५ ॥

१. 'किमीरः' क. ख., 'किंशारः' ख. पाठः.

स्त्री विद्युति किरीटी तु नार्जुने त्रिः समौलिके ।
कीनाशोऽमौ यमे पीतहरिते मिश्रवर्णके ॥ ४८६ ॥

पीतप्रधाने पुंसि स्याद् राक्षसे तु द्वयोस्त्रि तु ।
कदर्यानार्यभृतककृतघ्नेषु कूपविले ॥ ४८७ ॥

पूर्वोक्तवर्णवद्द्रव्येऽप्याममांसाशकेऽप्यथ ।
क्लीं करञ्जफलस्यैकबीजे मधुरभेषजे ॥ ४८८ ॥

क्लीतकं क्लीतकी तु स्त्री नीलिसंज्ञौषधौ स्मृता ।
कीचको ना वेणुभेदे यो ध्वनत्यनिलोद्धुतः ॥ ४८९ ॥

स्याले विराटराजस्य महाभारतविश्रुते ।
क्लीं तु कीचकवृक्षस्य प्रसवे क्षीरिकः पुनः ॥ ४९० ॥

राजिलाह्वयसर्पे द्वे क्षीरिका तु स्त्रियामियम् ।
दुग्धिकासंज्ञकस्तम्बे फलाध्यक्षाख्यपादपे ॥ ४९१ ॥

क्षीराशस्तु द्वयोर्हंसे क्षीरस्य त्वाशके त्रिषु ।
कीकसं त्वस्थनि क्लीबं क्रिमिषु त्वणुषु द्वयोः ॥ ४९२ ॥

कीकटस्तु द्वयोरश्वे भेद्यवत् तु मितम्पचे ।
नीवृद्भेदे त्वनार्याणां निवासे पुंसि भूम्नि च ॥ ४९३ ॥

कुतपः सूर्यवह्न्योर्ना वृषभेऽप्यतिथावपि ।
भागिनेये द्वे तु विप्रे पुन्नपुंसकयोः पुनः ॥ ४९४ ॥

दर्भेऽप्यह्नोऽष्टमे भागे तिले छागर्जकम्बले ।
वाद्यवादकसामग्र्यां नाट्यस्येत्याह यादवः ॥ ४९५ ॥

वाद्यविन्यास इत्याह शाश्वतः सज्जनः पुनः ।
सायमास्तरणे प्रोह परे त्वास्तरणे विदुः ॥ ४९६ ॥

१. 'धाने तु पुं' ग. पाठः. २. 'का' क. पाठः. ३. 'की' ग. पाठः. ४. 'ल' पाठः. ५. 'ज्जा' ग. पाठः.

देहल्यां चाथ **कुशलं** निपुणे त्रिः क्षमेऽपि च ।
क्षेमे मङ्गलयुक्ते च दीक्षितेऽप्यजयोऽथ नप् ॥ ४९७ ॥
पर्याप्तौ मङ्गले पूर्णे स्यात् **कुसुम्भं** तु कुङ्कुमे ।
क्ली महारजतेऽप्यस्य पुनः स्तम्बे स्त्रियामियम् ॥ ४९८ ॥
कुसुम्भी पुंसि तु प्राहुः वरधान्यान्तरे परः ।
कमण्डलौ च **कुसुमस्त्वस्त्री** स्त्रीपुष्पपुष्पयोः ॥ ४९९ ॥
नेत्ररोगविशेषे च फले च रभसोऽपठीत् ।
**कुणपस्तु** क्रिमौ द्वे स्यात् कुत्सिते भेद्यलिङ्गकः ॥ ५०० ॥
हंसारिकायां‡ त्वाचष्टे रभसः कुणपी स्त्रियाम् ।
कुणपोऽस्त्री शवे क्ली तु पूयेऽथो **कुक्कुटो** द्वयोः ॥ ५०१ ॥
कृकवाकौ च भासे च मत्स्यजात्यन्तरेऽपि च ।
शूद्रायां मागधाज्जाते निषादीवैश्ययोः सुते ॥ ५०२ ॥
शूद्राज्जाते निषाद्यां च सुनिषण्णाह्वये पुनः ।
शाके पुंसि द्वयोस्तु स्यात् **कुक्कुरः** शुनि नप् पुनः ॥ ५०३ ॥
स्थौणेयसंज्ञके गन्धद्रव्ये द्वे तु **कुरङ्गवाक्** ।
स्यान्महाहरिणे चापि वानरेऽप्यथ सा स्त्रियाम् ॥ ५०४ ॥
कुरङ्गी भोजपुत्र्यां स्यात् पुन्नपुंसकयोः पुनः ।
**कुड्ङ्गः** स्यान्निकुञ्जे चच्छादिष्यप्यथ सा त्रयी ॥ ५०५ ॥
बदर्यां **कुवली** क्ली तु तत्फलेऽप्युत्पलेऽप्यथ ।
**कुवेलमुत्पले** क्लीबं त्रिस्तु कुत्सितवेलके ॥ ५०६ ॥
**कुम्भीकः** पुंसि पुन्नागवृक्षे तत्प्रसवे तु नप् ।
कुमुदस्य फलेऽप्युक्तमायुर्वेदविचक्षणैः ॥ ५०७ ॥

१. 'हा' क. ङ. च. पाठः. २. 'पुनः' ग. पाठः. ३. 'पिणाक्षि क्रि' क. ङ. च. पाठः. ४. 'पिणाक्षि' क. ङ. च. पाठः. ५. 'मु' क. ङ. च. पाठः.

‡ 'विट्सारेकायाम्' इति स्यात् । 'कुणपी पुनः । विट्शारिकायाम्' इति मेदिनी ।

**कुरीरस्तु** पुमान् मालाविशेषे कम्बलेऽपि च ।
क्लीबं तु मैथुने पद्मे जाले च मुनिभाषितम् ॥ ९०८ ॥
रभसस्त्वाह **कुटजो** मुनौ पुंसि द्रुमान्तरे ।
क्लीबलिङ्गं तु वृक्षस्य तस्य पुष्पे फलेऽपि च ॥ ९०९ ॥
**कुररस्तु** द्वयोरुत्क्रोशाख्यपक्षिणि सा पुनः ।
कुररी स्त्री भवेन्मेष्यां **कुमुदं** तु नपुंसकम् ॥ ९१० ॥
पुंस्यप्यन्ये कैरवे स्याद् रक्ताब्जेऽप्यथ ना स्मृतः ।
स्याद् दिग्गजविशेषे च कपिभेदे च विश्रुते ॥ ९११ ॥
रामायणकथायां स्त्री पुनः कट्फलसंज्ञके ।
पादपे कुमुदा ब्रूते पुनर्गम्भारिकाह्वये ॥ ९१२ ॥
पादपे रभसोऽथ द्वे **कुमुखः** सूकरे त्रि तु ।
कुत्सितास्ये **कुमारस्तु** स्कन्दे ना वरुणद्रुमे ॥ ९१३ ॥
अश्वानुचारके चापि युवराजे मृतावपि ।
कुत्सितायां द्वयोस्तु स्याद् बाले स्त्रीपुंसयोः पुनः ॥ ९१४ ॥
जम्बुद्वीपे कुमारी तु कन्यायां स्यात् स्त्रियामसौ ।
मृगजात्यन्तरे चापि हिमाभे[1] नवमालिका ॥ ९१५ ॥
इति प्रसिद्धवल्ल्यां च तेरणीसंज्ञगुल्मके ।
कुस्तुम्बुर्यां मृडान्यां च तथा जनपदान्तरे ॥ ९१६ ॥
तद्राजेऽप्यथ यस्यास्ति दुमा[2]रस्तत्र मेघवत् ।
**कुचेलस्तु** त्रिषु ज्ञेयः कुवाससि नपि त्वदः ॥ ९१७ ॥
कुत्सिते वाससि स्त्री तु कुचेला स्याल्लतान्तरे ।
आविद्धकर्णिपाठादिसंज्ञाभिः शास्त्रविश्रुते ॥ ९१८ ॥
**कुल्माषः** कुरुविन्दाख्यमणौ व्रीह्यन्तरे च ना ।
यवभेदे यावकाख्ये परे तु यवपिष्टके ॥ ९१९ ॥

१. 'ह्वये' ग. पाठः. २. 'क' क. ङ. च. पाठः.

सूपभक्ते परेऽन्ये तु विदले क्ली तु काञ्चिके ।
कुल्माषः पक्वमुद्गादिपिण्डे ना शबलाह्वये ॥ ९२० ॥
वर्णे च त्रि तु वर्णेन शबलाख्येन संयुते ।
नागराजविशेषे तु कुहरः स्यान्नृलिङ्गकः ॥ ९२१ ॥
क्लीबलिङ्गं तु विज्ञेयं गह्वरे विवरेऽपि च ।
कुलिशस्त्वस्त्रियां वज्रे मत्स्यभेदे तु स द्वयोः ॥ ९२२ ॥
कुलालो द्वे कुम्भकारे कुलाली तु स्त्रियामियम् ।
चक्षुष्यासंज्ञभैषज्ये कुलायस्तु नृलिङ्गकः ॥ ९२३ ॥
पक्षिनीडे गृहे च स्यादेकाहक्रतुभेदके ।
कुलस्य त्वायके त्रिः स्यात् कुणालस्तु पुमानयम् ॥ ९२४ ॥
कृतमाले क्ली तु पुरप्रभेदेऽथ कुकूलवाक् ।
स्यात् क्लीबं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ॥ ९२५ ॥
कुहनस्तु त्रिरीर्ष्यालौ मायाविनि च ना पुनः ।
वल्मीके चेन्द्रजाले तु वैजयन्त्यामभाषत ॥ ९२६ ॥
नपुंस्त्री तु दम्भचर्यायां दम्भशीलत्व एव च ।
कुहना स्त्री तु मायायां मूषिके तु द्वयोर्भवेत् ॥ ९२७ ॥
कुलकस्तु पुमान् काकतिन्दुकाख्यमहीरुहे ।
वृक्षे कुरवकाख्ये च क्लीबं तु स्याल्लतान्तरे ॥ ९२८ ॥
पटोलसंज्ञे काव्यालङ्कारभेदे च तत् त्रि तु ।
संयुक्ते कुतली तु स्त्री शाकभेदे नृनपुं पुनः ॥ ९२९ ॥
कुतलो भूतलेऽथ स्युः कुन्तलाः पुंसि भूम्नि च ।
मध्यदेशस्थिते नीवृद्भेदे जनपदान्तरे ॥ ९३० ॥
दक्षिणापथदेशस्थे अथ स्यात् कुन्तलः पुमान् ।
तस्य राजनि तस्यापि स्युरपत्येषु भूम्नि च ॥ ९३१ ॥

१. 'शं त्व' क. ङ. च. पाठः. २. 'मृगे च' ङ. पाठः. ३. 'ले' क. ङ. च. पाठः.

बहुष्वथ स्त्र्यपत्ये तु कुन्तली स्त्री पुमान् पुनः ।
केशेऽथ रभसः प्राह कालेऽपि बहुशब्दवित् ॥ ५३२ ॥
अथ स्यात् कुटलो गात्रकृत्यृषौ पुंसि नप् पुनः ।
विद्यादाभरणेऽथ त्रिः कुटिलं कुञ्चिते भवेत् ॥ ५३३ ॥
तगरे तु क्ली तगरपादिकायां स्त्रियामिति ।
रभसेनोदिताथास्त्री कुड्मलो मुकुलेऽथ नप् ॥ ५३४ ॥
विद्यादासनभेदेऽस्य लक्षणं च प्रचक्षते ।
वैजयन्त्यां यथा प्रोक्तमासीनस्यासनेष्वदः ॥ ५३५ ॥
नागदन्तकमूर्ध्वज्ञोर्जानुस्थौ प्रसृतौ भुजौ ।
सूचीमुखमिदं पाणितलौ चेत् संहतौ मिथः ॥ ५३६ ॥
अर्धसूची तु तौ द्वौ चेत् प्रादेशान्तारितौ* मुखात् ।
कुड्मलं मुकुलीभूतौ तौ चेदूर्ध्वमुखौ स्थितौ ॥ ५३७ ॥
इत्येवं योगशास्त्राणि समीक्ष्य कृतिनोदितम् ।
कुमुलं कुसुमे क्लीबं हिरण्ये च द्वयोः पुनः ॥ ५३८ ॥
शिशौ त्रिषु पुनः कान्ते कुरुलस्तु पुमानयम् ।
अलके स्त्री तु कुरुली लक्षवेधे धनुष्मताम् ॥ ५३९ ॥
कुरुमस्तु द्वयोः कारौ भाजने तु पुमानयम् ।
अथ क्ली कुषितं पाते निष्कृष्टे त्वभिधेयवत् ॥ ५४० ॥
कुत्सितं स्यात् पर्युषिते त्रिष्वृणे तु नपुंसकम् ।
कुसीदं त्वृणवृद्धौ क्ली कश्चित् तु त्रिवृणोति तत् ॥ ५४१ ॥
ऋणवृद्ध्या जीविकायां भेद्यवत् त्वलसे तथा ।
वृद्धिजीविनि पुंयोगात् पुनर्वृत्तिः स्त्रियां यदा ॥ ५४२ ॥

१. 'ह' ग. पाठः. २. 'कु' क. ङ. च. पाठः. ३. 'भो' ग. पाटः. ४. ' पाठः.

---

* 'अर्धसूची तु तौ द्वौ चेत् प्रादेशान्तरतो मुखात्' (पृ. १००. श्लो.२१५) इति तद्वैजयन्तीपाठः.

तदा स्त्रियां कुसीदायी§ कुटीरस्तु पुमानयम् ।
क्षुद्रागारे कर्कटे तु द्वे कुम्भीरस्त्वयं द्वयोः ॥ ५४३ ॥
नक्रे चोरे पुन(स्त्रीःस्त्रि)स्यात् कुम्भीलस्तु [1]पुमानयम् ।
स्यालाख्यमत्स्ये त्रिषु तु श्लोकच्छायादिहारिणि ॥ ५४४ ॥
चोरे च कुन्[2]दुमस्तु स्यात् पुमान् पुञ्[3]जे द्वयोः पुनः ।
मार्जारे कुट्टिनी तु स्त्री शम्भल्यां कुट्टना पुनः ॥ ५४५ ॥
छेदने कुत्सने चापि न ना स्यात् कुनटी पुनः ।
स्त्रियां मनःशिलायां स्यात् कुत्सिते तु नटे द्वयोः ॥ ५४६ ॥
कुशिकस्तु क्रोष्टरि द्वे स्यादुलूकेऽप्यथो नपि ।
क्षुद्रकं फाणिताभिख्ये विकारे स्याद् गुडस्य हि ॥ ५४७ ॥
तथैव कुप्यलवणसंज्ञे स्याल्लवणान्तरे ।
द्वे तु क्षत्रियभेदे स्यात् क्षुरप्रस्तु पुमानयम् ॥ ५४८ ॥
अर्धचन्द्राख्यशस्त्रे स्यात् कश्चित् त्वश्वान्तरेऽभ्यधात् ।
कुञ्चिका त्वङ्कुटाभि[4]ख्ये कपाटोद्घाटयन्त्रके ॥ ५४९ ॥
तूलीसूचिकयोश्चाह रभसो भीरुभीषणे ।
साधने कुञ्चितरि तु त्रिरथो कुञ्जरा स्त्रियाम् ॥ ५५० ॥
पाटलायां च धातक्यां द्वे तु हस्तिन्यथ स्त्रियाम् ।
काञ्चनद्रौ गुडूच्यां च कुण्डली क्ली तु पाशके ॥ ५५१ ॥
भल्ली तु कर्णवेष्टे स्यात् त्रिलिङ्ग्यां च परोऽवदत् ।
कुद्दालस्तु पुमान् गोदारणाख्ये खानसाधने ॥ ५५२ ॥

१. 'द्वयोरय' क. ङ. च. पाठः. २. 'लु' ग. पाठः. ३. 'च्छे' ग. पाठः. ४. 'ख्य' ग. पाठः. ५. 'वा' ङ. पाठः.

§ 'वृषाकप्यग्निकुसितकुसिदानामुदात्तः' (४. १. ३७) इति सूत्रे 'कुसिदशब्दो ह्रस्वमध्यो, न तु दीर्घमध्यः' इति सिद्धान्तकौमुदी ।

क्लीबं तु वैजयन्त्याह कोविदारद्रुमे तु ना ।
क्लीबं तु प्रसवे तस्य कुठेरस्त्वभिधेयवत् ॥ ९९३ ॥
अपेतसारे स्तम्बे तु ना कठिञ्जरसंज्ञके ।
कुरण्डो द्वे झषे ना तु वृद्धिसंज्ञे रुजान्तरे ॥ ९९४ ॥
मुष्कवृद्ध्यात्मके स्तम्बप्रभेदे त्वाह यादवः ।
किङ्किराताह्वयेऽसौ तु †कुर्फाकुर्नौ द्वयोः पुनः ॥ ९९५ ॥
मर्कटे ना तु कुतनुर्धनदे त्रि तु कुत्सिता ।
तनुर्यस्य भवेत् तत्र कुटरस्तु द्रुमान्तरे ॥ ९९६ ॥
वर्धको च द्वयोस्तु स्याच्छकुनौ भेद्यवत् पुनः ।
कुमुद्वान् कुमुदप्रायदेशे स्त्री तु कुमुद्वती ॥ ९९७ ॥
कुमुदस्य भवेत् स्तम्बे कुण्डली तु द्वयोरयम् ।
मयूरे चित्रलमृगे तथैव स्याद् भुजङ्गमे ॥ ९९८ ॥
पुमांस्तु वरुणे प्रोक्तास्त्रि तु कुण्डलवत्यसौ ।
कृषीवले कुडुम्बी द्वे कुडुम्बवति तु त्रिषु ॥ ९९९ ॥
कूश्माण्डस्तु पुमान् विघ्नराजस्य प्रियभृत्यके ।
गेणभेदे शालिजातिभेदे स्त्रीपुंसयोः पुनः ॥ ९६० ॥
फलवल्लीविशेषे स्यात् कूश्माण्डी क्ली तु तत्फले ।
'भवतेऽहेड' इत्यादिष्वृग्विशेषेषु नपुंस्त्रियोः ॥ ९६१ ॥
कूबरस्त्वस्त्रियां गन्त्रीसमाख्ये स्याद् रथान्तरे ।
युगन्धराख्ये तु रथावयवे स्यान्नृलिङ्गकः ॥ ९६२ ॥
वीणावंशशलाकायां क्वणिका स्त्री त्रिषु त्वसौ ।
ज्ञेया क्वणायितर्याहुः पुनः क्रन्तत्र इत्यदः ॥ ९६३ ॥
अन्तरिक्षे लाङ्गलाग्रे लाङ्गले चापरे विदुः ।
सुवर्णस्याभिघातार्थसाधने मशके पुनः ॥ ९६४ ॥

१. 'था' ग. पाठः. २. 'नलभे' ग. पाठः.

† 'कुषाकुः कपिवह्न्यर्के ना' इति तु मेदिनी ।

कृन्तत्रो द्वे कृत्रिमस्तु वृकधूपाह्वये पुमान् ।
तुरुष्काख्ये च निर्यासे लवणे च विडाह्वये ॥ ९६५ ॥

क्ली तु कांस्याह्वये लोहभेदे स्याद् भेद्यवत् पुनः ।
ज्ञेयः स्यात् कृतिनिर्वृत्ते कृसरस्तु पुमान् द्रुमे ॥ ९६६ ॥

इङ्गुदाख्ये मिश्रवर्णभेदे च त्रिस्तु तद्वति ।
कशेरुसंज्ञे तु जलस्तम्बभेदे नपुंसकम् ॥ ९६७ ॥

तिलतण्डुलमाषैस्तु कृतायां कृसरा त्रयी ।
य्वागुल्यां स्यात् कृतज्ञस्तु शुनि द्वे भेद्यवत् पुनः ॥ ९६८ ॥

उपकारं विजानाति यस्तत्राथ कृपाणवाक् ।
खड्गे ना छुरिकायां तु स्त्री कृपाण्यथ यादवः ॥ ९६९ ॥

आह सौनिकशस्त्रे तां कर्तनीसंज्ञकेऽथ ना ।
कृन्तेरः स्याद् वृक्षभेदे मक्षिकाकार्य एव च ॥ ९७० ॥

आलोचने तु त्रिर्ना तु कृदरः* खदिरे सिते ।
केचित्तु हिंस्रे त्रिष्वाहुः कृषकस्तु पुमानयम् ॥ ९७१ ॥

कूटसंज्ञे लाङ्गलाङ्गे भेद्यवत् तु कृषीवले ।
कृषिकस्तृणजातौ ना लाङ्गले तु नपुंसकम् ॥ ९७२ ॥

केसरस्त्वस्त्रियां पुष्पकिञ्जल्केऽप्यश्वसिंहयोः ।
सटे स्यान्मातुलुङ्गाख्यफलस्यान्तर्द्रवास्पदे ॥ ९७३ ॥

सूक्ष्मकोशे पुमांस्तु स्याद् वकुले नागकेसरे ।
पुन्नागे वेङ्कटाख्ये च पर्वते केसरा पुनः ॥ ९७४ ॥

कार्पास्यां स्यात् स्त्रियां क्ली तु प्रसवेऽत्रोक्तभूरुहाम् ।
हिङ्गुन्यपि पठत्येतद् रभसः शब्दवित्तमः ॥ ९७५ ॥

१. 'तु' ग. ङ. पाठः. २. 'पू' ग. ङ. पाठः.

---

* [illegible] । सिते त तस्मिन् कदरः' (पृ.५०.श्लो.६३) इति तु वैजयन्ती

**केरलास्तु** नृभूम्नि स्युर्दक्षिणापथवर्तिनि ।
नीवृद्भेदेऽथ तद्देशसम्भूतेषु नृषु द्वयोः ॥ ९७६ ॥

तद्राजे तु पुमाञ्ज्ञेयः केरलः स्त्री तु केरली[2] ।
तद्राजन्यस्त्र्यपत्ये स्यात् तथा स्याद् भेषजान्तरे ॥ ९७७ ॥

**केशवस्तु** पुमान् विष्णौ पुन्नागे त्रि तु केशिनि ।
**केवलस्तु** त्रिरेकाकिकृत्स्नयोरवधारिते ॥ ९७८ ॥

ज्ञाने तु पूर्णे क्लीबं स्यात् केचिदन्येऽवधारणे ।
निर्णीते त्वपरेऽथ स्यात् **क्षेत्रज्ञो** निपुणे त्रिषु ॥ ९७९ ॥

क्षेत्रस्य विज्ञातरि च ना त्वात्मन्यथ सा स्त्रियाम् ।
**क्षेत्रिया** क्षुद्रधान्ये स्याद् गवीधुरिति विश्रुते ॥ ९८० ॥

त्रिस्तु स्याद् दुष्प्रतीकारव्याध्यादौ धान्यवप्रजे ।
निराकार्यतृणे पारदारिके यत् पुनर्विषम् ॥ ९८१ ॥

देहान्तरे सङ्क्रमय्य चिकित्स्यं तत्र ना पुनः ।
**क्षेत्रिकः** स्यात् तुरुष्काख्यनिर्यासे क्षेत्रिणि त्रिषु ॥ ९८२ ॥

**क्षेपणं** तु नपि क्षिप्ते पुन्नपुंसकयोः पुनः ।
पादाङ्गुष्ठाङ्गुलीमध्ये नौदण्डे क्षेपणी स्त्रियाम् ॥ ९८३ ॥

**क्लेशकस्तु** यमे नाथ क्लेष्टरि क्लेशितर्यपि ।
तथा क्लेशयितर्येनं भेद्यलिङ्गं प्रचक्षते ॥ ९८४ ॥

**केदारस्त्वस्त्रियां** क्षेत्रे शालिक्षेत्रे तु केचन ।
पुण्यस्थानविशेषे च रभसस्त्वालवालके ॥ ९८५ ॥

**केसरी** तु पुमान् सिंहे मातुलुङ्गे तुरङ्गमे ।
पुन्नागे चाप्यथो भेद्यलिङ्गः केसरवत्यसौ ॥ ९८६ ॥

१. 'ङ्' क. ङ. च. पाठः. २. 'ळी' क. ङ. च. पाठः.

कैडर्यस्तु पुमान् निम्बे कट्फलाख्ये च पादपे ।
मदनाख्यद्रुमेऽथैषां त्रयाणां प्रसवे नपि ॥ ९८७ ॥

कैटभस्त्वसुरे पुंसि कस्मिंश्चित् स्त्री तु कैटभी ।
दुर्गादेव्यां कैशिकं तु क्ली केशनिकुरुम्बके ॥ ९८८ ॥

कैशिकी तु स्त्रियां वृत्तिविशेषे नृत्तकारिणाम् ।
कैतवं तु च्छले क्लीबं द्यूते चाथ निबोधत ॥ ९८९ ॥

भेद्यलिङ्गं तु कितवसम्बन्धिनि मनीषिणः ।
कैराती तु स्त्रियामूर्ध्वाधोगतौ क्षिप्तपत्रिणः ॥ ९९० ॥

किरातसम्बन्धिनि तु कैरातं त्रिरथ द्वयोः ।
कोकिलः पक्षिभेदे स्यान्ना तु तूले[1]ऽथ कोटिका ॥ ९९१ ॥

स्त्री मण्डूके श्वेतमुखे कृष्णे त्रिः कुटितर्यसौ ।
क्रोधनो द्वे शुनि त्रिस्तु [2]क्रोधशीले नपि क्रुधि ॥ ९९२ ॥

कोहली तु स्त्रियां ज्ञेया कूश्माण्डाख्यलतान्तरे ।
भृशं मुखरकन्यायां कूश्माण्डप्रसवे तु नप् ॥ ९९३ ॥

आवेशभाजि तु गृहसारमेये द्वयोस्तथा ।
मर्त्यजात्यन्तरेऽम्बष्ठ्यां वैश्याज्जातेऽथ कोमलम् ॥ ९९४ ॥

क्लीबं जले पुमान् स्वर्गे मृदुनि त्वेष भेद्यवत् ।
कोणिका तु स्त्रियां नीडे कोणितर्येष भेद्यवत् ॥ ९९५ ॥

कोरकस्त्वस्त्रियां पुष्पकलिकायां त्रिपु त्वयम् ।
शब्दकारिण्यथ क्लीबं कोलकं मरिचे तथा ॥ ९९६ ॥

कंकोले च स्त्रियां तु स्यात् कोलिका मूषिकाकृतौ ।
द्रुतद्रुमारोहशीले प्राणिभेदे द्वयोः पुनः ॥ ९९७ ॥

१. 'कू' ग. पाठः. २. 'कोपशी' क. ङ. च. पाठः. ३. 'त' ग. ङ. पाठः

निर्विषाहिप्रभेदेऽथ **कोद्रङ्गः** स्याद् द्वयोरयम ।
मृगे जन्तुधराभिख्ये क्षुद्रे पुंसि तु वेश्मनः ॥ ५९८ ॥

†इन्द्रकोशाख्यावयवे **कोशिका** तु स्त्रियामियम् ।
दीपाधारे मल्लिकाख्ये गिरिभेदे तु कोशकः ॥ ५९९ ॥

पुमानथ स्युः पुंभूम्नि **कोसला** नीवृदन्तरे ।
मध्यदेशस्थिते सर्ववचने त्वृषिभेदके ॥ ६०० ॥

मिश्रवर्णविशेषे च पाण्डरश्यामले त्रि तु ।
तद्युक्ते **कौशिक**स्त्विन्द्रे गुग्गुलौ ना द्वयोः पुनः ॥ ६०१ ॥

उलूके कुशिकापत्ये व्यालग्राहे च नप् पुनः ।
कौशिकं मज्जधातौ स्यात् कौशिकी तु स्त्रियामियम् ॥ ६०२

पार्वत्यां निम्नगाभेदे **कौमुदी** तु स्त्रियामियम् ।
कार्त्तिक्यां पौर्णमास्यां स्याच्चन्द्रिकायां च ना पुनः ॥ ६०३

कार्त्तिकीयुक्तमासेऽथ त्रिः स्यात् कुमुदयोगिनि ।
**कौणपो** नरके पुंसि राक्षसे तु द्वयोरयम् ॥ ६०४ ॥

**कौक्कुटं** क्लीबमायासे त्रि तु कुक्कुटयोगिनि ।
**कौसला** तु स्त्र्ययोध्यायां त्रिस्तु कोसलयोगिनि ॥ ६०५ ॥

**खर्जूरो** ना परूषाख्यपादपे सा पुनः स्त्रियाम् ।
तज्जातिभेदेऽल्पतरे खर्जूरे क्लीबके पुनः ॥ ६०६ ॥

रजते हरिताले च प्रसवेऽत्रोक्तभूरुहोः ।
वृश्चिकाख्ये पुनर्दीर्घकीटे द्वे रभसः पुनः ॥ ६०७ ॥

भेद्यालिङ्गं खले प्राह शब्दवित् **खदिरः** पुनः ।
गायत्रीसंज्ञके वृक्ष ऋषिभेदे द्वयोः पुनः ॥ ६०८ ॥

१. 'द्र' क. ग. च. पाठः.

† कोद्रङ्गस्तु तमङ्गकः । इन्द्रकोशोऽपि (पृ. १६१. श्लो. ३२) इति तु वैजयन्ती ।

दुश्चिकित्सविषे वृश्चिकान्तरे स्यात् स्त्रियां पुनः ।
नमस्कारीसमाख्यायां क्षुद्रवल्ल्यां तथैव सा ॥ ६०९ ॥
शमीफलासमाख्ये च जलशाकलतान्तरे ।
**खशय**स्तु द्वयोर्भेके त्रिस्तु खे शयितर्यसौ ॥ ६१० ॥
**खराङ्ग**स्तु द्वयोर्भेके कर्कशाङ्गे तु भेद्यवत् ।
**खण्डिका** तु स्त्रियां प्रावृड्रात्रौ शकलिते पुनः ॥ ६११ ॥
त्रिः स्याद् विरहिते तस्य वाक्ये च स्त्री तु **खण्डना** ।
वैधव्यलक्षणोपेता या कन्या शास्त्रदर्शिता ॥ ६१२ ॥
अविवाह्यासु कन्यासु तस्यां स्त्रीशण्डयोः पुनः ।
खण्डनं खण्डना चेति धातोः खण्डयतेः कृतौ ॥ ६१३ ॥
**खपुरो** ना पूगवृक्षे पूगपट्टे च शाखिनाम् ।
निर्यासे भद्रमुस्ते च रभसः प्रोक्तवानमुम् ॥ ६१४ ॥
गन्धद्रव्यविशेषे च बालसंज्ञेऽजयः पुनः ।
अत्रार्थे शण्डमाचष्टे क्ली तु पूगफले स्मृतम् ॥ ६१५ ॥
अस्त्री तु **खण्डलं** खण्डे चीरवस्त्रेऽप्यथ द्वयोः ।
**खञ्जनः** खञ्जरीटे क्ली पुनः खञ्जनकर्मणि ॥ ६१६ ॥
**खजक**स्तु पुमान् मन्थदण्डे द्वे रसपाचके[1] ।
**खजाक**स्तु पुमान् मन्थदण्डे क्ली तु विहायसि ॥ ६१७ ॥
शरीरे च खजाका तु स्त्री दर्व्यामसतीस्त्रियाम् ।
**खनको** मूषिके द्वे स्यान्मर्त्यजात्यन्तरे तथा ॥ ६१८ ॥
राज्ञीमागधयोर्जाते त्रि तु स्यादवदारके ।
तथा स्याद् भूमिवित्तज्ञे **खनित्रं** तु नपुंसकम् ॥ ६१९ ॥
कुद्दाले स्यात् खनित्री तु दण्डभेदे तपस्विनाम् ।
विशाखिकासमाख्ये स्यात् **खचितं**[2] त्वभिधेयवत् ॥ ६२० ॥

१. 'पावके' ग., 'वा' च. पाठः. २. 'मं' क. पाठः.

विपाम्मणी लोहविद्ध उद्धृतस्नेह एव च ।
घृतहीने तु दध्नि क्लीत्याह हर्षः स्त्रियां पुनः ॥ १२१ ॥
ज्ञेया कृष्णविषाणायां यजमानस्य **खर्जनी** ।
खर्जनं तु नपि ज्ञेयं क्रियायां खर्जतेरथ ॥ १२२ ॥
**खलीनो**ऽस्त्री तुरङ्गाणां मुखसंयमने त्रि तु ।
छिद्राकाशादिलीने स्यात् (ख?खि)दि[1]रस्तु पुमान् भये ॥ १२३ ॥
इन्द्रे च तस्करे तु त्रिः **खिङ्खार**स्तु पुमानयम् ।
किर्खीरके च खट्वाङ्गे क्रोष्टौ तु द्वेऽजयः पुनः ॥ १२४ ॥
शिवाभेद इति ब्रूते रभसाद्यास्तु मन्वते ।
†खि[2]ङ्खिरो ना वा[3]रिवा[4]हे खट्वाङ्गे च द्वयोः पुनः ॥ १२५ ॥
शिवाभेदे खि[5]ङ्खिरा तु ब[6]न्ध[7]हृत्त्वे स्त्रियामिति ।
*खुण्डकस्तु पुमान् ह्रस्वनालिकेर इतीरितम् ॥ १२६ ॥
वैजयन्त्यां त्रि तु ह्रस्वमात्रेऽल्पेऽन्येऽथ **खेचरः** ।
विद्याधरे दुश्चिकित्सविषे द्वे वृश्चिकान्तरे ॥ १२७ ॥
पक्षयुक्ते त्रिषु पुनर्व्योमचारिण्यथो नपि ।
**खेटकं** फलके ग्रामधा(ने?न्ये)¶ त्वन्ये त्रिषु त्वदः ॥ १२८ ॥
उत्रासके **खोलक**स्तु पूगकोशशिरस्त्रयोः ।
वल्मीके पाकभेदे च पुमान् स्यात् खोलि[8]का पुनः ॥ १२९ ॥
§गीतस[9]त्यां च काञ्चयां च क्लीत्येवमजयोऽपठीत् ।
बहुवेदी **गभीरं**[10] तु त्रिर्निम्ने वाचि तु स्त्रियाम् ॥ १३० ॥

१. 'रा' ग. पाठः. २. 'कि' क. ग. पाठः. ३. 'प' ङ. पाठः. ४. 'भेदे ख' च. पाठः. ५. 'कि' ग. पाठः. ६. 'लभृत्ये स्त्रि' ङ. पाठः. ७. 'भृ' क. च. पाठः. ८. ' क. च. पाठः. ९. 'त्र' ग. पाठः. १०. 'रस्तु' ङ. पाठः.

† 'किङ्खिरौ क्रोष्टुखट्वाङ्गौ' (पृ. २४०. श्लो. २२) इति वैजयन्ती, 'खिङ्खिरस्तु शिवाभेदे खट्वाङ्गे वारिवालके' इति मेदिनी च । * 'सदाफलो बर्ला चास्मिन् ह्रस्वे स्यात् खुड्ड (पृ. १३. श्लो. २२१) इति तु वैजयन्ती । ¶ 'ग्रामधान्यं तु खेटकम्' (पृ. १६०. श्लो. १ इति वैजयन्ती । § 'गीतस्तुत्याम्' इति स्यात् ।

गभीरा द्यावापृथिव्योर्गभीरे इति नप् पुनः ।
जलेऽथ त्रिषु **गम्भीरं** निम्ने हर्षस्तु बुद्धिमान् ॥ ६३१ ॥

ब्रूते दुरवगाहे तद् गम्भीरा तु स्त्रियामियम् ।
वाचि द्यावापृथिव्योश्च गम्भीरे इति ना पुनः ॥ ६३२ ॥

समुद्रे चान्धकारे च मन्मथे च द्रुमान्तरे ।
जम्बीरसंज्ञे क्लीबं तु तत्फले सलिलेऽपि च ॥ ६३३ ॥

**गहनं** क्ली जलेऽरण्ये दुःखगह्वरयोस्त्रि तु ।
दुष्प्रवेशे **गह्वरं** तु क्ली गुहादम्भवारिषु ॥ ६३४ ॥

रहस्यप्युक्तवानेतच्छब्दवेदी धनञ्जयः ।
निकुञ्जे तु पुमानुक्तो रभसेनाथ मेघवत् ॥ ६३५ ॥

(ग्री?भी)ष्मे च दुष्प्रवेशे च **गर्गरी** तु स्त्रियामियम् ।
दधिमन्थनपात्रे च क्षेत्रपल्ल्यां द्वयोः पुनः ॥ ६३६ ॥

उग्रीवैदेहजे मर्त्यजातिभेदे झषेऽपि च ।
**गर्वरः** पुंस्यहङ्कारे महिषे तु द्वयोरथ ॥ ६३७ ॥

सन्ध्यायां गर्वरी स्त्री स्याद् **गन्धर्वस्तु** द्वयोर्हये ।
मृगभेदे गोल्पुससमाख्ये दिव्यगायने ॥ ६३८ ॥

आह गायनमात्रे च रभसः शब्दवित्तमः ।
अन्तराभवसत्त्वे च वास्तुदेवान्तरे तु ना ॥ ६३९ ॥

कोष्ठपङ्क्तौ दक्षिणस्यां प्रोक्तः षष्ठपदे स्थिते ।
पुंस्कोकिले च रभसः प्रोक्तवानथ **गन्धना** ॥ ६४० ॥

न ना प्रकाशने चापि हिंसायै सूचनेऽपि च ।
परस्योत्साहने चापि कथिता पूर्वसूरिभिः ॥ ६४१ ॥

१. 'ये' क. ङ. च. पाठः. २. 'द' क. पाठः.

**गर्मुद**स्तु द्वयोर्मर्त्यजातिभेदे निषादतः ।
श्वपाक्यां जनिते स्त्री तु गर्मुदी गर्मुदाह्वये ॥ ६४२ ॥

तृणधान्यविशेषे च **गण्डूषा** मुखपूरणे ।
द्रवप्रपञ्च आस्येन निरोध्ये शाकटायनः ॥ ६४३ ॥

गजस्य पुष्करेऽन्ये तु प्रसृतोन्मितवस्तुनि ।
अन्ये तु प्रसृते लिङ्गत्रयेऽसौ कीर्तितो बुधैः ॥ ६४४ ॥

प्रसृते तु द्रवाधारे गण्डूष इति यादवः ।
**गण्डोल**स्तु पुमान् पिण्डे गजस्य मुखपार्श्वयोः ॥ ६४५ ॥

उपरिप्रदेशयोश्च क्रिमिभेदे तु स द्वयोः ।
**गण्डीर**स्तु पुमान् कन्दजातिभेदे समष्ठिला ॥ ६४६ ॥

इति संज्ञान्तरं यस्य बहुभेषजसाधिते ।
उपयोग्यद्रवद्रव्ये क्लीं तु स्यात् तण्डुलीयके ॥ ६४७ ॥

चव्ये च स्त्री तु गण्डीरी विपत्रायां स्नुहि स्मृता ।
**गण्डक**स्तु द्वयोः खड्गमृगे ना शिशुभूषणे ॥ ६४८ ॥

नदीविशेषे विख्याते स्त्रीलिङ्गा गण्डकी स्मृता ।
**गर्दभः** पशुभेदे द्वे रासभाख्ये नपि त्वदः ॥ ६४९ ॥

कुमुदे रभसस्त्वाह श्वेते कुमुद इत्यदः ।
रूप्ये च **गरलं** तु क्लीं विषे पुंसि तु पादपे ॥ ६५० ॥

मदनाख्येऽथ **गवलं** विषाणे महिषस्य नप् ।
द्वयोस्त्वरण्यमहिषे **गर्जित**स्तु पुमानयम् ॥ ६५१ ॥

मत्तहस्तिनि तन्नादे पुनः क्लीं स्तनितेऽपि च ।
अम्बुदस्याथ पुंसि स्याद् **गर्जनो** गृञ्जनाह्वये ॥ ६५२ ॥

पलाण्डुजातिभेदेऽथ क्रियायां गर्जतेर्नपि ।
**ग्रन्थिकं** तु नपि ज्ञेयं पिप्पलीमूलसंज्ञके ॥ ६५३ ॥

भेषजे ग्रन्थिपर्णाख्यभेषजे च पुमान् पुनः ।
माद्रेये मेघलिङ्गं तु ग्रन्थो यत्रास्ति तत्र वै ॥ ६५४ ॥
ग्रन्थिलस्तु पुमाञ्ज्ञेयः करीरद्रौ विकङ्कते ।
मेघवद् ग्रन्थिसहिते रभसेनेदमीरितम् ॥ ६५५ ॥
गह्वरस्तु[1] प्रस्रवणशीले त्रिष्वेष पुंसि तु ।
स्यात् प्रस्रवणभूमौ हि गरुडस्तु पुमानयम् ॥ ६५६ ॥
वैनतेये द्वे तु पक्षिजातिभेदे स्त्रियां पुनः ।
जटायां गरुडा ना तु गवाक्षो वातवर्त्मनि ॥ ६५७ ॥
वातायनाख्ये सुग्रीवसचिवे वानरान्तरे ।
गवाक्षी तु स्त्रियामेषा गोदुम्बाख्यलतान्तरे ॥ ६५८ ॥
गिरिकर्ण्याख्यवल्ल्यां च मल्लिकायामपि त्रि तु ।
गणकः स्याज्ज्यौतिषिके तथा गणयितर्यपि ॥ ६५९ ॥
गणिका तु स्त्रियामेषा वेश्यायां किञ्च भूपतेः ।
अनूढायां कलाज्ञायां प्रियायां पुंस्त्रियोः पुनः ॥ ६६० ॥
रश्मौ गभस्तिर्बाहौ तु ना गणेरुः पुनः स्त्रियाम् ।
वशायामपि वेश्यायां कर्णिकारे पुनः पुमान् ॥ ६६१ ॥
एवं रभसनिर्दिष्टं स्याद् गरुत्मांस्तु पुंस्ययम् ।
गरुडे विहगे तु द्वे गन्धवत् तु त्रिषु स्मृतम् ॥ ६६२ ॥
गन्धयुक्ते गन्धवती पुनः पृथ्व्यां स्त्रियामियम् ।
पुर्यां योजनगन्धायां सुरायां रभसेरिता ॥ ६६३ ॥
अनादिसम्प्रदायस्तु गाण्डीवो न स्त्रियामयम् ।
पार्थचापे चापमात्रेऽप्यर्थेकोऽप्याह गाण्डिवम् ॥ ६६४ ॥
पार्थचापे च चापे च न स्त्रीत्येके व्यवस्थिताः ।
असाधुमेनमाचष्टे दोषज्ञो भागवृत्तिकृत ॥ ६६५ ॥

१. 'वे' च. पाठः. २. 'णे शिल्पे त्रि' च., 'णशिल्पे त्रि' क. पाठः. ३. 'कलिका' ग. पाठः.

**गाङ्गेयस्तु** पुमान् स्कन्दे भीष्मे चाथाभिधेयवत् ।
अपत्यमात्रे गङ्गायाः स्त्री तु हेमकशेरुणोः ॥ ६६६ ॥

रागप्रभेदे **गान्धारः** पुंसि स्त्री नागसम्भवे ।
**गान्धर्वस्तु** द्वयोरेव गन्धर्वे खे तु नप्यदः ॥ ६६७ ॥

गीतभेदेऽथ वाचि स्त्री गान्धर्वी **गारुडं** पुनः ।
विषशास्त्रप्रभेदे स्त्री रत्ने मरतकाह्वये ॥ ६६८ ॥

स्वर्णे च त्रिस्तु गरुडसम्बन्धिन्यथ **गार्भिणम्** ।
सीमन्तोन्नयनाभिख्ये स्त्रीणां संस्कारकर्मणि ॥ ६६९ ॥

गर्भिणीनां समूहेऽथ गर्भिणीयोगिनि त्रिषु ।
**ग्राहकस्तु** त्रिषु ज्ञेयो ग्रहीतरि पुमान् पुनः ॥ ६७० ॥

पक्षिणा येन गृह्यन्ते पक्षिणोऽन्येऽत्र लुब्धकैः ।
**गारित्रस्तु** पुमानुक्त आचार्ये गहने तु नप् ॥ ६७१ ॥

**ग्रामीणा** नीलिकानाम्न्यामोषधौ स्त्र्यथ भेद्यवत् ।
ग्राम्ये स्त्रियां तु **गायत्री** खदिराख्यद्रुमे स्त्रियाम् ॥ ६७२ ॥

स्त्रीनपोस्तु चतुर्विंशत्यक्षरप्रभृतिष्वसौ ।
आर्षादिषु स्याच्छन्दःसु **गायत्रस्तु** पुमानयम् ॥ ६७३ ॥

ब्रह्मचारिविशेषे स्यादुपकुर्वाणसंज्ञके ।
प्रगाथेषु च तेषु स्याद् येषामादेर्ऋचो भवेत् ॥ ६७४ ॥

गायत्रीसंज्ञकच्छन्दो **ग्रामणीस्तु** पुमानयम् ।
नापिते भोगिते[1]ऽप्याह रभसस्त्रिस्तु[2] नायके ॥ ६७५ ॥

उत्तमेऽपि भवत्येष **गिरीशस्तु**[3] पुमानयम् ।
महादेवे गिरेस्त्वीशे त्रिषु स्याद् **गिरिजा** पुनः ॥ ६७६ ॥

१. 'के' ग. पाठः. २. 'तु' च. पाठः. ३. 'रि' च. ब. पाठः.

पार्वत्यां निम्नगायां च मातुलुङ्ग्यां च सा स्त्रियाम् ।
रभसस्तु क्लीबमाह शिलाजतुनि चार्जके ॥ ६७७ ॥

भेद्यलिङ्गस्तु स ज्ञेयो धरणीधरसम्भवे ।
**गुणना** तु न नाभ्यासे शून्याङ्के चाथ **गुन्दिलः** ॥ ६७८ ॥

ना मद्दलध्वनौ क्ली तु वनेऽथो **गृञ्जनः** पुमान् ।
मधुशिग्रुसमाख्ये स्याच्छिग्रुवृक्षान्तरे तथा ॥ ६७९ ॥

पलाण्डुजातिभेदानां दशानामपि कुत्रचित् ।
भेदेऽर्थे त्वत्र मन्यन्ते क्लीबं केचन सूरयः ॥ ६८० ॥

विषदिग्धपशोस्तु क्ली मांसे ना तु **गृहस्थ**वाक् ।
द्वितीयाश्रमिणि त्रिस्तु मन्दिरस्थेऽथ पुंस्ययम् ॥ ६८१ ॥

**गैरेयः** शैलजाते स्यात् पूगवृक्षेऽथ नप्ययं दः ।
शिलाजतुन्यथ क्लीबं **गोष्पदं** गोखुरावटे ॥ ६८२ ॥

गोभिश्च सेविते देशे केचित् त्वर्थेऽत्र भेद्यवत् ।
**गोस्तनो** ना चतुर्यष्टिहारभेदे गवां स्तने ॥ ६८३ ॥

गोस्तनी तु स्त्रियां द्राक्षाभेदेऽथो पुन्नपुंसकम् ।
**गोमुखो** वाद्यभेदेऽथ क्लीबं स्यादुपलेपने ॥ ६८४ ॥

भ्रूंत तु कुटिलागारे रभसः शब्दवित्तमः ।
द्वयोस्तु नक्रेऽथ पुमान् **गोकर्णो**ऽनामया सह ॥ ६८५ ॥

अङ्गुष्ठे विनते मानं यत् तत्र श्रवणे च गोः ।
ईश्वरस्थानभेदे च मृगभेदे पुनर्द्वयोः ॥ ६८६ ॥

परम्पर इति ख्याते भुजगे च स्त्रियां पुनः ।
दूर्वासंज्ञौषधौ ज्ञेया गोकर्णी स्याद् द्वयोः पुनः ॥ ६८७ ॥

१. 'थ' क. ख. ग. पाठः. २. 'तु' ग. पाठः. ३. 'पुनः' क. ङ. च. पाठः.

**गोनासः** स्यात् तिलित्साख्यसर्पजातौ स्त्रियां पुनः।
गोर्नासिकायां गोनासा **गोपुच्छस्तु** द्वियष्टिके ॥ १८८ ॥

हारभेदे पुमान् गोस्तु लाङ्गूले पुन्नपुंसकम्।
**गोरक्षो** नागरङ्गे ना गवां तु त्रातरि त्रिषु ॥ १८९ ॥

**गोपालस्तु** पुमान् राज्ञि त्रि तु गोः पातरि त्रि तु।
**गोसङ्ख्य** इति गोपे स्याद् गोसङ्ख्या तु स्त्रियां गवाम् ॥ १९० ॥

सङ्ख्यायामथ गोयुद्धे गोसङ्ख्यं पुन्नपुंसकम्।
**गोविन्दो** वासुदेवे ना गोषु त्वधिकृते त्रिषु ॥ १९१ ॥

**गोमतं** तु नपि ज्ञेयं गव्यूतिरिति विश्रुते।
क्रोशद्वयात्मके ह्यध्वमानेऽपि मनने गवाम् ॥ १९२ ॥

**गोनर्दस्तु** पुमान् देशविशेषे द्वे तु पक्षिणि।
सारसाख्ये नपि त्वेतज्जलमुस्तेऽपरः पुनः ॥ १९३ ॥

कैवर्ते मुस्तकेऽधीते **गोलकस्तु** द्वयोरयम्।
जारजे भर्तरि मृते ना तु पिण्डेऽपि कम्बले ॥ १९४ ॥

मणिके चाजयस्त्वस्य वाच्यत्वेनापठद् द्वयम्।
गुडं गोलं च तदसत् प्राणिभेदे तु सा स्त्रियाम् ॥ १९५ ॥

गोलिका वेष्टनद्रव्ये **गोस्वामी तु** पुमानयम्।
नाट्योक्तिविषये राजपुत्रे स्यात् त्रि तु गोमति ॥ १९६ ॥

**गोतमं**[1] तु धनुर्भेदे क्ली (जडे तु त्रि) ना पुनः।
ऋषिभेदे शाक्यमुनौ **गौतमो** गौतमी पुनः ॥ १९७ ॥

स्त्रियां मृडान्यां रोचन्यां मेदोधातौ तु नप्यथ
कुञ्जरे तु द्वयोराह शब्दवेदी धनञ्जयः ॥ १९८ ॥

१. 'मस्तु ध' ग. पाठः.

*गौरिलस्तु न, ना लोहचूर्णे पुंसि तु भाषितः ।
गौरसर्षप इत्येवं रभसेनातिधीमता ॥ ६९९ ॥

गौरवं तु गुरुत्वे च कुङ्कुमे च नपुंसकम् ।
सम्माने च त्रिषु पुनर्गुरुसम्बन्धिमात्रके ॥ ७०० ॥

घट्टनं तु हिमे क्लीबं द्वे तुरङ्गोपजीविनि ।
अना संवरणे चापि चलने चापि घट्टना ॥ ७०१ ॥

घर्घरः पुनरट्टादेरधोद्वारकवाटके ।
न स्त्री वाद्यविशेषे तु वादित्रलगुडेऽपि च ॥ ७०२ ॥

घर्घरी स्त्री द्वयोस्तु स्यान्मर्त्यजात्यन्तरे विशः ।
†रन्ध्यां जातेऽथ घृतवद् घृतयुक्ते त्रिषु स्त्रियाम् ॥ ७०३ ॥

रोदस्यौ घृतवत्यौ स्तो घोषयुक्ते तु घोषवान् ।
त्रिषु घोषवती तु स्त्री वीणायामथ न स्त्रियाम् ॥ ७०४ ॥

चरणः प्राणिनां पादे वृक्षमूले च ना पुनः ।
बह्वृचादौ नपि त्वेतदाचारे गतिभक्षयोः ॥ ७०५ ॥

चपलस्तु त्रिषु ज्ञेयश्चञ्चलेऽप्यनवस्थिते ।
दुर्विनीते च शीघ्रे च पारते तु पुमानयम् ॥ ७०६ ॥

तुरुष्काख्ये च निर्यासे मर्कटे तु द्वयोरथ ।
पिप्पलीविद्युतास्तु[1] स्त्री लक्ष्म्यां तु रभसेरिता ॥ ७०७ ॥

तेनैव करिपिप्पल्यां चपलाथ त्रि चञ्चलः ।
चले विद्युति तु स्त्री स्याल्लक्ष्म्यां च पवने तु ना ॥ ७०८ ॥

खञ्जरीटखगे तु द्वे चञ्चत्कस्तु पुमान् मणौ ।
अतीव भास्वरे तु द्वे खद्योते दर्दुरेऽपि च ॥ ७०९ ॥

---

१. 'तां तु स्त्री' क. ख. च. पाठः.

* 'गौरिलस्तु पुमान् लोहचूर्णे स्याद् गौरसर्षपे' इति तु मेदिनी । † 'वैश्याद्वैदेहकं विप्रा............रन्ध्री घर्घरम्' (पृ. ७३. श्लो. १८)इति तु वैजयन्ती ।

**चन्दना** स्त्री नदीभेदे न स्त्रियां मलयोद्भवे ।
**चन्द्रकस्तु** पुमान् पक्षभेदे मेचकसंज्ञिते ॥ ७१० ॥
चन्द्रिका तु स्त्रियां ज्योत्स्नासंज्ञे चन्द्रातपे तथा ।
चन्द्रभागाख्यनद्यां च **चन्दिरं** तु जले नपि ॥ ७११ ॥
ना तु चन्द्रे हस्तिनि तु द्वयोः पुंसि तु **चङ्कुरः** ।
रथे भगाङ्कुरे च द्वे पुनर्दैत्येऽथ **चङ्क्रमः** ॥ ७१२ ॥
ना संक्रमे पुंस्त्रियोस्तु चङ्क्रमश्चङ्क्रमापि च ।
भवेच्चङ्क्रमणे तच्चाप्यल्पे[1]ऽध्वनि गतागतम् ॥ ७१३ ॥
*__चण्डिलस्तु__ पुमान् शाकविशेषे वास्तुकाह्वये ।
नापितेऽथ शुनि द्वे स्यात् कोपने तु त्रिषु स्मृतः ॥ ७१४ ॥
**चषकोऽस्त्री** पानपात्रे रभसस्त्वत्र भाषते ।
पाने[2] मधुप्रभेदे च चषकः सरके(?)‡ इति ॥ ७१५ ॥
**चण्डातः** करवीराख्यपुष्पगुल्मे पुमान् नपि ।
प्रसवेऽस्य वरस्त्रीणामप्यर्धोरुकवाससि ॥ ७१६ ॥
**चक्षुष्यः** सुभगे त्रिः स्यात् तथा स्याच्चक्षुषो हिते ।
ना पुनः पीतमुद्गे च सक्तुष्वपि तथापरे ॥ ७१७ ॥
रभसः पुण्डरीकाख्यतरौ कतकपादपे ।
कुलाल्याख्ये तु भैषज्ये §द्रोणपु(ष्पा ? ष्प्या)ख्यझाटके† ॥ ७१८
चक्षुष्या स्त्री पुमांस्तु स्याच्च्यवनो मुनिपुङ्गवे ।
क्लीबं तु प्रच्युतौ ना तु **चलनोऽङ्घ्रौ** त्रिषु त्वयम् ॥ ७१९ ॥

१. 'च स्वल्पे' ग. पाठः. २. 'त्रे' ग. ङ. पाठः.

* 'चण्डिलः क्षुरमर्दी स्यात्' (पृ. ११[illegible] श्लो. २६) इति वैजयन्ती. 'चन्द्रिलः पुं। वास्तूकशाके भगे च नापित' इति तु मेदिनी. ‡ चषकसरकौ पर्यायौ । 'सरको मदिरापात्रे मदिरापानमद्ययोः' इति हेमचन्द्रः । § द्रोणपुष्पी क्षुपभेदो द्रोणवृक्षश्च । †'झाटो निकुञ्जे कान्तारे व्रणादीनां च मार्जने' इति मेदिनी ।

मवेच्चलनशीले क्ली पुनर्भूषणकम्पयोः ।
गमने वस्त्रभेदे च चलना तु स्त्रियामियम् ॥ ७२० ॥

पुंश्चल्यां गौतमेनोक्ता तथान्यैश्च महर्षिभिः ।
चर्वणा तु स्त्रियां नीलमक्षिकायामथो नपि ॥ ७२१ ॥

ओदने चमसो न स्त्री यज्ञपात्रे परः पुनः ।
कर्णावयवभेदे चेत्याह मेघे तु पुंस्ययम् ॥ ७२२ ॥

स्त्रियां तु चमसी भित्ते मुद्गादीनां कृते भवेत् ।
व्यञ्जने चरितं तु क्ली गतिभक्षणयोस्तथा ॥ ७२३ ॥

आचारे भक्षिते तु त्रिश्चकोरस्तु द्वयोरयम् ।
पक्षिभेदे पुमांस्तु स्याद् गिरिभेदे च चत्वरम् ॥ ७२४ ॥

स्थण्डिले प्राङ्गणे च क्लीं पुमांस्तु स्याच्चतुष्पथे ।
स्त्री तु स्याद् देवताभेदे रथ्यायामपि चत्वरी ॥ ७२५ ॥

चक्राटो विषवैद्ये द्वे दीनारे तु पुमानयम् ।
चतुर्थे तु चतुर्णां त्रिः पूरणे च चतुर्थ्यसौ ॥ ७२६ ॥

तुरीयायां विभक्तौ स्त्री विनायकतिथावपि ।
*चप्पटस्तु चपेटे ना पर्पटे च त्रिषु त्वयम् ॥ ७२७ ॥

स्यात् स्फारविपुले चैव रभसेन समीरितः ।
चतुरस्तु त्रि दक्षे स्याद् धीमत्यप्यथ भाषते ॥ ७२८ ॥

विदुषामग्रणीरेनं विदग्धे शाकटायनः ।
क्लीबं त्वल्पभ्रुकुट्यां स्याच्छालायामपि हस्तिनः ॥ ७२९ ॥

मृगभेदे तु चतुरा स्त्री तस्या लक्षणं विदुः ।
चतुरा तु घनस्निग्धरोमा श्यामा सबिन्दुका ॥ ७३० ॥

१. 'न' क. च. पाठः. २. 'वा' क. च. पाठः. ३. 'स्था' क. च. पाठः ४. 'रं तु त्रि' ङ. पाठः.

'चर्पट' इति स्यात् । तथाच मेदिनी—'चर्पटः स्फारविपुले चपेटे पर्पटेऽपि च' इति ।

इत्यथ स्त्री **चतुष्की** स्यात् ख्याते यवनिकान्तरे ।
आख्यानां मशाकहरीत्यजयस्त्वाह शब्दवित् ॥ ७३१ ॥

लिङ्गभेदमनुक्त्वैव भवने यष्टिकान्तरे ।
ना तु सङ्घे चतुर्णां स्यात् प्लक्षवृक्षे तु दृश्यते ॥ ७३२ ॥

शाले वररुचेर्ना तु **चक्राङ्कः** शार्ङ्गधन्वनि ।
दध्यालीसंज्ञवल्ल्यां तु चक्राङ्का स्त्री द्वयोः पुनः ॥ ७३३ ॥

**चक्राङ्गो** हंसविहगे चक्राङ्गी तु स्त्रियामियम् ।
उक्ता कटुकरोहिण्यामथाग्नौ **चर्षणिः** पुमान् ॥ ७३४ ॥

वध्वां बुद्धौ मनुष्ये च व्यवसाये च ना पुनः ।
**चतुष्पाद्** रावणे त्रिस्तु चतुरङ्घ्रौ पुमान् पुनः ॥ ७३५ ॥

मयूरे **चन्द्रकी** द्वे तु व्याघ्रेऽथो भेद्यालिङ्गकम् ।
ज्ञेयं चन्द्रकवल्यर्थे **चातुरस्तु** पुमानयम् ॥ ७३६ ॥

शकटे चक्रगण्डौ च त्रिस्तु स्याद् दृष्टिगोचरे ।
तथा चतुरसम्बन्धिन्याशुकारिण्यथ द्वयोः ॥ ७३७ ॥

**चाक्रिको** घाण्टिके चापि तैलिके चाप्यथो नपि ।
प्रकीर्णके **चामरं** स्याद्ध्रीबेरे च त्रिषु त्वदः ॥ ७३८ ॥

यत् स्याच्चमरसम्बन्धि तत्र **चाम्पेय**वाक् पुनः ।
स्वर्णकिञ्जल्कयोश्चापि तथा चम्पकपादपे ॥ ७३९ ॥

नागकेसरवृक्षे च पुमान् क्लीबं पुनस्तयोः ।
प्रसवेऽथ बुधैरुक्त**श्चारणो** ना कुशीलवे ॥ ७४० ॥

देवजातिविशेषे तु द्वयोः स्त्रीशण्डयोः पुनः ।
अर्थे चारयतेर्धातोश्चारणा **चाल्नी** पुनः ॥ ७४१ ॥

१. 'ण्डे' ङ. च. पाठः. २. 'षु' ङ, 'तु' ग. पाठः.

स्त्रीनपोस्तितउन्यर्थे तथा चालयतेरपि ।
रूपे तु तत्र भवतश्चालनं चालना तथा ॥ ७४२ ॥
**चित्रकस्तु** पुमान् वह्निसंज्ञायां भेषजौषधौ ।
तन्मूले च तथैरण्डे द्वे तु राजिलभोगिनाम् ॥ ७४३ ॥
त्रयोदशानां भेदानामेकस्मिन् व्याघ्र एव च ।
क्लीबं तु पुण्ड्रेऽथ पुमान् कालिङ्गाख्यलतान्तरे ॥ ७४४ ॥
**चित्रलश्चित्रला तु** स्त्री छाग्यां चित्रवति त्रिषु ।
**चित्राङ्गो** द्वे व्याघ्रभेदे *पिण्डाकारसमाख्यके ॥ ७४५ ॥
त्रि तु चित्रशरीरे स्या**च्चिकुरस्तु** पुमानयम् ।
केशे वृक्षे वृक्षभेदे रभसः प्रोक्तवानमुम् ॥ ७४६ ॥
द्वयोस्तु गृहबभ्रौ स्यात् सरीसृपविहङ्गयोः ।
चञ्चले च त्रिषु ज्ञेयं युवतीनां विलोचने ॥ ७४७ ॥
ईषन्निर्मीलिते क्लीबं **चिक्कणं**[1]स्त्वभिधेयवत् ।
मसृणे ना तु कं[2]ट्वाख्यधान्येऽथ **चिपिटः** पुमान् ॥ ७४८ ॥
पृथुकाह्वयभक्ष्ये स्यात् त्रि तु पिच्छितविस्तृते ।
**चित्रकृत्** तु पुमानुक्तस्तिमिशाह्वयपादपे ॥ ७४९ ॥
त्रि तु चित्रकरेऽथ स्त्री **चुलुम्पा** छागयोषिति ।
पुमांस्तु गगनेऽथ द्वे **चुलुको** द्वीपिसंज्ञके ॥ ७५० ॥
व्याघ्रभेदे द्रवाधारप्रसृते तु नरस्त्रियोः ।
चुलुकं[3] रभसस्त्वाह भाण्डभेदे पुमानयम् ॥ ७५१ ॥
इत्येवं **चूलिकस्तु** स्यात् तिले ना द्वे तु कुक्कुटे ।
**चूलिका** तु स्त्रियां जातिच्छन्दोभेदे गजस्य च ॥ ७५२ ॥

१. 'णं त्वभि' ङ. पाठः. २. 'ख' ङ. पाठः. ३. 'को' ग. ङ. पाठः.

---

*'पिण्डारक' इति स्यात्। 'पिण्डारकस्तु चित्राङ्गो महादंष्ट्रः' (पृ. ६५. श्लो. ४) इति वैजयन्ती ।

**कर्णमूले** तथाधीते **रभसः** शब्दवित्तमः ।
नाटकाङ्गेऽथ **चूटालस्तु**चटाख्यमहीरुहे ॥ ७५३ ॥
त्रिस्तु चूटावति स्त्री तु वेदवाक्ये हि **चोदना** ।
कर्कट्यां चोदनीति स्याद् विरोधोक्तौ तु नपुंस्त्रियोः ॥ ७५४ ॥
चोदना चोदनं चेति प्रेषणे च विदुर्बुधाः ।
**चोलकी** तु त्रिषु ज्ञेयश्चोलकेन समन्विते ॥ ७५५ ॥
पुमांस्तु नागरङ्गे च करीरे किष्कुपर्वणि ।
**चौरिको** ना पुराध्यक्षे द्यूतकारे तु स द्वयोः ॥ ७५६ ॥
स्त्रियां तु चौरिका स्तेये **छत्वरस्तु** पुमानयम् ।
निकुञ्जे कुड्यहीने तु मन्दिरे स्यान्नपुंसकम् ॥ ७५७ ॥
शय्योत्तरपटे च त्रिः पुनः स्याद् भर्त्सके परे ।
कुत्सकेऽथो अहिच्छत्रे **छत्राकं** क्ली स्त्रियां पुनः ॥ ७५८ ॥
छत्राकीत्येव रास्नायां **छगलस्तु** द्वयोरजे ।
ऋषिभेदे तु ना स्त्री तु च्छगली वृद्धराजके$ ॥ ७५९ ॥
रभसेनोदिता ना तु **च्छर्दनो** मदनद्रुमे ।
निम्बाख्यपादपे चैनं रभसो वक्त्यलम्बुके ॥ ७६० ॥
शुनामपि ज्वरेऽथ स्यात् त्रपुसे छर्दनी स्त्रियाम् ।
छर्दना तु न नोद्भ्रान्तौ **छान्दसः** श्रोत्रिये पुमान् ॥ ७६१ ॥
छन्दःसम्बन्धिनि त्रि स्यात् करीषाग्नौ पुनः पुमान् ।
**छागण**स्त्रि तु सम्बद्धे छगणेनोच्यतेऽपि तत् ॥ ७६२ ॥
छगणं पशुविष्ठेति **च्छित्वरस्तु** पुमाञ्छरे ।
हर्षनन्दी तु शठ इत्याह तत्रैष भेद्यवत ॥ ७६[illegible]

१. 'ड' क. च. पाठः. २ 'मांश्वरे' [illegible]

$ 'वृद्धदारके' इति स्यात् । '[illegible]छगलश्छागे छगली वृद्धदारकभेषजे' इति हेमच[illegible] 'छगलं नीलवस्त्रे ना छागे स्त्री वृद्धदार[illegible]' इति मेदिनी च ।

छिदिरस्तु पुमानग्नौ वज्रे क्ली मूषिके द्वयोः ।
अक्ली त्वायुधसामान्ये वज्रशब्दः प्रयोगवान् ॥ ७६४ ॥
तस्येह ग्रहणं युक्तं तथा चाह धनञ्जयः ।
छिगुरस्तु द्वयोः सर्पे गेहबभ्रौ च नप् पुनः ॥ ७६५ ॥
सोत्प्राशहासे छुरितं त्रि तु च्छिन्नेऽथ नप्यदः ।
छेदनं व्रश्चने विद्यात् कतकस्य फलेऽपि च ॥ ७६६ ॥
साधने तु त्रिषुच्छित्तेरना तु च्छेदना भवेत् ।
धातोश्छेदयतेरर्थे नृलिङ्गस्तु परस्मृतः ॥ ७६७ ॥
शङ्खे स्याज्जलजं तु क्ली पद्मे द्वे मत्स्यकूर्मयोः ।
जलदस्तु पुमान् मेघे जलदा विद्युति स्त्रियाम् ॥ ७६८ ॥
जलप्रदे तु त्रिः क्ली तु जतुकं हिङ्गुनि स्मृतम् ।
स्त्रियां त्वजिनपत्राख्यक्षुद्रपक्ष्यन्तरे स्मृता ॥ ७६९ ॥
स्याच्चक्रवर्तिनीसंज्ञे प्रोक्ता च स्थावरान्तरे ।
जयन्तस्तु पुमानिन्द्रपुत्रे स्त्री तु जयन्त्यसौ ॥ ७७० ॥
कात्यायन्यामिन्द्रपुत्र्यां तर्कार्यां तिथिभेदके ।
त्रिस्तु जेतर्यथो जीर्णे जरणं क्ली च हिङ्गुनि ॥ ७७१ ॥
जीरके तु पुमान् कृष्णजीरके रभसोऽपठीत् ।
अना तु जरयत्यर्थे जरणाथो जरन्तवाक् ॥ ७७२ ॥
स्थविरे भेद्यलिङ्गः स्यान्महिषे तु द्वयोरयम् ।
जर्जरस्त्वास्त्रियामिन्द्रध्वजे वाद्यान्तरे तु ना ॥ ७७३ ॥
दण्डिकासंज्ञके द्वे तु कोकिले भेद्यवत् पुनः ।
जीर्णे भिन्ने परे ना तु जगलं पिष्टमद्यके ॥ ७७४ ॥
मेदके कितवे तु त्रि जङ्गलस्तु त्रि निर्जले ।
देशे क्लीबं तु मांसेऽथ जम्बुको वरुणे पुमान् ॥ ७७५ ॥

---

१. 'क्ली तु प' ग. पाठः.

**द्वे** सृगालेऽथ **जम्बालः** पङ्कशैवलयोरयम् ।
स्त्री पुंसि तु **जम्बीरः** पादपे जम्भलाह्वये ॥ ७७६ ॥
फणिर्जकाख्यस्तम्बे च क्ली तु तत्प्रसवेऽथ ना ।
**जम्भलो** यक्ष्मभेदे स्याज्जम्बीराख्यतरावपि ॥ ७७७ ॥
क्ली तु तत्प्रसवेऽथो ना **ज्वलनो**ऽग्नौ नपि त्वदः ।
दीपने ज्वालने तु स्याज्ज्वलना न पुमानथ ॥ ७७८ ॥
**जवनो** वेगयुक्ते त्रिर्गतौ तु क्ली परे पुनः ।
हेतौ गतिविशेषस्य वेग इत्यनिले तु ना ॥ ७७९ ॥
**जठरं** तूदरे न स्त्री त्रिर्बद्धे कठिनेऽपि च ।
**जनित्रं** तु नपि प्रोक्तं सामभेदेषु केषुचित् ॥ ७८० ॥
धनञ्जयेन तु प्रोक्ता जनित्री मातरि स्त्रियाम् ।
**जनकः** पुंसि पितरि सीताताते च राजनि ॥ ७८१ ॥
उत्पादके तु त्रिषु स क्लीबं तु **जननं** कुले ।
उत्पत्तौ च स्त्रियां त्वेषा जननी मातरि स्मृता ॥ ७८२ ॥
करुणायां च **जटिलः** पुनस्त्रिर्जटया युते ।
जटिला तु स्त्रियां मांस्यां वचायां चापि नप्यदः ॥ ७८३ ॥
ह्रीबेरेऽथ **जघन्य**स्त्रिः पाश्चात्ये गर्हिते तथा ।
जघने(त्वे? स्थे) नपि त्वेतद् विज्ञेयं रक्तचन्दने ॥ ७८४ ॥
**जहकस्तु** पुमान् काले त्रि तु क्षुद्रे परः पुनः ।
त्यागिन्याह **जरायुस्तु** न स्त्री गर्भाशयेऽथ नप् ॥ ७८५ ॥
आरण्यके सामभेदे **जलात्मा** तु द्वयोरयम् ।
महिषे त्रि तु तत्र स्याद् यस्यात्मा जडतां गतः ॥ ७८६ ॥
कालेयके तु क्लीबं स्याज्जापकं मेघवत् पुनः ।
जपकारिण्यथ स्त्री स्याज्जङ्घाया **जाघनी** त्रि तु ॥ ७८७ ॥

१. 'म्फ' क. ग. च. पाठः. २. 'ने' क. पाठः.

जघनस्य तु सम्बन्धिन्यथो **जाबालवाग्** द्वये ।
अजाजीवे जबालाया अपत्ये चाथ **जाह्नवी** ॥ ७८८ ॥

स्त्री गङ्गायामपत्ये तु द्वे जह्नोर्जाह्नवः स्मृतः ।
धनञ्जयेन तु क्लीबं जाह्नवं जन्तुनि स्मृतम् ॥ ७८९ ॥

अथात्र रभसेनोक्तं **जाहको** द्वे बिडालके ।
ना तु कारुण्डिकायां च घोङ्घे चेति महाधिया ॥ ७९० ॥

गन्धद्रव्ये त्वगुर्वाख्ये **जाङ्गलं** क्ली त्रिषु त्वदः ।
यज्जङ्गलस्य सम्बन्धि तत्र द्वे तु कपिञ्जले ॥ ७९१ ॥

स्त्रियां तु शूकशिम्ब्यां स्याज्जाङ्गली ना तु **जालकः** ।
तिले क्षारकसंज्ञे तु बालपुष्पान्तरे नपि ॥ ७९२ ॥

गवाक्षभद त्वपरे स्त्री त्वयामयकङ्कट ।
**जालिका**थो वागुरिके दाम्भिके च त्रि जालिकः ॥ ७९३ ॥

द्वयोस्तु लूतिकासंज्ञक्षुद्रजन्त्वन्तरे मतः ।
**जाम्बवां**स्तु पुमान् ऋक्षराजभेद महाबले ॥ ७९४ ॥

रामसाहायकं कर्तुं रावणस्य वधे पुरा ।
ब्रह्मणो जृम्भमाणस्य वक्त्राद् यः समजायत ॥ ७९५ ॥

तत्र जाम्बवती तु स्त्री तस्य जाम्बवतः सुता ।
पत्नी कृता या कृष्णेन न निहत्य रसातले ॥ ७९६ ॥

तस्यामथ द्वयोर्ज्ञेयो **जिह्वालः** साग्मयके ।
पृषदंशे च ना तु स्या**ज्जिगर्तु**र्वह्निमार्गयोः ॥ ७९७ ॥

तथा प्राणेषु दिवसेऽप्यथ द्वे ब्राह्मणेऽथ ना ।
शत्रौ **जिघांसु**स्त्रिषु तु हन्तुमिच्छौ पुमान् पुनः ॥ ७९८ ॥

**जीवकः** स्यात् क्षपणके तथैवासनपादपे ।
त्रि तु श्रेष्ठे प्राणितरि वृद्ध्याजीविनि सेवके ॥ ७९९ ॥

स्त्रियां तु जीविका ज्ञेया जीवन्त्याख्यलतान्तरे ।
आजीवे च स्मृताथ क्ली **जीवितं** प्राणने तथा ॥ ८०० ॥

प्राणेषु च त्रिषु त्वेतज्जीवेर्ण्यन्तस्य कर्मणि ।
तथैव प्राणितवति **जीवला** तु स्त्रियामियम् ॥ ८०१ ॥

वचायामृषिभेदे तु नाथ कूर्ममयूरयोः ।
**जीवथो** द्वे अथ पुमान् **जीवन्त** ऋषिभेदके ॥ ८०२ ॥

जीवन्ती तु स्त्रियां ज्ञेया जीवन्त्याख्यलतान्तरे ।
ज्योतिष्मत्यां गुळूच्यां च त्रि तु स्याज्जीवतादिति ॥ ८०३ ॥

स्यादाशीर्विषये जीवितरि क्लीबं तु **जीवनम्** ।
जीविकायां जलेऽन्ने च प्राणने च स्त्रियां पुनः ॥ ८०४ ॥

जीवन्त्याख्यलताजातौ जीवनी शार्ङ्गिणस्तथा ।
नवानामपि शक्तीनामेकशक्ताविय पुनः ॥ ८०५ ॥

मेदासंज्ञौषधीभेदे टाबन्ता स्यादना पुनः ।
जीवना जीवयत्यर्थे **जीवद**स्तु रिपौ पुमान् ॥ ८०६ ॥

वैद्ये च भेद्यवत् त्वेष जीवस्य स्यात् प्रदातरि ।
जीवस्य स्याच्छेत्तरि च **जीवातु**स्तु नृशण्डयोः ॥ ८०७ ॥

स्याज्जीवनौषधे केचित् त्वौषधे सलिलान्नयोः ।
द्रव्ये च रभसस्त्वाह जीवे बहुविदां वरः ॥ ८०८ ॥

**जुङ्गित**स्तु द्वयोर्हीनवर्णे त्रिषु तु वर्जिते ।
क्लीबं तु वर्जनेऽथ क्ली **जृम्भितं** स्याद् [illegible] ॥ ८०९ ॥

जृम्भणे च त्रि तूत्फुल्ले विवृ[illegible]न्ययम् ।
नीललोहितसम्मिश्रवर्णे त[illegible] तु त्रिषु ॥ ८१० ॥

१. '[illegible]' [illegible] पाठः. २. 'के' ग. पाठः.

यावनालाख्यधान्ये तु जोन्नाला[1] स्त्री त्रिषु त्वदः ।
ज्योतिष्मज्ज्योतिषा युक्ते स्त्री तु ज्योतिष्मती स्मृता ॥ ८११ ॥
पिण्ड्याख्यस्थावरे क्षुद्रधान्ये यस्याह्वयान्तरम् ।
गवीथुरिति ना तु स्याज्ज्योतिषो[2] मासि कुत्रचित् ॥ ८१२ ॥
ज्योतिःसम्बन्धिनि त्रि स्याज्झर्झरं तु कलौ युगे ।
नदप्रभेदे च प्राह रभसः शब्दवित्तमः ॥ ८१३ ॥
वाद्यभेदे च ना त्रिस्तु विशीर्णे टट्टरस्तु ना ।
भेरीनादे टट्टरी तु लम्बापटहसंज्ञके ॥ ८१४ ॥
वाद्यभेदे स्त्रियां मिथ्यावादे च रभसोऽपठीत् ।
*टागरष्टङ्कनक्षारे केकराख्ये तु वीक्षिते ॥ ८१५ ॥
अजयः प्राह रभसो हेलाविभ्रमगोचरे ।
ना भेद्यलिङ्गं तु तथा केकराक्षे शरीरिणि ॥ ८१६ ॥
‡टुण्डुकस्तु पुमान् वृक्षभेदे[3] शोणकसंज्ञके ।
स्तोकार्थे तु[4] पठत्येनं रभसो भेद्यलिङ्गकम् ॥ ८१७ ॥
तरलं तु त्रिषु ज्ञेय चञ्चले भास्वरेऽपि च ।
हारमध्यगरत्ने तु पुमान् हारे च नप् पुनः ॥ ८१८ ॥
चर्मकोशे स्त्रियां तु स्याद् यवागूसुरयोर्भवत् ।
अथास्त्री खजके फेने तण्डकोऽन्यस्त्ववोचत ॥ ८१९ ॥
व्याख्यातामरकोशस्य छन्दोभेद इति भ्रमात् ।
तरुजस्तु पुमानग्नौ भेद्यलिङ्गं तु वृक्षजे ॥ ८२० ॥

१. 'ज्योर्नाला' क. च., 'जोर्नाला' ङ. पाठः. २. 'षे' ग. पाठः ३. 'विशेषे शोणसं' ग. पाठः. ४. 'षु' ग. पाठः.

* 'टगरष्टङ्कनक्षारे ना केकरदृशि त्रिषु' (पृ. २६०. श्लो. ४१) इति तु वैजयन्ती । 'टगरष्टङ्कणक्षारे हेलाविभ्रमगोचरे' इति मेदिनी । 'अथ टगरष्टङ्कणकेकराक्षयोः' इति हेमचन्द्रश्च ।
‡ 'टुण्टुकः शोणकाल्पयोः' इति तु मेदिनी ।

तरुणस्तु द्वयोर्यूनि नवीने त्वभिधेयवत् ।
एरण्डवृक्षे तु पुमान् रभसस्त्वन्यथावदत् ॥ ८२१ ॥

कुब्जपुष्पैरण्ड इति तमिस्रा तु स्त्रियामियम् ।
ध्वान्तरात्रौ तथा रात्रौ स्यादन्धतमसे त्वना ॥ ८२२ ॥

तमोमात्रे परेऽथास्त्री त्रसरः सूत्रवेष्टने ।
शलाकामण्डले ना तु वर्णकौशेयसूत्रके ॥ ८२३ ॥

तपनस्तु पुमानग्नौ सूर्ये च नरकान्तरे ।
भल्लातकतरौ ग्रीष्मे क्लीबलिङ्गं तु मन्वते ॥ ८२४ ॥

तप्तावथ पुमान् सर्पराजभेदे हि तक्षकः ।
ताक्ष्णि चाथो तक्षितरि त्रिस्त्वक्सारस्तु पुंस्ययम् ॥ ८२५ ॥

वेणौ तृणद्रुमाख्येषु तालहिन्तालकादिषु ।
क्ली तु तत्प्रसवे स्त्री तु त्वक्सारा वल्लिषु[2] स्मृता ॥ ८२६ ॥

त्वरितं तु त्वरायां क्ली स्याच्छीघ्रे त्वभिधेयवत् ।
तण्डुलस्तु नृलिङ्गः स्याद् व्रीह्यादिफलबीजके ॥ ८२७ ॥

विडङ्गे च स्त्रियां तु स्यात् पिप्पल्यां तण्डुलाथ ना ।
तर्कारः[3] पादपे तक्रे नवनीतेन संयुते ॥ ८२८ ॥

स्यात् सद्योमथिते स्त्री तु तर्कारी स्थावरान्तरे ।
वैजयन्तीति विख्याते तमसा तु स्त्रियामियम् ॥ ८२९ ॥

नदीभेदे परैरुक्तो ना रूपाध्यवसाययोः ।
त्वक्पत्रं तु वराङ्गाख्यगन्धद्रव्ये नपुंसकम् ॥ ८३० ॥

त्वक्पत्री रभसेनोक्ता स्त्रियां बाष्पाख्यभेषजे ।
तगरं तु नताभिख्ये गन्धद्रव्ये नपुंसकम् ॥ ८३१ ॥

१. ‘ब्जं’ क. ङ., ‘ब्जः’ च. पाठः. २. ‘लि’ ङ. पाठः. ३. ‘क्का’ क. ग. च. पाठः
४. ‘त’ ग. पाठः

नन्द्यावर्तस्य[1] पुष्पे च ना पुनः पुष्पगुल्मके ।
नन्द्यावर्ताह्वये त्रिस्तु **तरन्तः** स्यात् तरीतरि ॥ ८३२ ॥

अन्यस्तु भेक इत्याह तत्र द्वे अथ नप्यदः ।
**तरत्रं**[2] स्यात् प्लवे त्रिस्तु घासहारिण्यथ त्रिषु ॥ ८३३ ॥

नवाम्बरे **तन्त्रकं** स्याद् गुलूच्यां तु स्त्रियामियम् ।
तन्त्रिकेति[3] वदत्येकस्**तर्पणं** तु नपुंसकम् ॥ ८३४ ॥

तृप्तावपि गुडाद्याढ्यलाजसक्तुषु चेन्धने ।
अना तु तर्पयत्यर्थे शृङ्गाटाख्ये तु पुंस्ययम् ॥ ८३५ ॥

स्तम्बे जलोद्भवे ना तु **ताविषः*** सिन्धुनाकयोः ।
बले च स्त्री तु तविषी स्याद् वात्यादेवकन्ययोः ॥ ८३६ ॥

भुवीन्द्रपुत्र्यां चाथ त्रि**स्तलिनं** विरलाल्पयोः ।
अजयस्त्वब्रवीत् तुच्छे तलिनी तु स्त्रियामियम् ॥ ८३७ ॥

अट्टालिकायां **तपसः** पुनश्चन्द्रे पुमांस्त्रि तु ।
महति स्यादथो सूर्ये **तरणि**र्वारिधावपि[4] ॥ ८३८ ॥

स्त्रियां[5] तु नावि नद्यां च पुष्पस्तम्बान्तरे तथा ।
कुमारीसंज्ञके किञ्च व्रजस्तम्भे स चाप्ययम् ॥ ८३९ ॥

गवामुत्थापनं काष्ठं पतितानां समीरितम् ।
सज्जनस्तु रयेऽप्याह त्रि तु क्षिप्रे पुमान् पुनः ॥ ८४० ॥

**तपस्वी** शिशिरर्तौ च चन्द्रे च त्रिस्तु तापसे ।
शोच्ये च स्त्री तु मांस्याख्यगन्धद्रव्ये तपस्विनी ॥ ८४१ ॥

१. 'ताख्यपु' ग. पाठः. २. 'रु' ग. पाठः. ३. 'न्त्र' ग. पाठः. ४. 'रि' च. पाठः. ५. 'ति' क. च. पाठः. ६. 'स्त्री तु नावि च नद्यां च पु' क. ङ. च. पाठः.

* 'भुवीन्द्रपुत्र्यां तविषी ताविष्यब्धिर्दिवोर्नरौ' (पृ. १६०. श्लो. ४२) इति वैजयन्ती । 'तरीषः शोभनाकारे भेलेऽब्धिव्यवसाययोः । तरीषी शक्रकन्यायां पुंसि स्वर्गे महोदधौ' इति तु मेदिनी ।

**तरस्वी**ति द्वयोर्व्याघ्रे वानरेऽप्यथ मेघवत् ।
वेगवद्बलिनोरन्ये पुनः शूरेऽप्यधीयते ॥ ८४२ ॥
तरङ्गवति तु त्रि स्यात् **तरङ्गी** स्त्री तु कीर्तिता ।
तरङ्गिणी हरिद्रायां निम्नगायां च ना पुनः ॥ ८४३ ॥
स्वर्गे स्यात् **ताविषः** स्त्री तु ताविषीन्द्रसुताभुवोः ।
वात्यायां देवकन्यायां क्ली तु तेजसि ताविषम् ॥ ८४४ ॥
**तारका** त्वपुमानक्षितारानक्षत्रयोस्तथा ।
दैत्यभेदे तु ना क्ली तु तारकं सर्वविन्मतौ* ॥ ८४५ ॥
मेघलिङ्गं तु नरितृतारयित्रोरथो नपि ।
कवाटोद्घाटयन्त्रे च **तालकं** भूषणान्तरे ॥ ८४६ ॥
पुमांस्तूष्णगुणे त्रिस्तु तद्वत्यथ नपुंसकम् ।
**ताम्बूलं** वृक्षपत्रेऽपि मुखभूषणवस्तुनि ॥ ८४७ ॥
शुक्तिचूर्णं पूगफलं नागवल्लीदलं तथा ।
इति त्रयाणां वस्तूनां समाहारात्मके भवेत् ॥ ८४८ ॥
रभसस्तूक्तवानेतद् गुवाकफलमात्रके ।
ताम्बूली तु स्त्रियां नागवल्ल्यां स्यात् स्त्री तु **तामसी** ॥ ८४९ ॥
प्रावृण्निशायां दुर्गायां निशामात्रे तु कश्चन ।
त्रिस्तमोगुणसंयुक्ते तमःसम्बन्धिमात्रके ॥ ८५० ॥
**ताण्डव**स्त्वस्त्रियां नृत्ते तृणभेदे च भाषितः ।
**तारण**स्तु पुमान् मासे सङ्क्रान्त्यव्रधिके रवेः ॥ ८५१ ॥
तारणी तु स्त्रियां गोष्ठ्यामथ स्यात् तारणा न ना
अर्थे तारयतेस्त्रिस्तु तरणेस्तरणस्य च ॥ ८५२ ॥
सम्बन्धिनि **त्रापुषं** तु रजते क्ली त्रिषु त्वदः ।
विकारे त्रपुणो ना तु **तानलो** लोहकटके ॥ ८५३ ॥

---

* 'ओङ्कारः प्रणवस्तारस्तारकं सर्वविन्मतिः' (पृ. १०२. श्लो. २३३) इति वैजयन्

मनोजवे तु त्रि स्याच्च तते़ऽथो तातगुः पुमान् ।
क्षुद्रताते त्रि तु हिते तातायाथास्त्रियां भवेत् ॥ ८९४ ॥

तिलकः पुण्ड्रके क्षुद्रतिले त्वेष पुमांस्तथा ।
श्रीमत्संज्ञे वृक्षभेदे तथा कुरवकाह्वये ॥ ८९५ ॥

तिलकालकसंज्ञे च पिप्लुभेदे नपि त्वदः ।
जठरावयवे क्लोमसंज्ञे द्वे तु हयान्तरे ॥ ८९६ ॥

एतद् रभसकोशोक्तमथ स्यात् तिमिरोऽस्त्रियाम् ।
अन्धकारेऽक्षिरुग्भेदे तिमिग तु स्त्रियामियम् ॥ ८९७ ॥

वाद्यभेदे तिरीटस्तु रक्तलोध्रे पुमानयम् ।
मेकुटे तु नपि स्त्री तु वेदर्यां स्यात् तिरीटिका ॥ ८९८ ॥

त्रिकूटस्तु सुवेलाख्यगिरिभेदे नृलिङ्गकः ।
सामुद्रलवणे तु क्ली समासाद्यत्र पूर्ववत् ॥ ८९९ ॥

तिलित्सम्तु द्वयोः सर्पभेदे गोनसंसंज्ञके ।
नरक्षुसंज्ञके व्याघ्रभेदे त्रिदिववाक् पुनः ॥ ८१० ॥

ना म्वर्गाकाशयोः क्लीबे त्वन्ये केचित् स्त्रियां पुनः ।
एलायां निम्नगाभेदे त्रिदिवा त्रिपदी पुनः ॥ ८११ ॥

हस्त्यङ्घ्रिबन्धरज्जौ स्त्री पदत्रयसमाहृतौ ।
त्रि तु यस्य पदानि स्युस्त्रीणि तत्र स्त्रियां पुनः ॥ ८१२ ॥

श्वेतासंज्ञलतायां स्यात् त्रिपुटा त्रिपुटीति च ।
एलायां त्रिपुटैव स्यात् सूक्ष्मायां रभसः पुनः ॥ ८१३ ॥

१. 'कृष्णति' क. ख. च. पाठः. २. 'कर्कटे' ग. पाठः. ३. 'विदार्यां' ग. पाठः
४. 'पुत्रव' ग. पाठः. ५. 'ना' ग. च. पाठः.

मल्लिकायामपि प्राह नरं तीरसतीनयोः।
बहुव्रीहौ पुनस्त्रि स्यात् **त्रिवृता** तु लतान्तरे ॥ ८६४ ॥
श्वेताख्ये स्त्री त्रिगुणिते पुनः स्यात् त्रिरथ स्त्रियाम्।
चिञ्चायां **तिन्त्रिणी** दैत्यविशेषे तु पुमानयम् ॥ ८६५ ॥
**त्रिपुभा** तु स्त्रियां गौरसर्षपे सितसर्षपे।
पुनर्नाथ **त्रिपक्षी** स्त्री पक्षत्रयसमाहृतौ ॥ ८६६ ॥
पक्षत्रयान्तकर्तव्यश्राद्धे प्रेतस्य च त्रि तु।
बहुव्रीहौ **त्रिमार्गा** तु स्त्री गङ्गायां त्रिमार्ग्यसौ ॥ ८६७ ॥
मार्गत्रयसमाहारे बहुव्रीहौ तु स त्रिषु।
अथ **त्रिगन्ध**मेलात्वक्पत्राणां क्ली समुच्चये ॥ ८६८ ॥
अर्थलिङ्गसमासांस्तु तर्कयेदत्र पूर्ववत्।
पुरत्रये तु **त्रिपुरी** नपुंस्त्रियोस्त्रिपुरस्तु ना ॥ ८६९ ॥
मदमत्ताख्यधुर्धूरभेदेऽथ द्वे **त्रिरेख**वाक्।
चिक्रोडसंज्ञाखुभेदे ना तु शङ्खेऽथ मेद्यवत् ॥ ८७० ॥
बहुव्रीहावथ क्लीबं **त्रिशिखं** स्यात् त्रिशूलके।
शिरोभूषणभेदे च मेद्यलिङ्गं तु मन्यताम् ॥ ८७१ ॥
बहुव्रीहौ **तित्तिर**स्तु †खरकाणाख्यपक्षिणि।
ऋषिभेदे च नाथ द्वे **त्रिकेतुः** शुकपक्षिणि ॥ ८७२ ॥
बहुव्रीहौ पुनस्त्रि स्यात् **त्रिशङ्कु**स्तु पुमानयम्।
तार्क्ष्ये मतङ्गराजे च मार्जारे तु द्वयोरयम् ॥ ८७३ ॥
**त्रिधामा** तु पुमान् विष्णा[1]वग्नौ चाथाभिधेयवत्।
बहुव्रीहौ वैश्रवणे पुनर्ना **त्रिशिरा** अयम् ॥ ८७४ ॥

१. 'ष्णौ चाग्नौ' क. च. पाठः.

† "निकृत्तेषु ततस्तेषु निष्कामन्नण्डजास्त्वथ। कपिञ्जलास्तित्तिराश्च कलविङ्काश्च सर्वशः॥" (उद्यो. अ. १०. श्लो. ४१) इति महाभारतम्। 'तित्तिरिस्तु खरकाणः' (पृ. १८

दशास्यसम्बन्धिनि च रक्षोभेदेऽथ भेद्यवत् ।
त्रिमूर्धे स्त्री तु गङ्गायां **त्रिस्रोता** रभसः पुनः ॥ ८७५ ॥

अन्यस्यामपि कस्याञ्चिन्नद्यामाहाथ भेद्यवत् ।
बहुव्रीहौ ***त्रिवारं** तु क्ली बलेऽथ द्वयोर्भवेत् ॥ ८७६ ॥

धीवर्यां ब्राह्मणाज्जाते मर्त्यजात्यन्तरेऽप्यथ ।
**तुषारः** शीकरे पुंसि हिमभेदेऽपि कश्चन ॥ ८७७ ॥

प्रालेये शैत्यधर्मे च भेद्यलिङ्गं तु तद्वति ।
**तुवरो** ना कषायाख्यरसे त्रिषु तु तद्वति ॥ ८७८ ॥

तुवरी तु स्त्रियां धान्य आढकीसंज्ञके तथा ।
सुराष्ट्रकाह्वये चापि भेषजेऽथ **तुरुष्कवाक्** ॥ ८७९ ॥

ना सिल्हसंज्ञे निर्यासे राजभेदे च तस्य तु ।
स्त्र्यपत्ये स्यात् तुरुष्की स्त्री देशे त्वस्य नृभूमनि ॥ ८८० ॥

तुरुष्कास्**तुमुलं** तु क्लीं व्यामिश्रसमरेऽथ ना ।
स्वरे स्याद् व्याकुले त्रिस्तु वैजयन्त्यामभाषत ॥ ८८१ ॥

रभसस्तु नरि प्राह विभीतकमहीरुहे ।
**तुरगी** त्वश्वगन्धायां स्त्री द्वयोस्तु तुरङ्गमे ॥ ८८२ ॥

गन्धर्वाधिपभेदे तु **तुम्बुरुः** पुंसि भाषितः ।
तिन्दुकीसंज्ञवृक्षे च क्लीबलिङ्गं तु तत्फले ॥ ८८३ ॥

†**तूबरस्तु** पुमान् कालेऽप्यजातश्मश्रुपूरुषे ।
वैजयन्त्यां तु कथितं भेद्यलिङ्गं त्रिषु त्वदः ॥ ८८४ ॥

---

१. 'फ' ग. पाठः. २. 'व' द. च. पाठः.

* 'तीवरम्' इति स्यात् । तथाच वैजयन्ती —'सूते धीवरी तीवर ततः । एते ब्राह्मणपुत्राः स्युः' (पृ. ७२. श्लो. ११) इति । † 'पशुः कालेऽपि निःश्मश्रुर्नरोऽश्मश्रुश्च तूपरौ' (पृ. २५५. श्लो. १२) इति तु वैजयन्ती । आथर्वणे च 'तमसा ये च तूपराः' (११. ११. २२) इति श्रूयते ।

कालेऽप्यजातशृङ्गे स्यात् पशौ शुष्कतृणे पुनः ।
**तृफलं** शुष्कपर्णे च क्ली लतायां तु सा स्त्रियाम् ॥ ८८५ ॥
तृफलाथ **तृतीयः** स्यात् त्रयाणां पूरणे त्रिषु ।
तृतीया तु तृतीयस्यां विभक्तौ स्त्री तथा तिथौ ॥ ८८६ ॥
धनदस्याथ वेणौ ना **तेजनः** शरसंज्ञके ।
स्तम्बे च स्त्री तु मूर्वायां ज्योतिष्मत्यां च तेजनी ॥ ८८७ ॥
रुधिरे च विचार्यं तु सूत्रकारप्रयोगगम् ।
दृष्टं न तेजनीदन्तादिति (?) यत् तदथो न ना ॥ ८८८ ॥
आकर्णकर्षणाच्चापि यदध्यर्धाधिकाङ्गुलम् ।
आकर्षणमथाकृष्य धानुष्कैर्यदिषोर्भवेत् ॥ ८८९ ॥
सन्धानं तेजना तत्र निशाने चाथ **तैतिलम्** ।
कायविन्यासरूपाणां करणानां क्वचिद् भवेत् ॥ ८९० ॥
एकस्मिन् करणे क्लीबं गण्डके तिलपिञ्जडे (?) ।
नीवृद्भेदे तु पुम्भूम्नि कलिङ्गाख्ये हि तैतिलाः† ॥ ८९१ ॥
**त्रैष्टुभं** तु नपि व्योम्नि त्रिष्टुप्छन्दसि च त्रिषु ।
त्रिष्टुप्सम्बन्धिनि स्यात् तु प्रगाथे त्रिष्टुबादिके ॥ ८९२ ॥
**तोरण**स्त्वस्त्रियां गेहे(?)बहिर्द्वारे नपि त्वदः ।
तरुप्रभेदेऽस्य फले त्वरायां चाथ **तापनम्** ॥ ८९३ ॥
तुष्टौ क्ली तोषणी तु स्त्री हरिद्रायामना पुनः ।
तोषणा तोषयत्यर्थे **तोदक**स्तु पुमान् सिते ॥ ८९४ ॥
सर्षपे तोत्तरि त्वेष त्रिर्नृलिङ्गस्तु **तोयदः** ।
मेघे क्लीबं तु धनुषि स्यादथो **दक्षिणा**स्त्रि ॥ ८९५ ॥

---

१. 'दू' क. ग. च. पाठः. २. '...आकृष्टधनु' ग. पाठः. ३. 'पिङ्के' क., 'वृ' ग. पाठः. ४. 'लिङ्गस्त्वेष तो' ग. ङ. पाठः.

† 'तैतलास्तु कलिङ्गकाः' (पृ. ३१. श्लो. २६) इति तु वैजयन्ती ।

विदग्धे च परच्छन्दानुवर्तिन्यपि भाषते ।
कुशले हर्षनन्दीमं तथा यमककुम्भवे ॥ ८९६ ॥
शरीरावयवे चापि वामस्य प्रतियोगिनि ।
दक्षिणा तु स्त्रियां याम्याशायामृत्विग्भृतावपि ॥ ८९७ ॥
पठति त्वत्र रभस इमां दानप्रतिष्ठयोः ।
*दक्षाय्य[1]स्तु पुमानग्नौ वैनतेयेऽप्यथ द्वयोः ॥ ८९८ ॥
गृध्रेऽथ **दहनः** पुंसि वह्नावुष्णगुणेऽपि च ।
त्रि तु तद्वति शण्डे तु दाहेऽथ **दरणं** नपि ॥ ८९९ ॥
द्विधाभावे शुके तु द्वे **दण्डक**स्त्वस्त्रियामयम् ।
समासप्रायवाक्ये स्यादुत्कृतेरधिकेषु च ॥ ९०० ॥
छन्दःसु नीवृद्भेदे तु महाराष्ट्राह्वये नरि ।
दण्डका भूम्नि च स्त्री तु दण्डिकाल्पकलम्बने ॥ ९०१ ॥
वाद्यभेदे दण्डरूपेऽथो दण्डयितरि त्रिषु ।
अथ स्याद् **दर्दुरो** भेके द्वयोः पुंसि तु हस्तिनः ॥ ९०२ ॥
गलस्य पार्श्वयोरुक्तो रभसस्त्वाह वारिदे ।
वाद्यभेदे च सा तु स्त्री चण्डिकायां प्रकीर्तिता ॥ ९०३ ॥
**दर्द[2]र**स्तु पुमाञ्छैलप्रभेदे कलशीमुखः ।
इति प्रसिद्धवाद्ये च त्रि त्वीषद्भग्नवस्तुनि ॥ ९०४ ॥
**दण्डक**स्तु पुमान् बाणभेदे सोऽप्युक्तलक्षणः ।
त्रिभागशल्यनाराचरूप इत्यथ भद्रवत् ॥ ९०५ ॥
दण्डवत्यथ पुंलिङ्गो **दन्तिका** गृहभित्तिगे ।
नागदन्ताह्वये शङ्कावथ दन्तवति त्रिषु ॥ ९०६ ॥
निकुम्भसंज्ञौषधौ तु स्त्रीलिङ्गा द(न्तःन्ति)का भवेत् ।
**दहर**स्तु द्वयोरल्पमूषिके बालके त्रिषु ॥ ९०७ ॥

---

१. 'ध्य' ङ. पाठः. २. 'र्दु' च. पाठः.

* 'दक्षाय्य' इति स्यात्

**अल्पेऽथ** भ्रातरि पुमान् रभसेन समीरितः ।
अथ §त्रैराज्यजे द्वे स्यान्मर्त्यजात्यन्तरेऽपि च ॥ ९०८ ॥
वैश्यपूर्वक्षत्रियायां व्रात्याज्जाते प्रयुज्यते ।
**द्रमिलो दर्शनं** तु क्ली नेत्रे शास्त्रे मते धियाम् ॥ ९०९ ॥
ज्ञाने च स्वप्नवीक्षा[1]सु क्रियायां पश्यतेरपि ।
धर्मदर्पणयोस्त्वाह रभसः शब्दवित्तमः ॥ ९१० ॥

दर्शनी तूपरथ्यायां स्त्री पुरादेर्ग[3]दस्य च ।
यन्त्रभेदे दर्शनार्थे दर्शना तु न ना तथा ॥ ९११ ॥
दर्शनं दर्शयत्यर्थे **दर्शक**स्तु पुमानयम् ।
द्वाःस्थेऽथ भव्यवद् द्रष्टृदर्शयित्रोरथो पुमान् ॥ ९१२ ॥
दन्ते स्याद् **दशनो** दष्टिक्रियायां तु नपुंसकम् ।
**दशमं** तु दशानां स्यात् पूरणे त्रि स्त्रियां पुनः ॥ ९१३ ॥
दशमी यमतिथ्यां स्याद् **दर्वर**स्तु पुमानयम् ।
[4]वज्रे स्त्रियां तु सेनायां दर्वरी स्याद् द्वयोः पुनः ॥ ९१४ ॥
**दशेरः** सारमेये च सर्पे चाथो नृभूमनि ।
मरुसंज्ञे जनपदे दशेरा **दर्पक**स्तु ना ॥ ९१५ ॥
कन्दर्पे त्रिः पुनर्दृप्तदर्पयित्रोरथो पुमान् ।
आदर्शे **दर्पणः** क्ली तु दृप्तौ दर्पयतेः पुनः ॥ ९१६ ॥
क्रियायां दर्पणा तेन(?) **दमयन्ती** पुनः स्त्रियाम् ।
स्याद् ब्रह्मचारिदण्डे च भार्यायां च नलस्य हि ॥ [illegible]
त्रिस्तु स्याद् दमयितरि दमयेत् तनये पुनः ।
**दायादो** द्वे सपिण्डेऽपि यस्त्वन्यो दायभाग् भवेत् ॥ ९१८ ॥

१. 'षा' ग. पाठः २. '[illegible]' क. [illegible] पाठः. ३. 'गुरस्य' ग. पाठः. ४. क. च. पाठः. ५. '(यन्तःयस्त) न' क. ङ. च. पाठ..

---

§ चेरचोलपाण्ड्यजाते ।

तत्र त्रि रभसस्त्वाह त्रिलिङ्गां **दाडिमीं** बुधः ।
एलायां मुचिलि(ङ्गा?न्दा)ख्यपादपे ब्रूमहे वयम् ॥ ९१९ ॥

क्लीबलिङ्गं तु विज्ञेयं प्रसवे तस्य नपू पुनः ।
व्याधौ स्याद् **दारुणं** भेद्यलिङ्गं तु स्याद् भयङ्करे ॥ ९२० ॥

पुंलिङ्गो रभसेनोक्तो **द्रावको** घोषकाश्मनोः ।
अथ द्रावयितर्येष द्रोतर्यपि च भेद्यवत् ॥ ९२१ ॥

**दारक**स्तु द्वयोर्बाले कश्चित्तु तरुणेऽवदत् ।
धनञ्जयस्तु ब्रूते स्म पत्रे शब्दविदां वरः ॥ ९२२ ॥

त्रि तु भेत्तर्यथो कृष्णसारथौ **दारुकः** पुमान् ।
दैत्यभेदे च नृनपोः पुनः कुत्सितदारुणि ॥ ९२३ ॥

**दात्यूहः** कालकण्ठाख्यखगे द्वे चातके तथा ।
**दारद**स्तु पुमान् सिन्धुसंज्ञके नीवृदन्तरे ॥ ९२४ ॥

पारदे क्ष्वेडभेदे तु पुन्नपुंसकयोरयम् ।
कतकाख्ये तु वृक्षे ना **द्रावणो** लवणान्तरे ॥ ९२५ ॥

विडसंज्ञे फले तु स्त्री कतकस्याथ नपुस्त्रियोः ।
द्रावणा द्रावयत्यर्थे क्लीबलिङ्गं तु **दानवम्** ॥ ९२६ ॥

गन्धे दमनकाख्ये स्याद् दनुजे तु द्वयोरथ ।
**द्वापरो**ऽस्त्री तृतीये स्याद् युगे संशयनेऽप्यथ ॥ ९२७ ॥

**द्वादशो** द्वादशानां त्रिः पूरणे द्वादशी पुनः ।
स्त्रियां विष्णुतिथौ त्रिस्तु **द्वितीयं** पूरणे द्वयोः ॥ ९२८ ॥

स्त्री तु द्वितीया भार्यायामजदैवतके तिथौ ।
द्वितीयस्यां विभक्तौ च **द्विजिह्व**स्तु त्रि सूचके ॥ ९२९ ॥

१. 'पुनः' क. ग. च. पाठः. २. 'व' क. ङ. च. पाठः. ३. 'स्थावरे क्ष्वे' क. ङ. च. पाठः.
४. 'द्वि' च. पाठः.

द्वे तु सर्पे **द्विकरी** तु स्त्री किञ्चित्प्रौढयोषिति ।
बहुव्रीहौ पुनस्त्रि स्याद् **द्विजातिस्तु** द्वयोरयम् ॥ ९३० ॥

ब्राह्मणे क्षत्रिये वैश्ये पक्षिण्यपि पुमान् पुनः ।
पुनर्भ्वा **दिधिषुः** पत्यौ दिधिषूस्तु स्त्रियामियम् ॥ ९३१ ॥

कनिष्ठपत्न्याभरतौ पुनर्भूपरिविन्नयोः[1] ।
आहुतौ च **द्विजन्मा** तु ना दन्ते रभसोदितः ॥ ९३२ ॥

द्वयोस्तु पठितः पूर्वैः स्याद् ब्रह्मक्षत्रविट्सु च ।
पक्षिण्यथ **दिवौकास्तु** देवचातकयोर्द्वयोः ॥ ९३३ ॥

काव्यालङ्कारभेदे तु स्वरूपे चापि **दीपकम्** ।
क्ली त्रि तु स्याद् दीपयितृदीपित्रोर्ना तु पक्षिणि ॥ ९३४ ॥

पक्षिणा येन गृह्यन्त पक्षिणोऽन्येऽत्र ना पुनः ।
महाकदम्बे नीपाख्ये **दीपनः** क्ली तु दीपनम् ॥ ९३५ ॥

दीप्तिक्रियायां त्रिषु तु दीपनी[2] दीप्तिसाधने ।
**दीदिविस्तु** पुमान् स्वर्गे पावके च बृहस्पतौ ॥ ९३६ ॥

नृस्त्रियोस्त्वोदनेऽथ द्वे **दीर्घवाक्** कुक्कुटे त्रि तु ।
बहुव्रीहौ **द्वीपवांस्तु** समुद्रे च नदे च ना ॥ ९३७ ॥

स्त्री तु द्वीपवती नद्यां भूमौ चाथ नृलिङ्गकः ।
**दीर्घायुः** शल्मलीवृक्षे तथा जीवतरावपि ॥ ९३८ ॥

मार्कण्डेये च काके तु द्वे त्रिः स्याच्चिरजीविनि ।
**दुर्वारस्तु** यमे पुंसि दूराधे त्वभिधेयवत् ॥ ९३९ ॥

**दुराशः** कृकलासे द्वे दुष्टाशे त्वभिधेयवत् ।
**दुरितं** क्ली दुर्गमनेऽप्यथ स्याद् भेद्यलिङ्गकम् [illegible] ॥

दुर्गते **दुष्कृतं** तु क्ली पापे त्रिस्त्वशुभं कृते
**द्रुहिणस्तु** नृलिङ्गः स्याद् वामनेऽग्निविरिञ्चयोः ॥ ९४१ ॥

१. 'वृन्दयोः' क. पाठः. २. 'सारितम्' ग. पाठः. ३. 'ने' क. च. पाठः. ४. 'शुभे त्रि' क. ङ. च. पाठः.

भेद्यवत् तु भवेत् क्षुद्रे क्लीबलिङ्गं तु पाप्मनि ।
दुष्टगन्धे तु **दुर्गन्धः** पुमान् सौवर्चले तु नप् ॥ ९४२ ॥
बहुव्रीहौ तु त्रिरथो **दुर्वर्णं** रजते नपि ।
एलावालुकसंज्ञे च भेषजे रभसोऽपठीत् ॥ ९४३ ॥
दुष्टवर्णे तु नृनपोर्बहुव्रीहौ पुनस्त्रिषु ।
**दुर्जातं** व्यसने क्ली त्रिरसम्यग्जातवस्तुनि ॥ ९४४ ॥
**दुर्धरस्तु** नृलिङ्गः स्याद् वृषभाह्वयभेषजे ।
भेद्यलिङ्गं तु दुर्वारे दुर्भरे च प्रकीर्तितम् ॥ ९४५ ॥
**दुर्लभस्त्व**तिदुष्प्रापे यवाषे तु पुमानयम् ।
**दुर्मुखस्तु** पुमान् नागराजभेदे द्वयोः पुनः ॥ ९४६ ॥
वानरे भेद्यलिङ्गं तु मुखरे कविभिः स्मृतम् ।
**दुर्दशा** त्वविवाह्यासु कन्यास्वेकत्र या भवेत् ॥ ९४७ ॥
कुब्जा तत्र त्रिषु पुनर्दुष्प्रेक्षेऽथ नृलिङ्गकः ।
**दुःस्पर्शो**ऽथ(१)यवाषे स्याद् दुःस्पर्शा तु स्त्रियामियम् ॥ ९४८ ॥
कण्डकार्यां परस्त्वात्मगुप्तायां पठन्ति त्रि तु ।
दुःखस्पर्शे **दुर्गमस्तु** पुमान् स्याद् भूधरे त्रि तु ॥ ९४९ ॥
दुष्प्रवेशे **दुर्गतिस्तु** नरके स्त्री नरं पुनः ।
पठत्यमरदत्तोऽमुं दारिद्र्ये तु स्त्रियामियम् ॥ ९५० ॥
दुष्टायां च गतौ त्रिस्तु बहुव्रीहावथो पुमान् ।
भेर्यां स्याद् **दुन्दुभि**र्दैत्यविशेषे वरुणेऽपि च ॥ ९५१ ॥
स्त्री तु द्यूतशलाकायां द्वे तु कीटान्तरे भवेत् ।
**दुग्धाशी** तु शुके द्वे स्यात् क्षीराशिनि तु भेद्यवत् ॥ ९५२ ॥
**दुर्नाम** त्वर्शसि क्लीबं क्रिमौ तु द्वे स्त्रियां पुनः ।
स्याद् दीर्घकोशिकासंज्ञजलजन्तौ त्रिषु त्वदः ॥ ९५३ ॥

१. 'थ भे' क. ङ. च. पाठः. २. 'वदन' क. ङ. च. पाठः. ३. 'षु' ग. पाठः
४. 'च' क. च. पाठः.

दुःसंज्ञे दुष्टसंज्ञायां पुनः क्ली **दूषिका** पुनः ।
स्त्री क्रोधवशकन्यायां त्रिषु दूषयितर्यसौ ॥ ९५४ ॥

**दूषिकं** त्वक्षिजमले नपुंस्त्रियोः स्यात् पुनः स्त्रियाम् ।
वीणाजतौ[1] च वर्तौ च लतायां चापरः पुनः ॥ ९५५ ॥

लूतायामित्यभाषिष्ट **दृष्टान्तस्तु** पुमानयम् ।
शास्त्रे तथोदाहरणे बहुव्रीहौ तु भेद्यवत् ॥ ९५६ ॥

**दृशानस्तु** त्रिषु द्रष्टर्यादित्ये त्वभ्यधुर्नरम् ।
**दृशीकस्तु**[2] त्रिषु वपुष्मति क्लीबं तु लोचने ॥ ९५७ ॥

**देवार्हं** तु सुवर्णे स्याद् रसविद्धे नपुंसकम् ।
देवयोग्ये पुनस्त्रि स्यादथ स्यात पुंसि **देवनः** ॥ ९५८ ॥

ज्ञेयो द्यूतशलाकायां क्ली क्रीडाविजिगीषयोः ।
व्यवहारे द्युतौ कान्तौ स्तुतिगत्योर्गना पुनः ॥ ९५९ ॥

देवना देवयत्यर्थे परिदेवन एव च ।
**देवयुस्त्वृ**त्विजि पुमान् होमे च त्रि तु धार्मिके ॥ ९६० ॥

**दैवज्ञो** ना ज्योतिषिके दैवज्ञा तु स्त्रियामियम् ।
ज्ञेया गृहगोलिकायां दैवस्य ज्ञातरि त्रिषु ॥ ९६१ ॥

**द्रोहकस्तु** पुमान् गाथाविशेषे परिकीर्तितः ।
वैडालवृत्तिके त्वेष भेद्यलिङ्गः समीरितः ॥ ९६२ ॥

**दोहलं** तु नपीच्छायामिति सिंहो नरे पुनः ।
दत्त आहाथ गर्भिण्या इच्छाभेदे प्रकीर्तितः ॥ ९६३ ॥

श्रद्धासंज्ञे स्थावराणां पुष्ट्यर्थं यत् प्रदीयते ।
करीषादि भवेत् तत्र स्त्रियां तु **द्योतना** [illegible] ४ ॥
उषसि द्योतनं तु क्ली धने द्योतनि[illegible] ।
अक्ष्णि प्रकाशनायां तु [illegible] नप् ॥ ९६५ ॥

१. 'ज' क. च पाठः. २. 'शि' च. पाठः.

**दोलकं** पङ्कजे त्रिस्तु स्यादुत्क्षेप्तरि ना पुनः ।
**दौष्यन्तो** नृपभेदेऽथ मर्त्यजात्यन्तरे द्वयोः ॥ ९६६ ॥
कक्ष्याजीवेऽम्बष्ठ एव स्यादुग्राख्ये च जीविनि ।
मत्स्यघातादथ स्त्री स्याद् **दौन्दुभी** दम्भ एव च ॥ ९६७ ॥
विवाहार्थं वरस्यापि यात्रायामथ दुन्दुभेः ।
सम्बन्धिनि त्रिः क्लीबं तु लेख्यानां व्यवहारिणाम् ॥ ९६८ ॥
अष्टानामेकलेख्ये स्याद् **धवलस्तु** नृलिङ्गकः ।
वृषभे श्वेतवर्णे च त्रिस्तु श्रेष्ठेऽपि सुन्दरे ॥ ९६९ ॥
श्वेतवर्णयुते चाथ सुरभौ धवला स्त्रियाम् ।
**धनदस्तु** कुबेरे ना मेद्यवत् तु धनप्रदे ॥ ९७० ॥
‡**धनुका** तु स्त्रियां वध्वां मेद्यलिङ्गं तु साधुनि ।
**धनेशस्तु** कुबेरे ना स्यात् त्वाढ्ये मेद्यलिङ्गकः ॥ ९७१ ॥
अथ क्ली **धर्षणं** धार्ष्ट्येऽभिभवे सुरतेऽप्यथ ।
धर्षणी कुलटायां स्त्री **धमनस्तु** पुमानयम् ॥ ९७२ ॥
नडसंज्ञे स्थावरे स्यात् तथा स्यान्नासिकापुटे ।
रभसस्तु त्रिषु क्रूरे भस्त्राध्मापक एव च ॥ ९७३ ॥
धमनी तु स्त्रियामेषा विज्ञेया वाचि वाग्मिभिः ।
तथा हट्टविलासिन्यां सिरायां रभसोऽपठीत ॥ ९७४ ॥
**धरणं** त्वष्टके हेमपलानामपि सप्तनो ।
पलानां ताम्रसंज्ञस्य लोहस्य दशके पुनः ॥ ९७५ ॥
अन्येषां रूप्यकर्षे च धारणेऽप्यथ नपुंस्त्रियोः ।
स्याद्न्मानक्रियायां स्याद् **धारणा** धारणस्तु ना ॥ ९७६ ॥

१. 'व' ग. पाठः.

‡ 'धनिका साधुनार्यां ना धन्याके त्रिषु साधधनिनोश्च' इति तु मेदिनी

स्तने धातरि लोकेऽर्के सलिले तु नपुंसकम्।
धर्णसिस्तु पुमाञ्छैले सलिले तु नपुंसकम् ॥ ९७७ ॥
*धाराङ्गमवतारेऽश्राविस्युक्तं यादवैर्नपि।
रभसेन तु पुंसीति धाराङ्गस्तीर्थखङ्गयोः ॥ ९७८ ॥
धाराटस्तु द्वयोरश्वे चातकेऽप्यथ धावनी।
धौता(जेऽञ्च)ले§ पृश्निपर्ण्यां रजक्यां च स्त्रियामथ ॥ ९७९ ॥
गतिशोधनयोः प्राहुः क्लीबलिङ्गमिदं बुधाः।
धावनं धावयत्यर्थे त्वपुमान् धावनाथ ना ॥ ९८० ॥
धाणकः पूर्वशास्त्रज्ञैरुक्तश्छिद्रविधानके।
हविषां च ग्रहे शाणतृतीयांशे तु सा स्त्रियाम् ॥ ९८१ ॥
धार्णका धारणा तु स्त्री चित्तस्य स्थिरबन्धने।
क्वचिद् ध्येये वस्तुनि स्याद् योगिनां हृदयस्थिते ॥ ९८२ ॥
रभसस्त्वत्र पठति ङ्यन्तमेतत् सुधीर्यथा।
बौद्धोक्तमन्त्रभेदे च नाडिकायां च धारणी ॥ ९८३ ॥
अना तु वहने किञ्च मर्यादायामथो पुमान्।
धार्मिको नृपतेर्धर्माधिकृते पुरुषे त्रि तु ॥ ९८४ ॥
पाठके धर्मशास्त्राणां धर्मस्य चरितर्यपि।
स्त्रियां तु धिषणा बुद्धौ स्त्रीचिह्ने पार्वतीगिरोः ॥ ९८५ ॥
धिषणे इति रोदस्योर्धिषणस्तु बृहस्पतौ।
ना क्ली तु धीवरं काललोहे जात्यन्तरे पुनः ॥ ९[illegible] ॥
कैवर्त्यां वृषलाज्जाते द्वे दाशेऽप्यथ धूसरः।
चाक्रिके द्वे परे ना तु वर्णे स्यात [illegible] ॥ ९८७ ॥

१. 'तौ' क. च. पाठः. २. 'ब' [illegible] ३. 'णं' ङ च., 'नं' क. पाठः. ४. '[illegible]' [illegible] क. पाठः. ५. 'रि' क. ग. च. पाठ[illegible] [illegible] ग. पाठः. ७. 'ख' ग. ङ. पाठः. ८. '[illegible]' क. ङ. च. पाठः.

* 'धाराम्रमवतारेऽश्वौ' (पृ. [illegible]१. श्लो. १८) इति तु मुद्रितवैजयन्तीपाठः।

§ 'धौताञ्चले रजक्यां च धावनी' (पृ. २६०. श्लो. ४९) इति वैजयन्ती।

त्रिस्तु तद्वत्यथो पुंसि **धूमलः** कृष्णलोहिते ।
मिश्रवर्णे तद्वति तु त्रिरथो पुन्नपुंसकम् ॥ ९८८ ॥
देवतार्चनतूर्येऽथ **धोरणं** वाहने नपि ।
वाजिनां गतिभेदे च धोरितारूये त्रि तद्वति ॥ ९८९ ॥
हंसे तु द्वेऽथ **नलिनं** नलिकायां नपुंसकम् ।
पद्मे तु पुंस्यप्येकेषामन्येषां तु स्त्रियामपि ॥ ९९० ॥
नलिनी तु स्त्रियामेव पद्मस्तम्बे सरस्यपि ।
रभसस्त्वपठीद् व्योमनिम्नगायां च ना पुनः ॥ ९९१ ॥
**न्यग्रोधो** व्योमसंज्ञे स्यात् प्रमाणे वटपादपे ।
फले त्वस्य लुकोऽभावान्नैयग्रोधमिति स्मृतम् ॥ ९९२ ॥
न्यग्रोधी तु स्त्रियां स्तम्बे द्रवन्तीसंज्ञकेऽथ ना ।
**नन्दको** वासुदेवस्य खड्गे नन्दितरि त्रिषु ॥ ९९३ ॥
**नन्दनस्तु** द्वयोः पुत्रे क्ली तूद्याने शचीपतेः ।
नन्दथौ चै पुमांस्तु स्यादर्थे नन्दयतस्त्रि तु ॥ ९९४ ॥
स्यान्नन्दयितरि स्त्री तु **नन्दन्ती** स्यात् सखीजने ।
**नन्दन्तस्तु** पुमान् सख्यौ मेयलिङ्गं तु नन्दताम् ॥ ९९५ ॥
इत्याशीर्यत्र तत्र **स्यान्नमस्या** तु स्त्रियामियम् ।
पूजायां पूजनीये तु त्रि**र्नभाका** त्वियं स्त्रियाम् ॥ ९९६ ॥
चक्रवाकाख्यविहगजातौ काके पुनर्द्वयोः ।
अथात्र रभसेनोक्तमसभ्यं तन्न गेचते ॥ ९९७ ॥
नटे पोटगले पुंसि चारणे केवलेऽपि च ।
**नर्तकः** स्यात् करेण्वां च लासिकायां च नर्तकी ॥ ९९८ ॥
**न्यस्तकस्त्व**स्त्रियामर्थनिक्षेपे धनिभिः कृते ।
त्रिस्तु स्यान्निहिते स्त्री तु रेवाख्यसरिदन्तरे ॥ ९९९ ॥

१. 'ना' ग. पाठः. २. 'पठत्' क. पाठः. ३. 'चा' क. ङ. च. पाठः

नर्मदा नर्मणस्तु त्रिर्दायके **नकुलो** द्वयोः ।
बभ्रौ कनिष्ठे तु पुमान् युधिष्ठिरमहीपतेः ॥ १००० ॥
ऋषिभेदे वर्णभेदे यो वर्णो नकुले स्थितः ।
तद्वति त्रिरथो क्लीबं पुंस्यन्ये **नमतं** विदुः ॥ १००१ ॥
ऊर्णास्तरणके ना तु धूमे दिनकरेऽपि च ।
त्रि तु ह्रस्वे त्रिषु पुनर्नवानां पूरणे भवेत् ॥ १००२ ॥
**नवमं** नवमी तु स्त्री दुर्गादेव्यास्तिथौ स्मृता ।
रभसेनात्र पठितः श्लोकोऽयमिह पठ्यते ॥ १००३ ॥
मुरलायां दर्भान्दुनीरजःस्त्रीषु **नमरा** ।
क्लीबं स्याद् द्रुमकर्पूरे नाराचे मानवेऽर्जुने ॥ १००४ ॥
**नहुषस्तु** पुमान् पूर्वराजभेदे द्वयोः पुनः ।
मनुष्ये **न्येशुकस्तु** स्याच्चन्द्रे वेणौ पुमांस्तथा ॥ १००५ ॥
रणरेणौ प्रावरणेऽप्यथ स्याद् भेद्यलिङ्गकम् ।
प्रवासशीले **नादेयं** पुनः स्याद् भेद्यलिङ्गकम् ॥ १००६ ॥
नदीभवादौ स्त्री तु स्यान्नादेयी जलवेतसे ।
कर्कर्यां भूमिजम्ब्वां च महोद्रयाख्यमुस्तके ॥ १००७ ॥
*कङ्गुष्ठेऽपि च नादेयीत्येवं रभसभाषितम् ।
क्लीबं तु सैन्धवे क्ली तु **नागरं** विश्वभेषजे ॥ १००८ ॥
चुक्रे राजकशेरुण्यप्यथ स्याद् भेद्यलिङ्गकम् ।
पुनर्भ्वादौ **नारकस्तु** नरके ना त्रिषु त्वयम् ॥ १००९
नरकस्य हि सम्बन्धिन्यथ **नासिक्यवाक्** त्रिषु ।
स्यान्नासिकाभवे स्तस्तु नासिक्यावश्विनौ [illegible] १० ॥

१. 'लिख्यते' ग. पाठः. [illegible] ३. 'जे' ग. पाठः. ४. 'र' पाठः. ५. 'नं' क. ङ. च. पाठः [illegible] ग. च पाठः ७. 'प्रा' ग. पाठः.

* कङ्गुस्तृणभेदः, तत्समीपे तिष्ठतीति कङ्गुष्ठ मृत्तिकाभेदः ।

**नायक**स्तिः प्रभौ ना तु हारमध्यगते मणौ ।
क्लीबं त्वासनभेदे स्या**न्नाकुलं** तस्य लक्षणम् ॥ १०११ ॥

ऊर्ध्वजोरुपविष्टस्य भुजाभ्यां जङ्घयोर्द्वयम् ।
बद्धासनमिति स्त्री तु रास्नायां नाकुली तथा ॥ १०१२ ॥

रभसः कुक्कुटीकुन्दे स्त्री च(र्ये'व्ये) चेत्यथ त्रिषु ।
भवेन्नकुलसम्बन्धिन्यथ **नाराच**वाङ् नरि ॥ १०१३ ॥

अयोमयशरे स्त्री तु नाराची कथिता बुधैः ।
लेखन्यां **नाटकं** तु क्ली रूपकान्यतमे भवेत् ॥ १०१४ ॥

स्त्रियां तु नाटिकान्यत्र नाटकाद् रूपकान्तरे ।
भयलिङ्गं तु नटितृनाटयित्रोरथ त्रिषु ॥ १०१५ ॥

तरीतृतारयित्रोः स्यान्नावा **नाविक** इत्ययम ।
अम्बष्ठाद् ब्राह्मणीजाते मर्त्यजात्यन्तरे द्वयोः ॥ १०१६ ॥

**नापित**स्तु द्वयोर्विप्रवेश्याजे व्यभिचारतः ।
मर्त्यजात्यन्तरेऽम्बष्ठाज्जाते राज्यां च नप् पुनः ॥ १०१७ ॥

**नालीक**मम्बुजे ना तु शरे नालीकिनी पुनः ।
पद्मिन्यां स्त्री त्रिषु पुनर्नालीकवति कीर्तिता ॥ १०१८ ॥

नालीकी स्याद् गृहे तु क्ली **निशान्तं** नृनपाः पुनः ।
अन्ते निशायास्त्रिषु तु शान्तेऽथ **निधनो**ऽस्त्रियाम् ॥ १०१९ ॥

कुले नाशे सामभक्तौ पञ्चम्यामथ भेयवत् ।
न्यस्ते **निसृष्टः** स्त्री तु स्यान्निसृष्टा कन्यकान्तरे ॥ १०२० ॥

व्यङ्गे पुमांस्तु **निषधो** दक्षिणे कुलपर्वते ।
मेरोर्नीवृत्प्रभेदे च तस्य राजनि च त्रि तु ॥ १०२१ ॥

कठिनेऽथ **निषादो** ना सप्तानां कुत्रचित् स्वरे ।
स्वराणां द्वे तु मर्त्यानां जातिभेदे तथा विदुः ॥ १०२२ ॥

विप्राज्जाते क्रमोढायां शूद्रायां यस्य चापरम्।
स्यात् पारशव इत्येवं नामधेयमधीयते ॥ १०२३ ॥
**निलिम्पस्तु** द्वयोर्देवे निलिम्पा तु स्त्रियामियम्।
‡(जाग्र्यां ?) **निवेपस्तु** पुमान् कूपे वृक्ष इतीतरः ॥ १०२४ ॥
वृक्षजाताविति त्वन्य आकाशे तु नपुंसकम्।
**निम्नगा** तु स्त्रियां नद्यां त्रि तु निम्नस्य गन्तरि ॥ १०२५ ॥
**निष्ठुरं** तु कठोरे त्रिः परुषाक्षरवाच्यपि।
स्त्रियां तु निष्ठुरा मुद्राविशेषे हस्तनिर्मिते ॥ १०२६ ॥
पदभञ्जनशास्त्रे तु **निरुक्तं** क्ली त्रिषु त्वदः।
कृतनिर्वचने शब्दे या तु मन्त्रेऽभिधीयते ॥ १०२७ ॥
इन्द्रादिर्देवता तस्यामुक्तायां स्यात् स्वसंज्ञया।
तद्देवताके च तथा स्यात् प्रातःसवनादिके ॥ १०२८ ॥
**निर्वाणं** निर्वृतौ मोक्षे विनाशे गजमज्जने।
क्ली त्रिस्तु मुनिवह्न्यादौ शब्दविद्भिर्निरूपितम् ॥ १०२९ ॥
**निरुंधा** तु दिशि स्त्री स्यात् त्रि तु पुण्यकर्मेऽभ्यघुः।
निर्माल्याभ्रकयोस्तु क्ली **निर्मलं** विमले त्रिषु ॥ १०३० ॥
**निर्वेदस्तु** पुमान् खेदे वेदहीने पुनस्त्रिषु।
**निर्देशस्तु** पुमाञ्ज्ञेय आज्ञायां कथनेऽपि च ॥ १०३१ ॥
भेद्यलिङ्गस्तु विज्ञेयो देशहीने मनीषिभिः।
**निर्वादः** परिवादे ना वादहीने तु भेद्यवत् ॥ १०३२ ॥
**निर्लेपस्त्वम्बुजे** क्लीबं लेपहीने पुनस्त्रिषु।
**नियामः** कर्णधारे ना यामहीने तु भेद्यव[illegible]

१. 'रे' ग. पाठः. २ 'ग' [illegible] ग. च. पाठः.

‡ 'चाद्यां' इति ङ. ग्रन्थे पठ्यते। पाठद्वयमप्यशुद्धमेव। उभयपाठाक्षरसंवादात् '[illegible]ग्याम्' इति पाठः कल्पयितुं शक्यते। वैजयन्त्यां तु 'अनड्वाह्यनडुह्युस्रा तम्बा तम्पा निलिम्पिका' (पृ. ६८ श्लो. ४२) इति गवि निलिम्पिकाशब्दः पठितः।

**निर्माल्यं** तूपयुक्तायां मालायां स्यान्नपुंसकम् ।
माल्यहीने पुनस्त्रि स्या**न्निःसङ्गा** तु स्त्रियामियम् ॥ १०३४ ॥
अतिमुक्तकसंज्ञायां लतायां भेद्यवत् पुनः ।
स्यात् सङ्गवर्जिते चापि **निर्लज्जा** देवरेऽपि या ॥ १०३५ ॥
नियुक्तान्यं नरं याति तस्यां स्याद् भेद्यवत् पुनः ।
लज्जाहीनेऽथ **निस्त्रिंशः** खड्गे नाथाभिधेयवत् ॥ १०३६ ॥
क्रूरे स्या**न्निष्कला** तु स्त्री विगतार्तवयोषिति ।
अथ त्रिर्नष्टबीजे च कलाहीनेऽप्यथ त्रिषु ॥ १०३७ ॥
**निष्कोशः** कोशहीने स्यात् कुक्षिमध्ये तु हस्तिनः ।
पुँल्लिङ्गो भाषितः सद्भिर्गजशास्त्रे च **निष्कुटः** ॥ १०३८ ॥
गृहारामे पुमांस्त्रिस्तु निष्क्रान्तादौ कुटादथ ।
एलायां **निष्कुटी** स्त्री स्यान्निष्क्रान्तादौ कुटेस्त्रिषु ॥ १०३९ ॥
**निर्ऋतिस्तु** स्त्र्यलक्ष्म्यां स्यान्निर्गमे चाथ भेद्यवत् ।
गतिहीनेऽथ **निद्रालुः** सुनिषण्णकसंज्ञके ॥ १०४० ॥
जलशाकविशेषे ना शयालौ त्वभिधेयवत् ।
**नियन्ता** सारथौ पुंसि भेद्यवत् तु नियामके ॥ १०४१ ॥
**निर्जरा** तु गुडूच्यां स्त्री द्वे देवे त्रि जरोज्झिते ।
**नीवलस्तु** द्वयोर्मर्त्यजातिभेदे प्रकीर्तितः ॥ १०४२ ॥
वैदेहीशूद्रसम्भूते पुण्ड्रवत्तुरगान्तरे ।
**नीरजस्तु** पुमान् कृष्णे कमले तु नपुंसकम् ॥ १०४३ ॥
**नीलिका** तु स्त्रियां नीलीसंज्ञायामोषधौ स्मृता ।
स्याच्च सिंहमलाभिख्यलोहभेदेऽथ भेद्यवत् ॥ १०४४ ॥
स्यान्नीलि [1]रि स त्रिस्तु **नूतनं** नववस्तुनि ।
वृष्टिसर्जनरश्मीनां पुनः सूर्यस्य नूतनाः ॥ १०४५ ॥

---

१. 'ग' क. ड. च. पाठः.

स्त्रीभूमनि शतानां स्याच्चतुर्णां कुत्रचिच्छते।
**नृपार्हं** त्वगुरौ क्लीबं स्याद् राजार्हे पुनस्त्रिषु ॥ १०४६ ॥
**नेपाल**स्त्विक्षुभेदे ना नीवृद्भेदे च भूम्नि च।
रभसोक्ता तु नुवहानवमालिकयोः स्त्रियाम् ॥ १०४७ ॥
मनःशिलायां च प्रोक्ता नेपाली बहुवेदिना।
**नैगम**स्तूपनिषदि पुमानुक्तो द्रतावपि ॥ १०४८ ॥
वणिङ्नागरयोस्तु स्याद् भेद्यलिङ्गं तथैव च।
भवेन्निगमसम्बन्धिमात्रे क्लीबं तु **नैषधम्** ॥ १०४९ ॥
निषधाद्रेरुत्तरस्मिन् वर्षे हरिवर्षसंज्ञके।
निषधस्य तु सम्बन्धिन्येतत् त्रिरथ **नैर्ऋतः** ॥ १०५० ॥
राक्षसे द्वे तु निर्ऋतिसम्बन्धिनि पुनस्त्रिषु।
अथ पुंसि **पवित्रः** स्याद् वासुदेवे पुरन्दरे ॥ १०५१ ॥
पावके पवने सोमे घृणौ यवविवस्वतोः।
त्रि तु पूते क्ली तु ताम्रे गोमये सलिले कुशे ॥ १०५२ ॥
मन्त्रे दध्नि ब्रह्मसूत्रे हेम्न्यर्थे कलशेऽम्बुजे।
क्षीरे दर्भाङ्गुलीये तु पुन्नपुंसकयोरथ ॥ १०५३ ॥
**पल्लवो**ऽस्त्री किसलये पत्रमात्रप्रकोष्ठयोः।
विस्तारे विटपेऽथाह रभसोऽमुं बलेऽपि च ॥ १०५४ ॥
पुल्लिङ्गस्तु भवेत् षिद्गे **पतङ्ग**स्तु पुमानयम्।
सूर्ये शालिप्रभेदे च मार्जारे तु द्वयोरयम् ॥ १०५५ ॥
शलभे पक्षिमात्रे च स्यादश्वे च स्त्रियां पुनः।
पुत्तिकायां **पतङ्गी** स्याद् ऋषिभेदे तु पुंस्ययम् ॥ १०५६ ॥
**पाञ्चालः** स्याच्च पुम्भूम्नि नीवृद्भेदेऽस्य राजनि।
स्यात् सर्ववचनस्तस्य पाञ्चालीति स्त्र्यपत्यके ॥ १०५७ ॥

**पञ्चाङ्गी** तु खलीने स्त्री पञ्चानां च समाहृतौ ।
अङ्गानां भेदवत् तु स्याद् बहुव्रीहावथ स्त्रियाम् ॥ १०५८ ॥
**पञ्चिका** द्यूतभेदे स्याद् व्याख्याग्रन्थान्तरेऽपि च ।
त्रि तु विस्तारके स्याच्च पञ्चावयवसङ्घके ॥ १०५९ ॥
**पञ्चम** तु पुमान् षड्जप्रभृतीनां क्वचित् स्वरे ।
अथ पाण्डवपत्न्यां च रभसस्त्वाह पञ्चमीम्[1] ॥ १०६० ॥
स्यात् पञ्चमीविभक्तौ च स्त्रीलिङ्गा स्याच्छ्रियस्तिथौ ।
पञ्चानां पूरणे तु त्रिः **पलित**स्त्वस्त्रियामियम् ॥ १०६१ ॥
केशादौ जरसा शौक्ल्ये तद्वद्वल्कवतोस्त्रिषु ।
नपुंसकं तु शैलेये स्यादङ्के मरिचेऽथ ना ॥ १०६२ ॥
कर्दमे **पटलं** तु क्लीं पुंसि चान्ये प्रचक्षते ।
गृहच्छदिषि रोगविशेषेऽक्ष्ययोगतः ॥ १०६३ ॥
नास्त्रियोस्तु समूहे स्यात् पटली तिलकान्तरे ।
* पटलं तु केशे क्लीबे त्रि तु स्याद् वासिकल्पयोः ॥ १०६४ ॥
**पटोल**स्तु पुमान् वल्लिभाने तिक्तकनामनि ।
पटोली तु स्त्रियां कोशातकीसंज्ञे लतान्तरे ॥ १०६५ ॥
**पललं** तिलचूर्णे क्लीं मांसकर्दमभेदयोः ।
पुमांस्तु तिलकाभिख्यवृक्षेऽथो पत्रपुसकम् ॥ १०६६ ॥
व्रीहिस्तम्बे हि लूनात्तफले स्त्री तु पलाल्यसौ ।
महति स्यात् पलालेऽन्ये पलालक्षोद इत्यथ ॥ १०६७ ॥
**पलाशः** किंशुके पुंसि शटीसंज्ञे च भेषजे ।
केचित् त्वाहुर्हरिद्वर्णे त्रि तु तद्वति नपु पुनः ॥ १०६८ ॥

१. 'मां ।' च. पाठः.

* पद्य पर्यन्त मिलनानि ... भाति

तरुपत्रे किंशुकस्य प्रसूने द्वे तु राक्षसे ।
**पन्नग**स्त्वोषधीभेदे पुमान् सर्पे तु स द्वयोः ॥ १०६९ ॥
**परुल**स्तु द्वयोरश्वे पार्वत्यां परुला स्त्रियाम् ।
**पवन**स्तु पुमान् वायौ किरणे मेघवत् पुनः ॥ १०७० ॥
पवक्रियासाधनेऽथ पूधात्वर्थे नपुंसकम् ।
पाकस्थाने कुलालस्याप्यथ स्यात् **पत्रकं** नपि ॥ १०७१ ॥
अनुलेपनविन्यासभेदे स्यात् पत्तिसंज्ञके ।
व्यवहारगतानां च लेख्यभेदेऽथ पुंसि सः ॥ १०७२ ॥
यवक्षारविशेषे स्याद् यावशूकाह्वये त्रि तु ।
मृते **परेतो** द्वे तु स्याद् भूतजात्यन्तरे त्रि तु ॥ १०७३ ॥
**पर्याप्त**शब्दः स्याच्छक्ते यथेष्टे तु नपुंसकम् ।
त्रिवारणे च तृप्तौ च **पत्रलं** तु नपुंसकम् ॥ १०७४ ॥
अघने दधिभेदे स्यात् तालीवृक्षे तु पत्रला ।
स्त्रियां सञ्जातपत्रे तु त्रिष्वथ स्यान्नपुंसकम् ॥ १०७५ ॥
**पत्रोर्णं** धौतकौशेये ना तु टुण्टुकपादपे[1] ।
**पदार**स्तु पुमान् वास्तुदेवभेदेऽङ्घ्रिधूलिषु ॥ १०७६ ॥
नपुंसकं तु विज्ञेयं पादालिन्दे विचक्षणैः ।
**पतेर**स्तु पुमाञ्ज्ञेयः पवने द्वे तु पक्षिणि ॥ १०७७ ॥
**पयस्या** तु स्त्रियां विद्यादामिक्षायां तथौषधौ ।
काकोलीनामनि त्रिस्तु दध्याज्यादौ पयोभवे ॥ १०७८ ॥
पयोहिते पयःसाधावित्याहुः शब्दवित्तमाः ।
खर्जूरे तु **परूषो** ना क्लीबलिङ्गं तु तत्फले ॥ १०७९ ॥

१. 'टुट्टुक' क. ड. च. पाठः

† 'टुण्टुकः शोणकाल्पयोः ।' 'पत्त्रोर्णं धौतकौशेये क्लीबं स्याच्छोणके पुमान् ।' इ

**पटह**स्त्वानके न स्त्री निर्घोषे युद्धवाद्यजे ।
रभसस्तु समारम्भे प्रोक्तवाञ्छब्दवित्तमः ॥ १०८० ॥

**पर्कटी** तु स्त्रियां प्लक्षे द्वे तु कङ्काख्यपक्षिणि ।
स्त्री(द्वे ? त्वे)† तु रभसेनोक्ता पूगादेर्नूतने फले ॥ १०८१ ॥

क्ली तु पूगफलेऽथो ना **पर्पटो**ऽपूपभेदके ।
भेषजस्तम्बभेदे च पर्पटी तु स्त्रियामियम् ॥ १०८२ ॥

भवेद् दारुहरिद्रायामाढकीसंज्ञमृद्यपि
**पण्डित**स्तु द्वयोर्ज्ञेयः स्यान्मृगे सूकराकृतौ ॥ १०८३ ॥

रभसस्तु नरि प्राह निर्यासे सिल्हकाह्वये ।
त्रि तु स्याद् विदुषि स्त्री तु **पतिघ्नी** कन्यकान्तरे ॥ १०८४ ॥

वैधव्यलक्षणोपेते त्रि तु हन्तर्यमानुषे ।
पत्युः स्यात् **प्लवग**स्तु द्वे कपौ भेकेऽप्यथ द्वयोः ॥ १०८५ ॥

**प्लवङ्गः** स्यात् कपौ भेकेऽप्यथ स्यात् **प्लवको** द्वयोः ।
कपौ भेकेऽप्यथ द्वे स्यात् **प्लवङ्गः** कपिभेकयोः ॥ १०८६ ॥

**पन्नग**स्त्वोषधीभेदे पुमान् द्वे तु भुजङ्गमे ।
**प्रवाल**स्त्वस्त्रियां वृक्षपल्लवस्याङ्कुरे भवेत् ॥ १०८७ ॥

नवपल्लव इत्यन्ये वीणादण्डेऽपि विद्रुमे ।
**प्रलम्ब**स्तु पुमान् दैत्यविशेषे च लताङ्कुरे ॥ १०८८ ॥

प्रलम्बने तु नृस्त्री स्यात् प्रलम्बितरि तु त्रिषु ।
**प्रधानं** साङ्ख्यतत्त्वे क्ली प्रकृत्याख्येऽजयः पुनः ॥ १०८९ ॥

परमात्मनि बुद्धौ च महामात्रेऽप्यधीतवान् ।
मुख्ये मुख्ये पुनः केचिन् विभाषा त्रि तु मन्वते ॥ १०९० ॥

---

† 'पर्कटी नूतनफले पूगादेः प्लक्षपादपे' इति त्रिकाण्डशेषः ।

**प्रतापिनि प्रचण्डास्त्रिनी** श्वेतकरवीरके ।
**प्रकाण्डस्त्व**स्त्रियां मूलस्कन्धयोरन्तरे तरोः ॥ १०९१ ॥
प्रशस्तेऽप्यजयस्त्वाह विटपेऽथ **प्रकाशवाक्** ।
पुंस्यर्चिषि च दीप्तौ च तुल्येऽपि त्रि स्फुटेऽपि च ॥ १०९२ ॥
**प्रक्षरं** क्ली तुरङ्गादेः सन्नाहे प्रखराह्वये ।
त्रिषु त्वतिक्षरितरि **प्रखरस्त्व**स्त्रियामयम् ॥ १०९३ ॥
प्रक्षरे त्रिस्त्वतिखरे खलेऽथ **प्रवरस्तु** ना ।
कृष्णमुद्गेऽब्धिलवणे पुनः क्ली त्रि तु सत्तमे ॥ १०९४ ॥
**प्रतीको**ऽवयवे ना त्रिः प्रतिकूलानुरूपयोः ।
**प्रग्रीव**मस्त्री कलशे ग्रीवाप्रासादयोरपि ॥ १०९५ ॥
**प्रकरस्त**तपुष्पादौ स्यात् प्रकीर्णसमूहयोः ।
क्लीबं त्वगुरुसंज्ञे स्याद् गन्धद्रव्येऽथ पुंस्ययम् ॥ १०९६ ॥
**प्ररूढो** यवभेदे स्यान्महायव इति श्रुते ।
त्रिस्तु प्राप्तप्ररोहेऽथ **प्रत्यूषो**ऽस्त्री प्रभातके ॥ १०९७ ॥
प्रत्यूषितरि तु त्रिः स्यात् **प्रसूतं** त्वभिधेयवत् ।
स्यात् कृतप्रसवे जाते प्रेरिते कुसुमे तु नप् ॥ १०९८ ॥
सारथौ तु पुमांस्त्री तु प्रसूता सूतिमत्स्त्रियाम् ।
**प्रतिभस्तु** पुमान् नाट्यप्रसिद्धे स्याद् विदूषके ॥ १०९९ ॥
स्त्रियां तु प्रतिभासे स्यात् प्रतिभा मेद्यवत् पुनः ।
प्रतिभातर्यथ पुमान् दत्तस्य तु नपुंसकम् ॥ ११०० ॥
**प्रसभं** स्याद् बलात्कारे ना तु वेगे त्रिष त्वयम् [illegible]
स्यात् प्रकृष्टसभादौ च **प्रवणस्तु** चतु[illegible] ॥
ना त्रि तु क्रमनिम्नोर्वीतले प्रह्व[illegible] प्रमाणे ।
वणिग्गृहे स्यात् **पणिका** [illegible] तु विश्रुते ॥ ११०२ ॥

१. 'कूलयोः' क. ङ. च. पाठः. २. 'सु' ग. पाठः. ३. 'स' ङ. च. पाठः.

पुरोडाशस्य प्रथने नप्यथ **प्रहितो**ऽस्त्रियाम् ।
मुद्गादिभित्तानिर्वृत्ते सूपेऽथ प्रेषिते त्रिषु ॥ ११०३ ॥
**प्रमथा** स्त्री हरीतक्यां हरपारिषदे नरि ।
**पनसः** कण्टकिफलसंज्ञवृक्षे पुमान् स्मृतः ॥ ११०४ ॥
रभसस्त्वाह शब्दज्ञः कण्टकेऽपि स्त्रियां पुनः ।
रोगभेदेऽथ वृक्षस्य पनसस्य फले नपि ॥ ११०५ ॥
**प्रद्युम्नो** मन्मथे पुंसि प्रकृष्टद्युम्नके त्रिषु ।
**प्रसृता** तु स्त्रियां जङ्घासंज्ञाङ्गे पुन्नपोः पुनः ॥ ११०६ ॥
द्विमुष्टिकेऽर्धकुडुबमाने स्याद् वेणुपर्पटे ।
निकुब्जपाणौ च त्रिस्तु वेगिते विस्तृतेऽपि च ॥ ११०७ ॥
**प्रदोष**स्तु पुमान् दोषे रात्रेः प्रथमयामके ।
त्रिस्तु प्रकृष्टदोषादौ **प्रमदा** तु स्त्रियां स्त्रियाम् ॥ ११०८ ॥
स्त्रीविशेषे परे प्राहू रभसस्तूत्तमस्त्रियाम् ।
ना तु हर्षे समासार्थलिङ्गान्यन्यानि नपि पनः ॥ ११०९ ॥
**प्रच्छन्न**मन्तर्द्वारे स्याद् गृहस्यच्छादिते पुनः ।
त्रिषु **प्रभिन्न**स्तु पुमान् मत्तहस्तिन्यथ त्रिषु ॥ १११० ॥
विदारिते **प्रसन्ना** तु स्त्री सुरायामथ त्रिषु ।
अनाविलेऽथ प्रसवोन्मुखायां सुरभौ स्त्रियाम् ॥ ११११ ॥
**प्रस्तुता** प्रकृते तु त्रिः **प्रथमं** तु त्रिषु स्मृतम् ।
आद्यप्रधानयोः स्त्री तु प्रथमा प्रतिपत्तिथौ ॥ १११२ ॥
आद्यायां च विभक्तौ च स्यात् पुनर्स्तिङ्विभक्तिषु ।
आदितास्त्रितये पुंसि **प्रथन**स्तु पुमानयम् ॥ १११३ ॥
मुद्गे क्लीबं तु विस्तृतावना तु स्याद् विसारणे ।
प्रकाशनायां प्रथना क्लीबं तु **प्रधनं** युधि ॥ १११४ ॥

१. 'स' ग. पाठः. २. 'सर्पणे' ग. पाठः.

त्रिः **प्रकृष्टधने** ना तु **पदाजि**(द्यु ? र्यु)†द्धमार्गयोः ।
त्रिस्तु स्यात् पदगेऽथादौ **प्रभृतिः** स्यात् स्त्रियामियम् ॥ १११५ ॥
त्रि तु प्रकृष्टभृत्यादौ **पर्णसि**स्तु पुमानयम् ।
उलूखले बहुत्वे च शाकादौ चाथ शब्दवित् ॥ १११६ ॥
धनञ्जयः शाकवर्यं इत्याह क्ली तु वारिणि ।
**[1]प्रदाकु[2]**स्तु द्वयोर्व्याघ्रे भेकाजगरयोरपि ॥ १११७ ॥
**प्रस्तोता** तु पुमान् ऋत्विग्भेदे साम्नो हि गातरि ।
प्रस्तावभक्तेः प्रस्तावकरे तु त्रिर्द्वयोः पुनः ॥ १११८ ॥
**परभृद्** वायसे (स्त्री तु ? त्रिस्तु) परभर्तरि ना पुनः ।
**पथिकृद्** वर्त्महोमाग्नौ त्रि तु मार्गस्य कर्तरि ॥ १११९ ॥
अथ त्रिषु **पयस्वत्** स्यात् पयस्विन्यथ सा स्त्रियाम् ।
पयस्विनी निशानद्योः **प्रजावत्** तु त्रि सप्रजे ॥ ११२० ॥
स्त्री तु प्रजावती भ्रातृ[3]भार्यायां वैजयन्तिके ।
पुनः **पताकी** त्रिः स्त्री तु सेनायां स्यात् पताकिनी ॥ ११२१ ॥
प्रलोभशीले तु त्रिः स्यात् **प्रलोभी** स्यात् तु पुंस्ययम् ।
*किङ्कराताह्वये पुष्पस्तम्बे **प्रत्यर्थिवाक्** तु ना ॥ ११२२ ॥
शत्रौ स्याद् भेद्यलिङ्गं तु प्रतियोगिनि ना पुनः ।
**पलाशी** पादपे द्वे तु राक्षसे भेद्यवत् पुनः ॥ ११२३ ॥
मांसादिनि **प्रसत्वा** तु वायौ नाथ प्रसत्वरी ।
मातरि प्रतिपत्तौ च स्त्री **परीत्वा** तु मारुते ॥ ११२४ ॥
पुमांस्त्री तु विधिज्ञायां स्त्रियां ज्ञेया परीत्वरी ।
**प्रचेता** वरुणे वह्नौ ना त्रिस्तूत्कृष्टचेतसि ॥ [illegible] ॥

१. 'प' ग. पाठः. २. 'तु' क. [illegible] ३. 'तुर्भा' ङ. च. पाठः.

† पदाजिर्युधि मार्गे च' (पृ. २४३. श्लो. ५८) इति वैजयन्ती । * 'किङ्किराते किङ्किरातः प्रलोभी [illegible]' (पृ. ६० [illegible] श्लो. [illegible]) इति च वैजयन्ती ।

**प्राकाश**स्तु पुमाञ्ज्ञेयः कुण्डलाभरणे त्रि तु ।
प्रकाशसम्बन्धिनि हि **प्राणद**स्तु चिकित्सके ॥ ११२६ ॥

ना प्राणस्य पुनस्त्रि स्याद् दातरि प्राणदा पुनः ।
हरीतक्यामृद्धिनाम्न्यामोषधौ च नपि त्वदः ॥ ११२७ ॥

**प्रालम्ब**मृजुलम्बिन्यां कण्ठात् स्यात् कुसुमस्रजि ।
स्त्री तु प्रालम्बिका स्वर्णललन्त्यामथ **पार्थिवः** ॥ ११२८ ॥

पुमान् नृपे त्रिषु पुनः पृथिव्यां विदिते तथा ।
पृथिव्याश्च विकारे स्यादिदमर्थादिकेऽपि च ॥ ११२९ ॥

तत्र स्त्र्यर्थे यदा वृत्तिः पार्थिवा पार्थिवीति च ।
रूपद्वयं तथा ज्ञेयं **पानीयं** तु जले नपि ॥ ११३० ॥

त्रिः पातव्येऽथ **पादातं** क्लीबं स्यात पत्तिसंहतौ ।
पदातिसम्बन्धिनि तु त्रिः पदातौ च कीर्तितः ॥ ११३१ ॥

**पादप**स्तु पुमान् वृक्षे पादपीठेऽप्यथ स्त्रियाम् ।
पादपा पादुकायां स्यात पादरक्षे तु मद्यवत् ॥ ११३२ ॥

सहस्रदंष्ट्रसंज्ञे तु **पाठीनो** द्वे झषान्तरे ।
गुल्गुलौ तु नृलिङ्गः स्यादित्याह रभसः कविः ॥ ११३३ ॥

**पारदः** पारते कैश्चित् कथितः पुंसि भृङ्गि तु ।
उदीच्यनीवृद्भेदे स्युस्त्रि तु पारस्य दातरि ॥ ११३४ ॥

**प्राणक**स्तु प्राणिनि त्रि ना तु स्याज्जीवकद्रुमे ।
**पायसो**ऽस्त्री दुग्धसिद्ध ओदने पुंसि तु स्मृतः ॥ ११३५ ॥

श्रीवेष्टाह्वयनिर्यासे पयःसम्बन्धिनि त्रिषु ।
**पारुष्य**स्तु पुमानुक्तो गीष्पतौ रभसेन वै ॥ ११३६ ॥

परुषत्वं शक्रवनं तेनैव क्लीबमीरितम् ।
**पांसुला** तु स्त्रियां भूमौ कुलटोदक्ययोस्त्रि तु ॥ ११३७ ॥

पांसुमत्यथ नपुंलिङ्गमूषजे लवणे त्रि तु।
**पांसुजः** पांसुजातेऽथ द्वयोः **पालूर**[1] इत्ययम् ॥ ११३८ ॥

दूतेऽन्ध्रराज्य[2]नगरभेदे क्लीबमथो नपि।
रक्तोत्पले **पाणिकं** ना त्वशीतौ पणनामनि ॥ ११३९ ॥

कपर्दीनां **पावनं** तु प्रायश्चित्ते जले च नप्।
त्रि तु स्यात् पावयितरि पवितर्यप्यथो नपि ॥ ११४० ॥

सोमोन्माने याज्ञिकानां **पाटक**स्त्वस्त्रियामयम्।
ग्रामा(र्धे?र्धे)* त्रिः पटितरि तथा पाटयितर्यपि ॥ ११४१ ॥

**पाटल**स्तु पुमानाशुसंज्ञव्रीह्यन्तरे भवेत्।
श्वेतलोहितसम्मिश्रवर्णभेदेऽथ तद्वति ॥ ११४२ ॥

त्रि स्त्री तु तद्वर्णाख्यायां पाटला पाटलिद्रुमे।
पुष्पे तु तस्य नप् स्त्री स्यात् पाटलं पाटलेति च ॥ ११४३ ॥

**पात्रट**[3]स्तु कृशे त्रि स्यात् कर्परे[4] तु पुमानयम्।
**पाण्डुरं** क्ली मरुवके शुक्ले ना तद्वति त्रिषु ॥ ११४४ ॥

**पालक**स्तु पुमान् हस्तिशिरोमध्यस्य पार्श्वयोः।
गजज्वरे द्वयोस्त्वश्वे क्ली तु कुष्ठाख्यभेषजे ॥ ११४५ ॥

**पाचलो** राधनद्रव्ये पुमान् स्यात् पचने तु नप्।
**पारिन्द**स्तु पुमान् वृक्षे गाथके त्वभिधेयवत् ॥ ११४६ ॥

**पालिक**स्तु पुमान् वृक्षे नृपतौ चाथ भेद्यवत्।
गाथके रक्षके मुख्ये पूज्ये चाप्यथ **पालुकः** ॥ ११४७ ॥

१ 'लु' क. ङ. च. पाठः. २. 'ज' ग [illegible] ३ क. च. पाठः. ४. 'व' क. च., 'पवने' ङ. पाठः.

† पालूक इति दासपर्यायो वैजयन्त्याम्। * 'पाटको रोधसि ग्रामैकदेशेऽक्षादिपातके' इति [illegible]. ‡ [illegible]

लघुवाचिनि सूपे ना स्यादध्वर्यौ च स त्रिषु ।
**सूपकारे पार्वत**स्तु पुमान् निम्बद्रुमे त्रि तु ॥ ११४८ ॥

स्यात् पर्वतभवादौ स मनुष्ये स्त्री तु पार्वती ।
उमायामाढकीसंज्ञमृद्भेदे रभसः पुनः ॥ ११४९ ॥

गोपालपत्रिकायां च गजभक्ष्याख्यभूरुहे ।
**पातक**स्त्वस्त्रियां पापे त्रिस्तु पातयितर्यपि ॥ ११५० ॥

पतितर्यप्यथ स्त्री स्यात् **पादिका** मन्दिरस्य या ।
अल्पा स्थूणा भवेत् तस्यां त्रिस्तु पत्तर्यथो भवेत् ॥ ११५१

**पाटलिः** पाटलासंज्ञपुष्पवृक्षे नरस्त्रियोः ।
विवाहार्थे पुनः शङ्खपात्रे स्यात् पाटली स्त्रियाम् ॥ ११५२

**प्रियक**स्तु पुमान् वृक्षे कदम्बाख्येऽसनद्रुमे ।
फलाध्यक्षाह्वये चापि फलिनीसंज्ञके तथा ॥ ११५३ ॥

तेषां तु प्रसवे क्लीबं मृगभेदे तु स द्वयोः ।
तस्य लक्षणमप्युक्तं मृगज्ञैः पूर्वसूरिभिः ॥ ११५४ ॥

घनैर्मृदूच्चमसृणै रोमभिश्चापि संयुतः ।
नीलपाण्डररेखावाङ्कितचन्द्रक एव वा ॥ ११५५ ॥

इत्येवमथ पुंसि स्यात् **पिङ्गलः** कमलासने ।
ऋषिभेदे रवेः पारिपार्श्विकान्यतमेऽपि च ॥ ११५६ ॥

रभसस्त्वाह वह्नौ च मुकुन्दे च बहुश्रुतः ।
पिशङ्गवर्णे च त्रिस्तु तद्वति स्त्री तु पिङ्गला ॥ ११५७ ॥

दिग्गजान्यतमस्य स्यात् करिण्यां च जलौकसाम् ।
षण्णामन्यतमायां स्यान्निर्विषाणामिति स्मृतिः ॥ ११५८ ॥

शरीरनाडिभेदे च पक्षिजात्यन्तरेऽपि च ।

ब्रह्मरीतिसमाख्ये च लोहभेदे नपि त्वदः ।
ह्रीबेरे द्वे तु मार्जारे नकुले मर्कटेऽप्यथ ॥ ११६० ॥

**पिनाको**ऽस्त्री महादेवचापे शूलाह्वयायुधे ।
रजोवर्षे च दण्डे च **पिण्याक**स्त्वस्त्रियामयम् ॥ ११६१ ॥

श्रीपिष्टाख्ये च निर्यासे कुङ्कुमे हिङ्गुकिण्वयोः ।
तुरुष्काख्ये च निर्यासे यवानीतिलकल्कयोः ॥ ११६२ ॥

**पिशाच**स्तु द्वयोर्देवजातिभेदेऽथ भेद्यवत् ।
उन्मादिनीत्ययं चार्थः शाकटायनभाषितः ॥ ११६३ ॥

**पियाल**स्तु पुमाञ्ज्ञेयः सन्नकद्रुरिति श्रुते ।
राजादनाख्यवृक्षे स्याद् क्ली तु तत्प्रसवेऽथ सा ॥ ११६४ ॥

द्राक्षायां स्यात् पियालाथ **पिशितं** स्यान्नपुंसकम् ।
मांसे स्त्रियां तु मांस्यां स्यात् **पिण्डिल**स्तु पुमानयम् ॥ ११६५ ॥

मेघे हिमे तु क्ली त्रिस्तु गणके **पिण्डित**स्तु ना ।
तुरुष्कसंज्ञनिर्यासे त्रिस्तु स्याद् गणिते घने ॥ ११६६ ॥

**पिण्डक**स्तु पुमान् गेहावयवेऽलिन्दसंज्ञके ।
पिण्डिका तु स्त्रियां नाभौ रथचक्रस्य हस्तिनः ॥ ११६७ ॥

पादावयवभेदे च जङ्घापिण्डेऽथ **पिञ्जरम्** ।
हरिताले भवेत् क्लीबं मिश्रवर्णान्तरे तु ना ॥ ११६[illegible] ॥

पीतरक्ते तद्वति तु त्रिष्वथो **पिशुनास्त्रि**[illegible] ।
खलसूचकयोर्हर्षनन्दी त्वेनमवोचन ॥ ११[illegible] ॥

मन्त्रभेदे कवचने परेषां [illegible] ।
क्लीबं तु कुङ्कुमे रूपे कपिवक्त्रे त्वभाषत ॥ ११७० ॥

रभसः शब्दविच्छ्रेष्ठः पिशुना तु स्त्रियामियम् ।
[illegible]

पिशीली तु स्त्रियां वीणाभेदे त्रिषु तु **पिच्छिलः** ।
पिच्छाख्यगुणसंयुक्ते विजिलाख्ये‡ स्त्रियां पुनः ॥ ११७२ ॥
पिच्छिला शिंशपायां च पोतक्यां शल्मलावपि ।
सिन्धुभेदे च रभसः कीर्तयामास ना पुनः ॥ ११७३ ॥
**पिच्छोलः** सरलाभिख्यतरौ कटविशेषके ।
कटोलसंज्ञे वंशे च वीणाभेदे तु सा स्त्रियाम् ॥ ११७४ ॥
पिच्छोला ना तु **पिच्छूलो** राशौ लिङ्गत्रये पुनः ।
पिच्छूली स्यात् तृणस्तम्बे **पिप्पलं** तु जले नपि ॥ ११७५ ॥
वस्त्रच्छेदप्रभेदे च सूचीसूत्रे पि चूचुके ।
वृक्षाणां च फले ना तु स्यादश्वत्थेऽथ पिप्पली ॥ ११७६ ॥
हस्तिनः कर्णमूले च कणायां च स्त्रियामियम् ।
मृज्यमानेति वर्गस्य सामभेदे च सप्तमे ॥ ११७७ ॥
इमां निरङ्गुले पक्षिभेदे च रभसोऽब्रवीत् ।
†**पिदारस्तु** क्षपणके नृलिङ्गः परिकीर्तितः ॥ ११७८ ॥
द्वयोस्तु विद्याद् गोपे च महिषीरक्षकेऽपि च ।
**पिप्परस्तु** पुमान् वृक्षभेदे स्यात् स्त्री तु पिप्परी ॥ ११७९ ॥
अन्यत्र पिप्परा वृक्षभेदे स्यात् **पिठरं** तु नप् ।
मन्थानदण्डेऽपि प्राह रभसः शब्दवित्तमः ॥ ११८० ॥
मुस्तके पिठरी तु स्यात् स्थाल्यां स्त्री शण्डलिङ्गकः ।
स्थाल्यां तूक्ता पृथग् ब्रूत उखायां शाकटायनः ॥ ११८१ ॥
**पित्तलं** स्वारसंज्ञे क्ली लोहभेदे स्त्रियां पुनः ।
पित्तला तोयपिप्पल्यां त्रिस्तु पित्तकरे भवेत् ॥ ११८२ ॥

---

१. 'कीलकः' क. ग. 'कीलसः ।' च. पाठः.

‡ 'अथ पिच्छिलः । विज्जले' इति तु हेमचन्द्रः । † 'पिण्डारः क्षपणे गोपे महिषीरक्षके [illegible]

**प्रियङ्गुस्तु** फलिन्यां स्त्री कङ्गुधान्ये च ना पुनः ।
कुङ्कुमे **पीवरं** त्वेतत् स्थूले स्याद् भेद्यलिङ्गकम् ॥ ११८३ ॥
शतावरीति विख्याता यौषधिस्तत्र पीवरी ।
स्त्रियामथ पुमाञ्ज्ञेयः **पीतनः** पादपान्तरे ॥ ११८४ ॥
आम्रातकाख्ये क्लीबं तु हरितालेऽपि कुङ्कुमे ।
**पीनसस्तु** प्रतिश्याये नाऽथ मण्डलिसंज्ञिनाम् ॥ ११८५ ॥
षड्विंशतेः[1] सर्पजातिभेदानां स्याद् द्वयोरयम् ।
एकत्र भेदेऽथ क्लीबं **पुराणं** पञ्चलक्षणे ॥ ११८६ ॥
ग्रन्थभेदे पुमांस्तु स्यात् कार्षिके त्रिश्चिरन्तने ।
यदा तत्र स्त्रियां वृत्तिः पुराणा च पुराण्यपि ॥ ११८७ ॥
रूपद्वयं तदाऽथ स्याद् विमाने धनदस्य हि ।
**पुष्पकोऽ**स्त्री द्वयोस्तु स्याद् द्वादशानां तु भोगिनाम् ॥ ११८८ ॥
निर्विषाणामेकजातौ त्रिषु पुष्पितरि स्मृतः ।
**पुष्पाढ्यस्तु** स्वयं शीर्णपुष्पमूलफलाशने ॥ ११८९ ॥
व्रतिभेदे त्रिषु पुनः समृद्धे कुसुमैरथ ।
**पुल्कसः** स्याद् द्वयोर्मर्त्यजातिभेदे यदुद्भवः ॥ ११९० ॥
करण्यामपि चण्डालात् क्षत्रियायां च शूद्रतः ।
**पुष्करं** करिहस्ताग्रे जले वाद्यमुखे युधि ॥ ११९१ ॥
खेऽब्जे दिव्यसिधारायां तीर्थभेषजभेदयोः ।
पटहे मुरवे त्वन्ये पुमांस्त्वौर्वे च मारुते ॥ ११९२ ॥
शेषे च शोभने तु स्याद् भेद्यलिङ्गमिति मानेन
**पुष्कलं** भेद्यवच्छुद्धे प्रभूते शोभनेऽप्यथ [illegible] ३ ॥
भिक्षाचतुष्टये च स्यादपि मे[illegible] स्ययम् ।
**मुष्यष्टकाष्टके** तु क्ली तथा धान्यहिरण्ययोः ॥ ११९४ ॥

1. 'के' ग. ङ. पाठः.

**पुरुषस्तु** द्वयोर्मर्त्ये ना तु जन्तौ सशेफके ।
पुन्नागवृक्षे द्रुहिणे क्षेत्रज्ञे साङ्ख्यवेदिनि ॥ ११९५ ॥
**पुलिन्दस्तु** द्वयोर्मर्त्यजातिभेदेऽस्य लक्षणम् ।
किरात्यां निष्ट्यपूर्वायां शबराज्जात इत्यदः ॥ ११९६ ॥
निष्ट्यादनन्यपूर्वायां किरात्यां जनितेऽपि च ।
**पुन्नागस्तु** पुमान् पूज्यपुरुषे पुङ्गजे तथा ॥ ११९७ ॥
पुंसर्पे च तथा वृक्षे देववल्लभसंज्ञके ।
क्ली तु तत्प्रसवेऽथो ना **पुलको** रोमहर्षणे ॥ ११९८ ॥
रत्नभेदे च खङ्गादिस्थिताम्वणुपु राजिपु ।
रभसस्त्वाह §गल्वर्कमणिदोषप्रभेदयोः ॥ ११९९ ॥
हरितालेऽप्यथ द्वे स्यात् कृमिभेदेऽथ शब्दवित् ।
शाकटायन आह स्म स्वशास्त्रे **पुरुटः** पुमान् ॥ १२०० ॥
स्त्रीपुंसयोश्च दम्पत्योः परैरसहने भवेत् ।
संला(पस्तु ? पे च) द्वयोस्तु स्याज्जलजन्तावथ त्रिषु ॥ १२०१
**पुटितं** पाटिते स्यूते क्ली तु वस्तिपुटे त्रि तु ।
**पुष्पवत्** स्यात् सकुसुमे स्त्री तु पुष्पवती भवेत् ॥ १२०२ ॥
रजस्वलायां क्लीबं तु **पूरणं** पूर्तिकर्मणि ।
अना तु पूरयत्यर्थे पूरणा स्त्री तु पूरणी ॥ १२०३ ॥
पुनर्नवाजातिभेदे स्वल्पेऽथो शल्मलावपि ।
पुनर्नवायां तु पुमान् पूरणः पूर्यते पुनः ॥ १२०४ ॥
येन त्रि तत्र ना तु स्यात् कलायाह्वयधान्यके ।
**पूरकोऽ**पूपभेदे तु पूरिका स्त्री त्रिषु त्वदः ॥ १२०५ ॥

१. 'हसने' ग. पाठः.

§ गल्वर्कोऽन्त्वषकः ।

स्यात् पूरयितृपूरित्रोः **पूत्यण्ड**स्तु द्वयोरयम् ।
क्षुद्रपक्षिविशेषे स्यादण्डकारकसंज्ञके ॥ १२०६ ॥

गन्धकीटे तु रभसः कथयत्यथ **पूर्णिका** ।
स्त्री पौर्णमास्यां स्यात् पक्षिजातिभेदेऽप्यथ त्रिषु ॥ १२०७ ॥

परिपूर्णसुखादौ स्याद् बिन्दौ तु **पृषतः** पुमान् ।
देहवैकृतभेदे च पृश्निसंज्ञे त्रिषु त्वमुम् ॥ १२०८ ॥

श्वेतबिन्दुयुते प्राह रभसोऽथ द्वयोरयम् ।
मृगभेदे तस्य चोक्तं लक्षणं प्रकृते मृगे ॥ १२०९ ॥

ताम्रस्तु हरिणः प्रोक्त इत्युक्त्वा हरिणं ततः ।
शम्बरस्त्वल्पहरिणः पृषतस्तु स बिन्दुमान् ॥ १२१० ॥

इत्येवं **पृथुक**स्तु स्यात् पुमांश्चिपिटसंज्ञके ।
भक्षभेदे द्वे तु बाले **पृदाकु**स्तु पुमानयम् ॥ १२११ ॥

ऋषिभेदे गोत्रकृति द्वे तु वृश्चिकसर्पयोः ।
**पेचको** ना हस्तिपुच्छमूलोपान्ते द्वयोः पुनः ॥ १२१२ ॥

उलूके पेचिका तु स्त्री पिङ्गलासंज्ञपक्षिणि ।
**पेटक**स्तु द्वयोर्वृन्दे पिटके तु पुमानयम् ॥ १२१३ ॥

**पेलवं** तु त्रिषु मृदौ मरिचे तु नपुंसकम् ।
**प्रेरित्वा** तु समुद्रे ना स्त्री तु प्रेरित्वरी पुरि ॥ १२१४ ॥

**पोगण्ड**स्तु द्वयोर्यूनि विकलाङ्गे तु भेद्यवत् ।
**प्रोक्षण्य**स्तु स्त्रियो यज्ञकारिणामप्सु कासुचित् ॥ [illegible]

प्रोक्षणं तु वधे यज्ञपशोरभ्युक्षणेऽम्भसा ।
**पौरुषं** तु नपि प्रोक्तं पुंसः स्याद भावकर्म[illegible] ॥ १२१६ ॥

शौर्ये रेतसि च त्रिस्तु पुंसः सम्ब[illegible]वस्तुषु ।
ऊर्ध्वविस्तृतदोःपाणिनृमानेऽथ नील्ङ्कः ॥ १२१७ ॥

स्याद् रावणे वैश्रवणे **पौलस्त्योऽयं** द्वयोः पुनः ।
पुलस्त्यवंश्ये विज्ञेयः क्ली तु युद्धेऽप्यथास्त्रियाम् ॥ १२१८ ॥
काष्ठासने स्यात् **फलकं** शस्त्राणां च निवारणे ।
खेटकाख्येऽथ फलकी मत्स्यजात्यन्तरे स्त्रियाम् ॥ १२१९ ॥
भवेच्चित्रफलीसंज्ञे तथा स्याच्चन्दनेऽपि च ।
क्षुमासंज्ञे तु ना धान्ये **फल्गुनी** तु स्त्रियामियम् ॥ १२२० ॥
भगदैवतनक्षत्रे तथैवार्यमदैवते ।
ताभ्यां युक्ते कालमात्रे जाते त्वत्र त्रि **फल्गुनः** ॥ १२२१ ॥
स्त्र्यर्थे वृत्तिर्यदा तत्र तदा स्यात् फल्गुनी स्त्रियाम् ।
फल्गुनस्तु पुमानेव ज्ञेयो मध्यमपाण्डवे ॥ १२२२ ॥
**फक्किका** तु स्त्रियामेकग्रन्थे गौरे च सर्षपे ।
त्रिस्तु फक्कितरि त्रिस्तु **फलकी** चर्मपाणिके ॥ १२२३ ॥
स्त्री त्वजायां फलकिनी पौर्णमास्यां तु **फाल्गुनी** ।
फल्गुन्या संयुतायां स्त्री सा तु मासेऽस्ति यत्र हि ॥ १२२४ ॥
तत्र ना फाल्गुनः क्ली तु तृणजात्यन्तरेऽथ नप् ।
**फाणितं** गौडविकृतिभेदेऽथ क्वाथिते त्रिषु ॥ १२२५ ॥
**फेनिल**स्तु पुमान् वृक्षविशेषेऽरिष्टसंज्ञके ।
त्रिस्तु फेनवति क्ली तु विज्ञेयं बदरीफले ॥ १२२६ ॥
**बन्धुर**स्तु द्वयोर्हंसे त्रिस्तु सुन्दरनम्रयोः ।
उन्नतानत इत्यन्ये रभसस्त्वस्त्रिया(मि[१]म)यम् ॥ १२२७ ॥
बन्धूके पक्षिभेदे चेत्यथ **बन्धूर** इत्यमुम् ।
एष्वेवार्थेषु रभसस्तत्तल्लिङ्गमवोचत ॥ १२२८ ॥
**बहुल**स्तु पुमानग्नौ कृष्णपक्षे च नीपके ।
त्रिस्तु कृष्णे प्रभूते च कृत्तिकाकालजातके ॥ १२२९ ॥

१. 'च' ग. पाठः.

स्त्रियां तु बहुला भूम्यामेलायां सुरभावपि ।
श्वेतायां चाथ गोदस्यौ द्विवचो बहुले इति ॥ १२३० ॥

स्त्रीभूम्नि कृत्तिकासु स्याद् **बर्हिणं** तु नपुंसकम् ।
ज्ञेयं भारतवर्षस्थद्वीपभेदे द्वयोः पुनः ॥ १२३१ ॥

मयूरे बर्हवति तु मेद्यवद् **बदरी** पुनः ।
अजगन्धाह्वयस्तम्बे कुवलीसंज्ञपादपे ॥ १२३२ ॥

ईश्वरस्थानभेदे च स्त्रियां स्याद् बदरा पुनः ।
विष्वक्सेनप्रियासंज्ञस्थावरे परिकीर्तिता ॥ १२३३ ॥

कार्पासीति प्रसिद्धे च गुल्मे स्याद् बदरं तु नप् ।
एषां स्यात् प्रसवेऽथ स्यान्म्लेच्छजात्यन्तरे द्वयोः ॥ १२३४ ॥

**बर्बरो** बर्बरा तु स्त्री स्तम्बे यस्याह्वयान्तरम् ।
अजगन्धेति ना तु स्याद् भार्ङ्गिसंज्ञकभेषजे ॥ १२३५ ॥

**बन्धूक**स्तु पुमान् बन्धुजीवाख्ये पुष्पगुल्मके ।
रभसस्त्वसनाभिख्यपादपेऽप्यपठीदिदम् ॥ १२३६ ॥

प्रसवे त्वनयोरेतन्नबूलिङ्गमवधारयेत् ।
पशुबन्धनरज्जौ तु **बन्धनी** स्त्री नपि त्वदः ॥ १२३७ ॥

बन्धनं स्यात् संयमने त्रि तु बन्धस्य साधने ।
बन्धे तु रभसः प्राह **बन्धकी** तु स्त्रियामियम् ॥ १२३८ ॥

कुलटायां तथानाप्तसत्कृतिर्वेशगामिनी ।
अर्थाय या स्त्री तस्यां च करिण्यां चाह शब्दवित् ॥ १२३९

निघण्टुकारो रभसो बन्धरि त्वेष मेद्यवत् ।
आधौ तु बन्धकं क्लीबे **बल्लूर**स्तूपले पुमान् ॥ १२[illegible]

स्तने च द्वे तु मत्स्येऽथ **बर्हिष्ठं** स्यान्नपुंसकम्
ह्रीबेरे त्रिस्तु महति काके तु बलिभुग् द्वयोः ॥ १२४१ ॥

१. 'ञ्जी' क. ख., 'जी' ग. पाठः. २. 'क' ग. पाठः.

बलेस्तु भोक्तरि त्रि स्याद् विप्रे तु **ब्राह्मणो** द्वयोः ।
आत्मज्ञे च नपि त्वेतद् वेदभागेऽभिधायके ॥ १२४२ ॥
तस्यावयवभेदे च भार्ङ्ग्यां तु ब्राह्मणी स्त्रियाम् ।
हरेणुस्पृक्कयोश्चापि ब्रह्मरीत्याख्यलोहके ॥ १२४३ ॥
पिपीलिकाजातिभेदे पिङ्गे महति किञ्च ताम् ।
विद्यादञ्जनिकासंज्ञजन्तोर्जात्यन्तरेऽपि च ॥ १२४४ ॥
रक्तपुच्छे **बाभ्रवं** तु बभ्रुसम्बन्धिनि त्रिषु ।
बभ्रोस्तु वंश्ये द्वे स्त्री तु पार्वत्यां बाभ्रवी स्मृता ॥ १२४५ ॥
अथात्र रभसेनोक्ता न स्त्री हृत्कर्णयोर्मले ।
गणिस्थराजे (?) पुंलिङ्ग इत्येवं बहुवेदिना ॥ १२४६ ॥
**बाहुदा** तु नदीभेदे स्त्री त्रिषु त्वेष दातरि ।
बाहोर्बहुप्रदस्यापि सम्बन्धिन्यत्र तु स्मरेत् ॥ १२४७ ॥
स्त्र्यर्थे वृत्तिर्यदा रूपं बाहुदेति तदा भवेत् ।
**बाहुजस्तु** द्वयोः कीरे क्षत्रिये च पुमान् पुनः ॥ १२४८ ॥
स्वयञ्जाततिले बाहुसम्भवं त्वभिधयवत् ।
**बाह्लीकं** तु नपि प्रोक्तं हिङ्गुकुङ्कुमयोस्तथा ॥ १२४९ ॥
काश्चित् त्वाह कुसुम्भेऽपि पुम्भूमनि तु बोधत ।
नीवृद्भेदेऽथ तद्देशजातजन्तुषु स द्वयोः ॥ १२५० ॥
विशेषात् त्वाह तद्देशजातेष्वश्वेषु कश्चन ।
अथानेन समानार्थस्तुल्यलिङ्गश्च **बाह्लिकः** ॥ १२५१ ॥
**बार्दरस्तु** पुमान् मेलानन्दायां[†] दिवसे(पि?तु) नप् ।
**बालकस्तु** पुमान् कृष्णशालौ त्रिस्त्वतिबालिशे ॥ १२५२ ॥

१. 'षे त्वा' च. पाठः. २. 'द्द' ग. पाठः. ३. 'नेला' ग. पाठः

† 'मेलानन्दो मषिघटी' (पृ. १३८. श्लो. २५) इति वैजयन्ती

**बालेयो** गर्दभे द्वे स्याद् दैत्ये चाथ खले त्रिषु ।
मृदौ बलिहिते चेति रभसेन समीरितम् ॥ १२९३ ॥

**बाहुलस्तु** पुमान् मासि कार्त्तिकेऽथ नपुंसकम् ।
बाहुत्राणकयन्त्रे हि योधानां भेद्यवत् पुनः ॥ १२९४ ॥

भवेद् बहुलसम्बन्धिन्यथ क्ली **बार्हतं** फले ।
बृहत्या बृहतीसंज्ञच्छन्दस्यप्यथ भेद्यवत् ॥ १२९५ ॥

बृहत्या बृहतश्चापि सम्बन्धिन्यथ **बान्धवः** ।
द्वे बन्धौ त्रि तु बन्धोः स्यात् सम्बन्धिन्यथ न स्त्रियाम् ॥ १२९६

**बिदलः**[2] पाटिते काष्ठे परे वेणुदले विदुः ।
द्विधाकृते तु मुद्गादौ कश्चिदाचष्ट ना पुनः ॥ १२९७ ॥

**बीभत्सः**[3] कथितः पार्थे नाट्यस्थे च रसान्तरे ।
तद्वदर्थे पुनस्त्रि स्यात् क्रूरे चाथ स्त्रियामियम् ॥ १२९८ ॥

बीभत्सा स्याज्जुगुप्सायां **बुक्कणस्तु** शुनि द्वयोः ।
वावदूके पुनस्त्रि स्यादथ स्याद् **बुद्धिमान्** द्वयोः ॥ १२९९ ॥

धूम्याटाख्यस्य शकुनेर्भेदे यस्याह्वयान्तरम् ।
राजभृङ्ग इति त्रिस्तु बुद्धियुक्तेऽथ नप्यदः ॥ १२६० ॥

**बृहत्कं** सामभेदे स्यादागन्तेत्यृचि गीयते ।
यत् साम तस्मिन् ना तु स्यान्मणिभेदेऽस्य लक्षणम् ॥ १२६१ ॥

अत्र भर्तृहरेः श्लोकं ब्रुवते पूर्वसूरयः ।
प्रविकासिप्रभोऽल्पोऽपि महान् य उपलक्ष्यते ॥ १२६२ ॥

बृहत्क इति तत्रैष मणौ शब्दः प्रयुज्यते ।
इत्येवमथ नब्लिङ्गं **बृञ्चूकं** स्याज्जले द्वयोः ॥

मातृवाहकसंज्ञे स्याज्जन्तौ सद्योङ्कुरे पुन
**बैजिको** ना शिग्रुतैलहेत्वोम्तृ [illegible] नपि ॥ १२६४ ॥

१. 'स्याद्बाहुलार्णय' क. च. पाठः. २. 'लं' ग. ङ. पाठः. ३. 'त्सुः' क. ग. च.

वैजिकादभिसम्बन्धा(दिनि?)* बीजनिमित्तके ।
प्रयोगस्तत्र मेध्यस्य लिङ्गं **भवन**वाक् तु नप् ॥ १२६५ ॥
उत्पत्तौ च गृहे चान्ये पुनः पुंस्यपि मन्वते ।
द्वयोस्तु स्याच्छुनि शुनि पुनर्द्वे **भषणो**ऽथ नप् ॥ १२६६ ॥
बुक्कनाख्यक्रियायां स्याद् **भरणं** तु नपुंसकम् ।
वेतने धारणे चैव पोषणे भर्त्सनेऽपि च ॥ १२६७ ॥
क्र्यादेर्भृणातेः स्यात् स्त्री तु नक्षत्रे यमदैवते ।
भरणी भूम्नि च प्राहुरन्येऽथो भल्लुको द्वयोः ॥ १२६८ ॥
वानरेऽप्यृक्षसंज्ञे च मृगेऽथर्क्षमृगे द्वयोः ।
**भल्लूको** ना पुनष्टुण्डुसंज्ञवृक्षेऽथ नप्स्त्रियोः ॥ १२६९ ॥
**भक्षणा**भ्यवहारे स्त्री पुनर्धान्ये हि भक्षणी ।
गवीथुकासमाख्येऽथ **भविलं** क्ली गृहेऽथ ना ॥ १२७० ॥
मुनिप्रभेदे भव्ये तु त्रिरथो **भटिलो** द्वयोः ।
शुनि स्यात् सेवके तु त्रि**र्भण्डिल**स्तु शुनि द्वयोः ॥ १२७१ ॥
पुत्रे चाथ पुमान् वृक्षे शिरीषाख्येऽथ **भञ्जनम्** ।
आमर्दने क्लीबलिङ्गं जानीयाद् भञ्जना त्वना ॥ १२७२ ॥
अर्थे भञ्जयतेः स्त्री तु विवृत्य वचनं भवेत् ।
भञ्जना **भरुज**स्तु द्वे सृगाले पुंस्त्रियोः पुनः ॥ १२७३ ॥
भक्ष्यभेदे स्नेहमृष्टतण्डुले तत्र च स्त्रियाम् ।
यदा वृत्तिस्तदा रूपं भरुजा भरुजीति च ॥ १२७४ ॥
**भ्रमक**स्तु द्वयोः क्रोष्टौ सूर्यावर्ते तु पुंस्ययम् ।
**अयस्कान्तविशेषे** च लोहभ्रमणकारिणि ॥ १२७५ ॥

१. 'द' क., 'दे' ग. पाठः. २. 'ल्लु' ग. पाठः. ३. 'च' च. पाठः. ४. 'हस्य भ्रमका' क. ख. च. पाठः.

* 'दिनि' इत्यस्य स्थाने 'यदि' इति पाठ्यं स्यात् ।

रभसस्त्वेषु वाच्येषु दीर्घादिं भ्रामकं जगौ ।
शब्दस्मृतिविरुद्धत्वात् तदस्माभिरुपेक्षितम् ॥ १२७६ ॥
**भ्रमणं** तु नपि भ्रान्तौ स्त्रीनपुंसकयोः पुनः ।
भ्रमणा भ्राम्यतेर्हेतुव्यापारेऽथ स्त्रियामियम् ॥ १२७७ ॥
कारुण्डिकायां भ्रमणी* क्रियाद्यायामधीशितुः ।
**भ्रमरस्तु** द्वयोर्भृङ्गे कामुके त्वभिधेयवत् ॥ १२७८ ॥
**भटालं** तु कपोले क्ली मेयलिङ्गं तु सेवके ।
**भल्लाटस्तु** द्वयोर्ऋक्षमृगेऽथो वास्तुवासिनाम् ॥ १२७९ ॥
देवानां स्यादन्यतमे स च ज्ञातव्य ईदृशः ।
उदक्पार्श्वस्थकोष्ठानां प्रत्यगारभ्य यो भवेत् ॥ १२८० ॥
कोष्ठश्चतुर्थस्तत्रासौ तिष्ठतीत्यथ मेयवत् ।
**भण्डीरो** योद्धरि स्त्री तु शाकवल्ल्यन्तरे भवेत् ॥ १२८१
मण्डूकपर्णीसंज्ञे हि भण्डीरी पुंसि तु स्मृतः ।
शाक्यक्षपणकानां स्याद् **भदन्तः** पूजनीयके ॥ १२८२ ॥
सर्वसन्यासिनि त्वाह हर्षनन्दी स सूक्ष्मदृक् ।
ताराभदन्तयुक्ते तु त्रि**र्भवन्त**स्तु ना पुनः ॥ १२८३ ॥
काले भवितरि त्वेष त्रिस्तत्रापि यदा स्त्रियाम् ।
तदा भवन्ती **भरुटः** पुनर्द्वे कुम्भकारके ॥ १२८४ ॥
कपर्दे तु पुमान् ना तु **भगवान्** हरशार्ङ्गिणोः ।
बुद्धे च त्रि तु पूज्येऽथ पार्वत्यां भगवत्यसौ ॥ १२८[illegible]
स्त्रियामथ **भविष्यत्** त्रिर्भाविनि क्ली तु वारिणि ।
**भारतं** त्वस्त्रियामस्मिन् वर्षेऽथो भरतस्य हि ॥ [illegible]
सम्बन्धिनि त्रिषु स्त्री तु सरस्वत्यां हि [illegible]
रभसस्त्वाह पक्षिण्यामित्य[illegible] चिन्त्यताम् ॥ १२८७ ॥

* 'भ्रमणी स्यादधीशितुः । क्रीडाटौ कारुण्डिकायाम्' इति तु हेमचन्द्रः ।

तुलसीनाम्नि च स्तम्बे नाट्यवृत्त्यन्तरेऽप्यथ ।
स्त्री महाभारते ना तु **भार्गवो** गजधन्विनोः ॥ १२८८ ॥

शुक्रे परशुरामे च भार्गवी तु स्त्रियामियम् ।
हरिप्रियायां दूर्वायां पार्वत्यां चाथ **भाषणम्** ॥ १२८९ ॥

वचने नबुपालम्भवाचि तु स्त्री हि भाषणी ।
**भालाङ्क**स्तु शिवे शाकभेदेऽपि करपत्रके ॥ १२९० ॥

महालक्षणसम्पन्नपुरुषे रोहिते च ना ।
कच्छपे तु द्वयोस्त्रिस्तु रोहिते गुणिनि स्मृतः ॥ १२९१ ॥

**भावाट**स्तु त्रिषु ज्ञेयो भावके कामुकेऽपि च ।
ना तु साधुनिवेशे* स्याद् रभसेनेदमीरितम् ॥ १२९२ ॥

†**भारद्वाजी** तु वन्यायां कार्पास्यां स्त्री पुमान् पुनः ।
भारद्वाजो द्रोणाचार्ये द्वे भरद्वाजवंशजे ॥ १२९३ ॥

**भारुण्ड**स्तु नपि ज्ञेयः सामभेदेषु केषुचित् ।
एकोदरपृथग्ग्रीवे त्वब्धिचारिणि पक्षिणि ॥ १२९४ ॥

द्वयोः स्याद् **भावना** तु स्त्रीनपोरुत्पादने तथा ।
गन्धाधिवासनायां च भाट्टास्तु प्रतिजानते ॥ १२९५ ॥

प्रवर्तनायां **भावज्ञः** पुनस्त्रिर्भाववेदिनि ।
प्रियङ्गुसंज्ञवृक्षे तु भावज्ञो स्त्री द्वयोः पुनः ॥ १२९६ ॥

**भ्रातृव्यो** भ्रातृपुत्रे ना पुनः शत्रौ नपि त्वदः ।
**भ्रामरं** भ्रमरैर्ज्ञेयं कृते मधुनि सा पुनः ॥ १२९७ ॥

पार्वत्यां भ्रामरी स्त्री(तु? स्याद्) व(स्त्रे? ज्रे) तु **भिदकं** नपि
परशौ तु पुमान् स्त्री तु भेदके **भिदुरं** तु नप् ॥ १२९८ ॥

१. 'लम्भस्तु' क. च., 'लाकस्तु' ग. पाठः. २. 'ण्ड' ग., 'ण्ढि' क. पाठः. ३. 'थ ना ।' ग. पाठः. ४. 'ज्ञो' ग. पाठः.

* 'भावाटो भावके साधौ निवेशे कामुके नटे' इति तु मेदिनी । † अयं श्लोक इह प्रमादाल्लिखितो भाति ।

**कुलिशे** भेद्यवत् तु स्याद् भेत्तर्यपि भिदेलिमे ।
**भीषणं** तु त्रिषु ज्ञेयं भीमे स्त्रीशण्डयोः पुनः ॥ १२९९ ॥

भीषणा भापनायां स्यात् स्त्री तु स्यात् सल्लकीरसे ।
कवाटे चेति रभसो भुवने तु नपुंसकम् ॥ १३०० ॥

पुंस्यप्येके विदुर्लोके क्लीबमेव जले विदुः ।
**भुजिष्यस्तु** द्वयोर्दासे धने तु (स्त्री क्ली) पुमान पुनः ॥ १३०१ ॥

आचार्येऽप्योदने चापि रभसो हस्तसूत्रके ।
त्रिस्तु भोक्त र विजयमनधीनसहाययोः ॥ १३०२ ॥

**भुजङ्गस्तु** विटे पुंसि तथैवान्यनसे भवेत् ।
चण्डवृष्टिप्रयातादिदण्डकानां द्वयोस्त्वयं ॥ १३०३ ॥

**भुलिङ्गस्त्वृषिभेदे** ना नीवृद्भेदे तु भूम्नि च ।
स्यात् सालावयवे द्वे तु पक्षिजात्यन्तरेऽथ ना ॥ १३०४ ॥

****भुरण्यो** भास्करे विष्णौ वह्नौ क्षिप्रे पुनस्त्रिषु ।
**भूमिजस्तु** पुमान् दैत्यभेदे नरकसंज्ञके ॥ १३०५ ॥

अङ्गारके च स्त्री तु स्यात् सीतायां भूमिजाथ तत् ।
यत्किञ्चिद् भूमिसम्भूतं तत्र स्याद् भद्रलिङ्गकम् ॥ १३०६ ॥

अस्त्री त्वाभरणे ज्ञेयं **भूषणं** भूषणा त्वना ।
अलङ्कृतावथ स्त्री स्याच्चतुर्दश्यां तिथौ तथा ॥ १३०७ ॥

**भूतघ्ना** वाञ्छिते तु त्रिभूतानामथ सा स्त्रियाम् ।
तीक्ष्णार्जकाख्यस्तम्बे स्याद् **भूतघ्नी** त्रिषु हन्तरि

१. 'वो' क. ग. ङ. च. पाठः [illegible] 'तु' क. पाठ
'लज्जिते' क च. पाठः.

* भुरण्यु विष्णुभास्करौ' (पृ. [illegible]) इति तु वैजयन्ती

अश्वत्थे त्रायमाणायामप्याचष्ट स्त्रियां पुनः ।
मङ्गल्या स्याद् वचायां च मल्लिकापुष्पगन्धिनि ॥ १३२१ ॥
कालागुरुविशेषे च गन्धभेदे च यः स्थितः ।
मल्लिकाकुसुमे तस्मिन् रभसस्तु बहूक्तवान् ॥ १३२२ ॥
रोचनाशम्यथ पुष्पीमसीशुक्लवचास्वपि ।
इत्येवमथ विज्ञेया शब्दज्ञैर्मण्डली त्रयी ॥ १३२३ ॥
बिम्बे चाप्युपसूर्ये च कुष्ठरोगान्तरेऽपि च ।
समूहमात्रे ग्रामौघे देशे द्वादशराजके ॥ १३२४ ॥
युग्मे[1] च शुनि तु द्वे स्यान्मण्डपोऽस्त्री जनाश्रये ।
मण्डस्य तु पिबे त्रि स्यादथ स्यात्त्रि मण्डनम् ॥ १३२५ ॥
विद्यादाभरणे भूषिक्रियायां तु न ना स्मृता ।
मण्डना रभसस्तु त्रिः शब्दज्ञोऽलङ्करिष्णुनि ॥ १३२६ ॥
मत्सरा तु स्त्रियामाह मक्षिकायां पुमान् पुनः ।
भवेत् परशुभद्द्वेषे लोभे कोपेऽजयोऽपठीत् ॥ १३२७ ॥
यागसाधनसोमाख्यद्रव्ये च कृपणे पुनः ।
भेद्यवत् परसम्पत्तेरसोढर्यजयः पुनः ॥ १३२८ ॥
निष्क्रयेऽप्याह मदनः पुनः पुंसि मनोभवे ।
पिण्डीतकतरौ स्याच्च धुर्धूरे वनकोद्रवे ॥ १३२९ ॥
वृक्षे कुरवकाभिख्ये मधूच्छिष्टवसन्तयोः ।
कस्तूरिकामृगस्याण्डे पुनः स्त्री मदनी तथा ॥ १३३० ॥
सुरायां च नपि त्वेतत् प्रसवेऽत्रोक्तमा[illegible] ।
मदनं माद्यतेश्चार्थे मदना त्वपुमानसौ ॥ [illegible] ॥
धातोर्मदयतेरर्थे मन्मथस्तु पुमान्
रभसः कामचिन्तायामित्य[illegible] ॥ १३३२ ॥

1. 'रुक्मे च' ग. पाठ.

कन्दर्पे च कपित्थे च क्ली तु तत्प्रसवेऽथ नप् ।
**मधुकं** मधुयष्ट्याख्यभेषजेऽथाजयोऽवदत् ॥ १३३३ ॥
स्त्रियमेनाममुत्रार्थे जातिभेदे तु स द्वयोः ।
मैत्रेयायोगवीजाते वन्दिन्यप्यथ सा स्त्रियाम् ॥ १३३४ ॥
मधुका श्यामकन्दौ स्यान्मधुपर्ण्यां च भाषिता ।
रभसेन बहुज्ञेन **मधुरस्तु** पुमान् रसे ॥ १३३५ ॥
स्वादुसंज्ञे तद्वति तु त्रिषु स्याच्छोभने प्रिये ।
स्त्रियां तु मधुरामञ्जर्यामित्याह यादवः ॥ १३३६ ॥
दूर्वायां मधुयष्ट्यां च मिश्रेयाशतपुष्पयोः ।
मधुकुक्कुटिकामञ्जनातुलुङ्गान्तरे तथा ॥ १३३७ ॥
मेदायां चेति रभसः क्लीबं तु गरलेऽभ्यधात् ।
अना तु काञ्जिकेऽथ स्यात् त्रयोदश्यां तिथौ स्त्रियाम् ॥ १३३८
**महोग्रा** मेथवत् तु स्यादत्युग्रेऽथ नृशण्डयोः ।
**मलयः** शैलभेदे स्याद् देशेऽप्यवयवे गिरेः ॥ १३३९ ॥
आरामे चाप्यर्थ ज्ञेयं **मञ्जुलं** त्रिषु सुन्दरे ।
द्वयोस्तु पक्षिभेदे स्याज्जलरङ्कावपेऽथ ॥ १३४० ॥
+जलाञ्जले निकुञ्जे च नपुंसकमुदाहृतम् ।
**मध्यमस्तु** नृशण्डः स्याच्छरीरावयवान्तरे ॥ १३४१ ॥
अवलग्नाह्वये ना तु मध्यदेशधरे नृपे ।
सप्तानां च स्वराणां स्यात् षड्जादीनां कश्चित् स्वरे ॥ १३४२ ॥
त्रि तु मध्यभवे स्त्री तु मध्यगः मध्यमाङ्गुलौ ।
स्त्रियां च दृष्टरजसि रत्नमस्ताह शब्दवित् ॥ १३४३ ॥

१ 'थां' ग. पाठः

+ 'मञ्जुलं च जलासले' इति तु हेमचन्द्रः, 'जलाञ्जल स्वतो वारिनिर्गमे शैवलेऽपि च' इति मेदिनी ।

कर्णिकायां च तस्याश्च बह्वर्थत्वं निरूप्यताम् ।
**मर्कटस्तु** कपौ द्वे स्याल्लूतायां च स नपूस्त्रियोः ॥ १३४४
कवाटबन्धनार्थायाः सूचेर्विष्कम्भयन्त्रके ।
मर्कटं मर्कटी चेति स्त्रियां त्वेव हि मर्कटी ॥ १३४५ ॥
आत्मगुप्ताख्यवल्ल्यां च करञ्जाख्यस्य शाखिनः ।
भेदेष्वेकत्र भेदे च मुद्गभेदे तु पुंस्ययम् ॥ १३४६ ॥
वन्यसंज्ञे तुरुष्काख्यनिर्यासे चाथ **मन्थरम्** ।
मन्दे वक्रे पृथौ च त्रिः सूचके मन्दगामिनि ॥ १३४७ ॥
ना तु बाधे बले कोपे मन्थदण्डेऽप्यथो नपि ।
कुसुम्भ्यां मन्थरा तु स्त्री कैकेय्याश्चेटिकान्तरे ॥ १३४८ ॥
**मन्दिरं** तु पुरे गेहे क्लीबमब्धौ तु पुंस्ययम् ।
**मथितं** तु क्लीबलिङ्गं निर्जले गोरसे कृते ॥ १३४९ ॥
त्रिस्तु मन्थतिमथ्नातिकर्मभूतेषु वस्तुषु ।
**मन्दारस्तु** पुमान् देववृक्षभेदेऽर्कनाम्नि च ॥ १३५० ॥
गुल्मे स्यात् पारिभद्राख्यवृक्षतद्भेदयोरपि ।
तेषां तु प्रसवे क्लीबमरविन्देऽप्यथ द्वयोः ॥ १३५१ ॥
**मदारो** हस्तिनि त्रि स्यादलसेऽथ नृलिङ्गकः ।
एकाहक्रतुभेदे स्यान्**मरायो** [illegible] च ॥ १३५२ ॥
कुसूलेऽमरदत्तेन कथितस्तस्य [illegible] ।
मूलमस्माभिरर्थे नपू साम्नोः [illegible] ॥ १३[illegible]
अग्निं नरो दीधितिभिरित्यस्यामृचि [illegible]
**महार्घस्त्रि**र्महामूल्ये द्वे तु [illegible]
**मरालस्तु** द्वयोर्हंसे मिश्रवर्णे [illegible]
स चाल्पपीतरक्ते स्याद् [illegible] ॥ १३५५ ॥

१. 'क' क. पाठ.

**मन्त्रज्ञ**स्तु पुमांश्चारे त्रिस्तु मन्त्रविदि स्मृतः ।
†**मक्कण**स्तु पुमान् कालेऽप्यजातरदहस्तिनि ॥ १३५६ ॥
निःश्मश्रुपुरुषेऽप्याह रभसः शब्दवित्तमः ।
ह्रस्वाङ्गे च गजे द्वे तु शय्याकीटेऽथ नप्यदः ॥ १३५७ ॥
जङ्घात्राणार्थयन्त्रे स्याद् योधानां **मर्दनी** पुनः ।
योधानां पादरक्षार्थयन्त्रे स्त्री क्ली तु मर्दनम् ॥ १३५८ ॥
मृद्वात्यर्थे स्त्रियां तु स्यात् क्षुमाधान्ये **मसृण्य**थ ।
अकर्कशे (च ? त्रि)‡ मसृणं स्निग्धे च **मकर**स्तु ना ॥ १३५९
निधिभेदे च राशौ च दशमे स्याद् द्वयोः पुनः ।
झषसंज्ञे जलचरे **मलिनं** तु मलीमसे ॥ १३६० ॥
त्रि स्त्री पुनरुदक्यायां मलिना **मल्लद**स्तु ना ।
माषधान्ये भूम्नि चासौ स्थौराख्ये नीवृदन्तरे ॥ १३६१ ॥
भेद्यलिङ्गं तु विज्ञेयं मळस्य स्यात् प्रदातरि ।
**मशक**स्त्वृषिभेदे ना द्वयोस्तु क्षुद्रपक्षिणि ॥ १३६२ ॥
मलिम्लुचसमाख्ये च **मरुजा** स्त्री मृगान्तरे ।
यथोक्तं मरुजा तृचमृदुपाण्डररोमिका ॥ १३६३ ॥
रोमराजिमती मध्ये द्वादशाङ्गुलसम्मिता ।
इत्यस्या लक्षणं भेद्यलिङ्गं तु मरुसम्भवे ॥ १३६४ ॥
**मल्लिका** नृस्त्रियोर्दीपाधारपात्रे स्त्रिया पुनः ।
मल्लिका पुष्पवल्ल्यां स्याद् यस्या आख्यापि भूपदी ॥ १३६५
**मर्मर**स्तु पुमान् वस्त्रपर्णानां ध्वनिने तथा ।
मर्मरा भक्षभेदे स्त्री मोडीसंज्ञेऽथ **मस्तक**ः ॥ १३६६ ॥

१. 'ध्व' च. पाठः. २. 'ढी' क. ङ. च. पाठः.

† 'मत्कुणो निर्विषाणेभे निःश्मश्रुपुरुषेऽपि च । उद्दंशे नारिकेले च' इति तु मेदिनी ।
‡ 'मसृणोऽकर्कशे स्निग्धे त्रिषु' इति मेदिनी ।

अस्त्री शिरसि विद्वांसः पुनरन्ये प्रचक्षते ।
शिरसः पूर्वभागस्य मध्य इत्यथ विद्विषि ॥ १३६७ ॥

मल्लीको[1] ना नापि त्वेतदञ्जने सम्प्रचक्षते ।
मल्लूको[2] द्वे पक्षिमात्रे सरोजशकुनौ पुनः ॥ १३६८ ॥

शाकटायन आह[3] नं मण्डूकस्तु द्वयोरयम् ।
भेके[4]ऽपि पिकभेदे[5] च मण्डूकी तु स्त्रियामियम् ॥ १३६९ ॥

गजस्यापरपादस्य कृतस्य दशधा तथा ।
उपरिष्टात् समारभ्य तुर्यभागे तथैव च ॥ १३७० ॥

मण्डूकपर्ण्यामप्याह रभसः शब्दवित्तमः ।
लाङ्गलावयवस्यापि भेदेऽथो गजरक्षिभिः ॥ १३७१ ॥

कृते पुरस्य दुर्गस्य बहिर्भूमौ नृलिङ्गकः ।
यन्त्रभेदे **मयूखस्तु** नृस्त्रियोः किरणेऽथ ना ॥ १३७२ ॥

ज्वालादीप्त्यो रथस्याक्षे शङ्कौ चाथ द्वयोरयम् ।
**मयूरो** बर्हिणे ना तु स्यादपामार्गसंज्ञके ॥ १३७३ ॥

स्तम्बे च तुलसीभेदे चाल्पपत्रसुगन्धिके ।
तं मयूरशिखासंज्ञभेषजे रभसोऽपठीत ॥ १३७४ ॥

क्ली तु तुत्थाञ्जनेऽथो ना धान्ये मङ्गल्लसंज्ञके ।
केषाञ्चित् स्यान्मयूरोऽयं तथा चर्मासनान्तरे ॥ १३७५ ॥

व्रीहिकङ्काख्यधान्ये तु **मसूरी** स्त्री तथा भवेत् ।
मारिसंज्ञे रोगभेदे वेश्यायां रभसोऽपठीत ॥ १३७६ ॥

अथ ना **मसुरो** धान्यभेदे चर्मासनेऽपि च ।
रभसस्त्वाह वेश्यायां स्त्रियां व्रीह्यन्तरे[illegible]

**अथो नपुंसकं विद्यान्मधूलं** शब्दको[illegible]
सारघादिमधौ ना तु मधू[illegible]मेव ॥ १३७८ ॥

१. 'लि' च. पाठः २. [illegible] ग. पाठः. ३. 'ह स्म म' ग. पाठः. ४. 'च च' ग. पाठः. ५. 'के' क. च पाठः. ६. 'त्य' ग. ङ. पाठः. ७. 'स' ग. पाठः

**रसे** च मधुराभिख्ये मेघलिङ्गं तु तद्वति ।
**मठर**स्त्वृषिभेदे ना मेघवत् त्वलसे पुनः* ॥ १३७९ ॥
मठरं तु द्रवीभूते दध्न्यर्तीव नपुंसकम् ।
त्रि तु कण्ठगतप्राणे कृ[illegible] जात्यन्तरे द्वयोः ॥ १३८० ॥
ना त्वग्नौ **मरुतो** जन्तौ [illegible] मन्दाक्षं पुनर्नपि ।
लज्जायां मन्दहृष्टे तु त्रि[illegible]ऽपि च ॥ १३८१ ॥
**मत्स्याक्षी** तु स्त्रिया ब्राह्मी[illegible]न्तरे ।
मत्स्याक्षस्तु पुमाञ्छाकस्तम्बे प[illegible]ज्ञके ॥ १३८२ ॥
पुंस्त्रियोस्तु **मरीचिः** स्याद् गभस्तिमृगतृष्णयोः ।
अष्टके त्रसरेणूनां लिक्षाख्यपरिमाणके ॥ १३८३ ॥
समानामृषिभेदानामयमन्यतमः पुमान् ।
**मधुवाक्** तु द्वयोर्ज्ञेयः कोकिले मेघवत् पुनः ॥ १३८४ ॥
मधुरा यस्य वाक् तत्र **मत्स्यगाद्** तु द्वयोरयम् ।
मकराख्ये जलचरे मत्स्यानां त्वधिपे पुमान् ॥ १३८५ ॥
**मण्डली** तु द्वयोः सर्पजातिभेदेषु केषुचित् ।
षड्विंशतौ मण्डलवदर्थे तु बिल्वश्च स्त्रियाम् ॥ १३८६ ॥
आवलौ **मल्लिका**प्याढ्यजनानां मन्दिरान्तरे ।
समलामज्ञके पुष्पवल्लिभेदेऽप्यसौ स्मृता ॥ १३८७ ॥
भूयोऽपि रभसेनोक्ता चतुर्ष्वर्थेषु मल्लिका ।
ग्रैवेयके पुष्पमाल्ये पत्रिकाहस्तिमस्तयोः ॥ १३८८ ॥
आकारान्ताथ सर्वासु पुष्पवल्लीषु मल्लिका ।
ईकारान्ताथ न स्त्री स्यान्मल्लिके स्वटकाह्वये ॥ १३८९ ॥

१. 'जान्वग्नौ' क. च. पाठः. [illegible]रुतो ज' च., 'रुतो ज' ग. पाठः. ३. 'त्त' च. पाठः. ४. 'नामधि' ग. पाठः.

* 'तथा' इति स्यात् ।

वनदुर्गनिवासे स्याद् भेद्यलिङ्गं तु धारके ।
**मागधी** तु स्त्रियां यूथीपिप्पल्योः स्याद् द्वयोः पुनः ॥ १३९० ॥
मर्त्यजात्यन्तरे वैश्याज्जाते ब्राह्मणयोषिति ।
वैश्यात् क्षत्रियकन्यायां जाते च स्याच्च वन्दिनि ॥ १३९१ ॥
मगधानां तु ना राज्ञि जीरकेऽप्यथ **माधवः** ।
विष्णौ वैशाखमासे च वसन्ते चाजयो नरि ॥ १३९२ ॥
मध्वासवसमाख्ये तु मद्यभेदे नृशण्डयोः ।
स्त्रियां तु माधवी पुष्पवल्लिजात्यन्तरे भवेत् ॥ १३९३ ॥
अतिमुक्तकसंज्ञे स्यात् सुरायां च तथा विदुः ।
कोशातक्याः प्रभेदे च भवेद् दीर्घफलाह्वये ॥ १३९४ ॥
जयन्त्यामिति च प्रोक्तं केनचित् तन्निरूप्यताम् ।
रभसः शतपुष्प्यां च ब्रवीति मधुशर्कराम् ॥ १३९५ ॥
अर्थत्वेनास्य राज्ञस्तु मधोः पुत्रादिषु त्रिषु ।
**मार्ताण्डो** रभसेनोक्तः खगे दंष्ट्रिणि च द्वयोः ॥ १३९६ ॥
रवौ तु पुंसि मार्तण्डमार्ताण्डौ यादवोदितौ ।
**माकन्दस्तु** पुमानाम्रे स्त्री स्यादामलकीतरौ ॥ १३९७ ॥
**माणिक्यं** तु भवेद् रत्नवरे क्लीबं स्त्रियां पुनः ।
गृहगोधासमाख्ये स्यान्माणिक्या जन्तुभेदके ॥ १३९८ ॥
**मार्गरस्तु** द्वयोर्मर्त्यजातिभेदे यदुद्भवः ।
आयोगव्यां निषादात् स्यात् कैवर्तेऽप्यथ मद्यव्रत ॥ १३९[illegible]
मार्गस्य दातरि त्रिस्तु **मार्गणो** याचकेऽथ ना ।
बाणे च स्त्रीनपोर्याच्ञाद्वेषयोर्मार्गणाथ [illegible] ॥
**मार्जनः** स्नेहसंज्ञे स्याद् गुणे [illegible] पुनः ।
मार्जनं मार्जना चेति मार्ष्टौ [illegible]गारितम् ॥ १४०१ ॥

१. 'ब' क. ङ. च. पाठः.

**मारिष**स्तु पुमानार्ये नाट्योक्तिविषये तथा ।
जीवशाक इति ख्याते शाकभेदेऽपि सा पुनः ॥ १४०२ ॥
दक्षमातरि विज्ञेया स्त्रीलिङ्गा मारिषा बुधैः ।
**मार्जिता** तु रसालायां स्त्री तस्या लक्षणं विदुः ॥ १४०३ ॥
अपक्वतक्रं सव्योषचतुर्जातगुडार्द्रकम् ।
सजीरकं रसाला स्यादित्येवं त्रि तु शोधिते ॥ १४०४ ॥
**मार्जार**स्तु बिडाले द्वे पुमांस्त्विङ्गुदपादपे ।
अगस्त्यवृक्षे च स्त्री तु मार्जारी स्यान्मृगान्तरे ॥ १४०५ ॥
काद्रङ्गसंज्ञे तं चाहुर्मृगङ्गाश्चमराकृतिम् ।
कस्तूरिकामृगस्यापि स्यादण्डे द्वे तु हस्तिनि ॥ १४०६ ॥
**मातङ्गः** स्याच्च चण्डाले **मारुत**स्तु पुमानयम् ।
वायौ च भीमसेने च हनूमति च नप् पुनः ॥ १४०७ ॥
पुरां भिन्दुर्युवेत्यस्यामृचि गीते हि सामनि ।
त्रिमरुद्योगिनि स्यात् तु धुर्धूरे **मातुलः** पुमान् ॥ १४०८ ॥
मदनाख्यद्रुमे चाथ रभसः शब्दवित्तमः ।
मातुर्भ्रातरि च स्त्री तु भार्यायां तस्य मातुली ॥ १४०९ ॥
मातुलानी च भङ्गाख्यधान्ये स्यान्मातुलान्यसौ ।
द्वयोस्तु मालुधानाख्यसर्पजात्यन्तरे स्मृतः ॥ १४१० ॥
**माहेन्द्री** तु स्त्रियां ज्ञेया सप्तानामेकमातरि ।
मातॄणां कदलीजातिभेदे च पृथुदीर्घकम् ॥ १४११ ॥
तत्र यस्य फलं त्रिस्तु स्यान्महेन्द्रस्य योगिनि ।
महेन्द्रदेवते चाथ **माहूरः** पुंसि पर्वते ॥ १४१२ ॥
पूजके तु त्रिपु ज्ञेयो **माहिर**स्तु[1] नृलिङ्गकः ।
इन्द्रे क्लीबं तु शयने बाले च क्ली तु **मानसम्** ॥ १४१३ ॥

---

१. 'हीनस्तु' क. च., 'हिनस्तु' ड. पाठः.

चित्ते हैमवते चापि सरोभेदेऽपि यज्वनाम् ।
प्रसिद्धे स्तोत्रभेदेऽपि यज्ञगे मनसः पुनः ॥ १४१४ ॥

सम्बन्धिनि त्रिषु क्ली तु **मासिकं** पुंसि केचन ।
मासि श्राद्धे त्रिषु पुनर्मासं भूतभृतादिषु ॥ १४१५ ॥

**मानव**स्तु मनुष्ये द्वे मनुसम्बन्धिनि त्रिषु ।
**माणव**स्तु पुमान् हारभेदे षोडशयष्टिके ॥ १४१६ ॥

द्वे तु बाले कुपुरुषेऽप्यथ पुम्भूम्नि **मालवाः** ।
अवन्त्याख्ये जनपदे तन्निवासजने द्वयोः ॥ १४१७ ॥

सर्वैश्च वचनैर्योगी मर्त्यजात्यन्तरे तथा ।
पुरातने तु मधुनि **माधुकं** क्ली त्रिषु त्वदः ॥ १४१८ ॥

यत् स्यान्मधुकसम्बन्धि तस्मिन्नथ नृलिङ्गकः ।
**माधुरः** षोडशेऽरत्नौ मूलादारभ्य यस्य हि ॥ १४१९ ॥

अरत्नयः सप्तदश तस्य यूपस्य स त्रि तु ।
सम्बन्धे मधुरेणाथ मालाकारे हि **मालिकः** ॥ १४२० ॥

द्वे मालावति तु त्रि स्यान्**माक्षिकं** तु नपुंसकम् ।
सारघे मधुनि स्याच्च शैलधात्वन्तरे तथा ॥ १४२१ ॥

चक्रसंज्ञे मक्षिकायाः पुनः सम्बन्धिनि त्रिषु ।
**माषाशी** तु तुरङ्गे द्वे माषस्य त्वाशके त्रिषु ॥ १४२२ ॥

**मिहिर**स्तु पुमान् सूर्यवायुमेघेषु नब् जले ।
**मिथुनं** तु क्लीबलिङ्गं स्त्रीपुंसयुगले तथा ॥ १४२३

मधुसर्पिर्द्वये राशौ तृतीये स्याद् द्वयोर्गणे ।
युग्माख्ये तद्वति पुनस्त्रिषु स्यान्मिथुन [illegible] ॥ १४२४ ॥

१. 'ने पु' ङ. च. पाठः.

* 'जायापती तु मिथुने जम्पती दम्पती इति' (पृ. १७७. श्लो. ४८) इति तु वैज

दम्पत्योः पुंसि नपुंलिङ्गं पुनः स्याच्च घृताञ्जने ।
**मिश्रकं** यजमानस्य त्रि तु मिश्रयितर्यसौ ॥ १४२५ ॥
**मिथुनी** तु द्वयोः खञ्जरीटाख्ये पक्षिणि त्रि तु ।
भवेन्मिथुनवत्येव **मुसलस्तु** नृशण्डयोः ॥ १४२६ ॥
अवघातोपकरणदण्डे स्त्री तु मुसल्यसौ ।
गृहगोधासमाख्ये स्याज्जन्तौ कुम्तुम्बुरुण्यपि ॥ १४२७ ॥
तालमूलीसमाख्ये च स्तम्बेऽथ **मुचिरः** पुमान् ।
सूर्ये मेघे च धर्मे च त्रि तु दातरि ना पुनः ॥ १४२८ ॥
**मुहिरः** पूष्णि कन्दर्पे क्लीबं तु तमसि स्मृतम् ।
**मुखरस्तु** त्रिषु ज्ञेयो दुर्मुखे स्त्री तु पक्षिणि ॥ १४२९ ॥
मुखरा शारिकासंज्ञे **मुण्डितं**[1] त्वभिधेयवत् ।
उप्तकेशे स्त्रियां त्वेषा श्रमणीति हि विश्रुते ॥ १४३० ॥
भैषज्यशाकस्तम्बेऽथ **मुद्गरो** द्रुहिणे[2] नरि ।
मल्लिकायां च रभसः पुनर्वेण्वादिभेदने ॥ १४३१ ॥
क्लीबं तु मल्लिकाभेदे त्रिषु मुद्गस्य दातरि ।
**मुष्टिकस्तु** पुमान् स्वर्णकारे स्यात् स्त्री तु मुष्टिका ॥ १४३२ ॥
कर्मारस्योपकरणभेदे ना तु **मुसल्यसौ** ।
बलभद्रेऽश्वभेदे च यस्यैको [3]*घनिकः (?) ++ ॥ १४३३ ॥
त्रि स्यान्मुसलवत्यर्थे **मूषिकस्तु** द्वयोरयम् ।
आखुजातौ यदा तु स्यात् स्त्रियां वृत्तिस्तदा भवेत् ॥ १४३४ ॥
मूषिका निर्विषाणां च जातिभेदे जलौकसाम् ।
अनिष्टगन्धे विज्ञेयो मूषिकः मद्दशाकृतौ ॥ १४३५ ॥

१ 'तस्त्व' क. च. पाठः. २. 'घ' क. ङ. च. पाठः. ३. 'घ......सिकः । यत् स्या' ग., 'घसिकः..... त्रि' ङ. पाठः.

* 'मुसल्यन्यप्रभेकार्घ्रः' (पृ. ११२. श्लो. ९७) इत्यश्वभेदे वैजयन्ती ।

**क्लीबं** तु **मूर्छनं** मोहेऽभिव्याप्तौ च स्त्रियां पुनः ।
मूर्छना गीतिधर्मे स्यात् क्वचित् स्त्रीशण्डयोः पुनः ॥ १४३६ ॥
मूर्छना मूर्छयत्यर्थे पुन्नपुंसकयोः पुनः ।
**मूलको** बुस्तिकासंज्ञशाकस्तम्बे त्रिपु त्वयम् ॥ १४३७ ॥
मूलनक्षत्रसंयुक्तकालजातेऽथ पुंस्ययम् ।
वनस्पतौ स्यान्**मूलेरो** हर्षनन्दी त्वभाषत ॥ १४३८ ॥
शब्दार्थवेदिनामग्र्य आपणीयवनस्पतौ ।
क्ली तु पण्ये **मृणाली** तु विसे लिङ्गत्रयी भवेत् ॥ १४३९ ॥
शाकटायन आह स्म पद्माङ्कुर इतीदृशम् ।
पद्मकोरक इत्याह हर्षनन्द्यथ सज्जनः ॥ १४४० ॥
दयितेऽपि मृणालं त्रि**र्मृदङ्ग**स्तु पुमानयम् ।
महाकोशातकी स्वल्पफलकोशातकीति च ॥ १४४१ ॥
ख्यातयोर्लतयोर्वाद्यभेदे च मुरजाह्वये ।
प्रसवे तूक्तलतयोः क्लीबं स्यान्**मृदुलं** पुनः ॥ १४४२ ॥
भेद्यवन्मृदुनि क्ली तु प्रसिद्धे[1] गन्धवस्तुनि ।
अगुर्विति **मृगाक्षी** तु स्त्रीलिङ्गा स्याल्लतान्तरे ॥ १४४३ ॥
इन्द्रवारुणिकासंज्ञे मृगनेत्रेषु तु त्रिपु ।
अथ प्राहु**र्मृदुत्वक्** स्याद् भूर्जाह्वयमहीरुहे ॥ १४४४ ॥
मुञ्जे च त्रि तु मृदुलत्वचि **मेचक**वाक् तु ना ।
कृष्णश्यामलयोर्ज्ञेयो गुणमात्रे त्रिपु त्वयम् ॥ १४४[illegible] ॥
कार्ष्ण्ययुक्ते श्यामलत्वयुक्ते चाथ नृशण्डयोः ।
मयूरचन्द्रके चापि स्तनस्यापि च [illegible]
**मेनाद**स्तु द्वयोश्छागे स्यान्मा[illegible]
**मेहघ्नी** तु हरिद्रायां स्त्री [illegible] ॥ १४४७ ॥

1 'द्वे' ग. पाठः.

**अमनुष्ये मेहनं** तु क्लीबं मेढ्रे च शेफसि ।
**मेकलास्तु** नृभूम्नि स्युर्विन्ध्यपर्यन्तसम्भवे ॥ १४४८ ॥
नीवृद्भेदे शीतगुणे पुनः पुंस्येव मेकलः ।
त्रि तु तद्वत्यथ क्लीबं **म्लेच्छास्यं** ताम्रसंज्ञके ॥ १४४९ ॥
लोहे मुखे च म्लेच्छस्य स्यात् तस्य त्वसने स्त्रियाम् ।
म्लेच्छास्या **मेघजं** तु क्ली जले त्रिर्मेघसम्भवे ॥ १४५० ॥
**मेधावी** तु शुके द्वे स्यान्मेधावति तु भेद्यवत् ।
**मैथिलस्तु** प्रदोषे ना जनकाख्ये च राजनि ॥ १४५१ ॥
सीतायां तु स्त्रियां ज्ञेया मैथिली शब्दवेदिभिः ।
**मोदकस्त्व**स्त्रियां पूपभेदे स्याद् भेद्यवत् पुनः ॥ १४५२ ॥
स्यान्मोदयितृमोदित्रोरथ स्यात् पुंसि **मोचकः** ।
शिग्रुवृक्षे मोक्तरि तु त्रिषु क्लीबं तु **मोर(ग?ट)म्** ॥ १४५३ ॥
इक्षुमूले प्रसूत्यादिसप्ताहादूर्ध्वजे गवाम् ।
क्षीरे मोरकसंज्ञेऽन्ये पुनर्गो(चर ? रस)‡ऊचिरे ॥ १४५४ ॥
मोरटा तु स्त्रियां मूर्वासंज्ञके भेषजान्तरे ।
सूर्यावर्त्ते पर्णिकाख्यस्तम्बे च क्ली तु **मोरकम्** ॥ १४५५ ॥
प्रसवादिकसप्ताहादूर्ध्वदुग्धे पयस्यदः ।
त्रि तु[3] मोरितरि ज्ञेयः स च संवेष्टकः स्मृतः ॥ १४५६ ॥
**मोहनं** क्ली रते मोहे मोहनी तु स्त्रियामियम् ।
नवानां विष्णुशक्तीनामेकशक्तावना पुनः ॥ १४५७ ॥
मोहना मोहयत्यर्थे **मौष्टिकस्तु** पुमानयम् ।
स्वर्णकारे भेद्यवत् तु स्मृतो मुष्टिप्रहारिणि ॥ १४५८ ॥

१. 'पर्वते' ग. पाठः. २. 'स्तु' क. च. पाठः. ३. 'हि' च. पाठः.

‡ 'दूर्वायां स्त्रीक्षुमूले क्ली गोरसेऽपि च मोरटम्' (पृ. २६२. श्लो. ६५) इति, 'आसप्ताहात् तु पीयूषं ततो मोरटमोरकौ' (पृ. १३५. श्लो. १४६) इति च वैजयन्ती ।

**यशोदा** त्वग्निचित्याया इष्टकासु च कासुचित् ।
नन्दगोपस्य भार्यायां त्रिस्तु कीर्त्तेः प्रदातरि ॥ १४५९ ॥
**यवनस्तु** द्वयोर्मर्त्यजातिभेदे यदुद्भवः ।
शूद्रायां क्षत्रियादन्ये पुनराहुर्मनीषिणः ॥ १४६० ॥
वैश्यायां क्षत्रियाज्जात इति पुम्भूम्नि तु स्मृतः ।
नीवृद्भेदे हि यवना हुरुष्करसमाख्यके ॥ १४६१ ॥
तद्देशजातमर्त्ये तु द्वयोः सर्ववचस्यपि ।
क्लीबं तु मिश्रणेऽथ स्याद् **यजत्रं** क्लीबलिङ्गकम् ॥ १४६२ ॥
अग्निहोत्रे च यज्ञोपकरणे चाथ भेद्यवत् ।
यजनीयेऽथ नर्बुलिङ्गं **यमकं** कवयो विदुः ॥ १४६३ ॥
भिन्नार्थवर्णसङ्घातावृत्तिरूपे व्यवस्थिते ।
काव्यालङ्कारभेदे स्यात् तैलसर्पिर्द्वयेऽपि च ॥ १४६४ ॥
रभसस्तु वदत्येतत् संयमे यमलेऽपि च ।
अथो यमयितर्येतद् भेद्यवत् स्याद् द्वयोः पुनः ॥ १४६५ ॥
**यज्ञार्हः** कृष्णसाराख्यमृगे त्रिर्यागयोग्यके ।
**यज्ञियस्तु** पुमान् मुञ्जे यज्ञकर्मार्हके त्रिषु ॥ १४६६ ॥
**यविष्ठः** सवनाहुत्यर्थेऽग्नौ ना भेद्यवत् पुनः ।
भवेद् युवतमेऽथ स्याद् **याजकः** पुंसि ऋत्विजि ॥ १४६७ ॥
स्याद् यष्टृयाजयित्रोस्त्रिरथ स्यात् पुंसि **याज्ञिकः** ।
कुशे च याजके चापि रभसः प्रोक्तवानमुम् ॥ १४६८ ॥
यज्ञविद्यामधीयाने विदत्यप्यथ भेद्यवत् ।
यज्ञेन जयतीत्यादौ **याजन्यस्तु** पुमानयम् ॥ १ - ६ ·
यज्ञे द्वे॰तु क्षत्रियेऽथ **यापना** नपुंस्त्रियामवेन ।
प्रस्थापने निरसने वर्तने रभसः पुनः ॥ १४७० ॥

१. 'स्क' क. ङ. च. पाठः. २. 'शलं या' ग. पाठः.

कालक्षेपेऽप्यभाषिष्ट **शब्दज्ञो** **यामुनं** पुनः ।
क्लीबमञ्जनभेदे स्यात् स्रोतोञ्जनमिति श्रुते ॥ १४७१ ॥

यमुनायाः पुनस्त्रि स्यात् सम्बन्धिन्यथ **यामकौ** ।
स्तः पुनर्वसुनक्षत्रे त्रि तु यन्तरि ना पुनः ॥ १४७२ ॥

**यावको** यवभेदे स्यात् कुल्माषाख्ये परे पुनः ।
अलक्तकेऽपि त्रिस्तु स्याद् यवितर्यथ **यावनः** ॥ १४७३ ॥

ना तुरुष्काख्यनिर्यासे स्त्रीनपोस्तु हि यावना ।
अर्थे यावयतेर्ना तु **युञ्जानः** सारथौ त्रि तु ॥ १४७४ ॥

योक्तरि ब्राह्मणे तु द्वे **युतकं** तु नपुंसकम् ।
यौतके युगले चापि संश्रये वसनाञ्चले ॥ १४७५ ॥

शूर्पाग्रे योषितो वस्त्रभेदे युक्ते तु मेद्यवत् ।
युग्मावयवयोश्चाथ **योजनं** परमात्मनि ॥ १४७६ ॥

क्रयध्वमाने चतुष्क्रोशे मगधादिषु भूमिषु ।
अष्टक्रोशं तु देशेषु कोसलादिषु मन्वते ॥ १४७७ ॥

तथा युक्तिक्रियायां च लतापूगे तु पुम्यथ ।
पित्रादेः कन्यययाप्तार्थे लेख्ये च नपि **यौतकम्** ॥ १४७८ ॥

त्रिस्त्वात्मीयेऽथ **रसनं** क्ली कषायद्रवान्नयोः ।
स्नेहे विषे फले चापि निर्यासे हेमरूप्ययोः ॥ १४७९ ॥

आस्वादने तु जिह्वायामपि स्याद् रसना न ना ।
शब्दने च **रसज्ञा** तु जिह्वायां स्त्री त्रिषु त्वसौ ॥ १४८० ॥

रसस्य ज्ञातरि स्यात् तु (नै ? वै)क्रन्त* इति विश्रुते ।
अयोभेदे पुमान् सारे त्वयसो **रसकः** पुमान् ॥ १४८१ ॥

१. 'क' ग. पाठः. २. 'क्त' ग. पाठः.

* 'वैक्रन्तः स्याद् रसवरो रसज्ञो व्योमधारणः' (पृ. ४३. श्लो. ३५) इति वैजयन्ती ।

मांसस्य च स्यान्निष्क्वाथे भेद्यलिङ्गं तु कर्तरि ।
धातो रसयतेः स्यात् तु रसज्ञे रसिकस्त्रिषु ॥ १४८२ ॥

ना तु मद्यविशेषे. स्यादपक्केक्षुरसैः कृते ।
रसितं मेघनिर्घोषे रुते च स्यान्नपुंसकम् ॥ १४८३ ॥

त्रिषु त्वास्वादिते चैव स्वर्णादिखचितेऽपि च ।
वस्त्रनिर्णेजके तु द्वे शुके च रजकस्त्रि तु ॥ १४८४ ॥

मृगाणां स्याद् रमयितर्यथ क्लीं रजतं विदुः ।
पुंस्यप्येके विदू रूप्यहारयोः शोणिते ह्रदे ॥ १४८५ ॥

त्रि तु श्वेतेऽथ रजनं रागद्रव्ये नपुंसकम् ।
रजनी तु हरिद्रायां स्त्री नील्यां चौषधौ निशि ॥ १४८६ ॥

वल्लिभेदे च जतुकृत्संज्ञे क्लीबं तु रञ्जनम् ।
स्याद् रक्तचन्दने स्त्री तु नीलीति प्रथितौषधौ ॥ १४८७ ॥

मनःशिलायां च ज्ञेया हरिद्रायां च रञ्जनी ।
स्यात् तु रञ्जयतेरर्थे रञ्जना स्त्रीनपुंसकम् ॥ १४८८ ॥

रसालस्तु पुमानिक्षौ चूते च वरुणद्रुमे ।
सम्मिश्ररसभेदे च कट्वतिक्तकषायके ॥ १४८९ ॥

त्रि तु स्यात् तद्वति स्त्री तु रसाला पानकान्तरे ।
अपक्कतक्रं सव्योषचतुर्जातगुडार्द्रकम् ॥ १४९० ॥

सजीरकं रसाला स्यादिति तस्याश्च लक्षणम् ।
जिह्वायामपि दूर्वायां रभसः प्रोक्तवानिमाम् ॥ १४९१ ॥

रल्लकस्तु पुमाञ्ज्ञेयः कम्बले स्याद् द्वयोः पुनः ।
मृगभेदे रसोनस्तु पुमाँल्लशुनभेषजे ॥ १४९२ ॥

रसहीने पुनस्त्रि स्याद् रक्ताक्षस्तु द्वयोरयम् ।
राक्षसे महिषे चापि रभसस्त्वाह शब्दवित् ॥ १४९३ ॥

१. 'ष्पाके भे' क. पाठः.  २. 'षं' ग. च. पाठः

पारावते चकोरे च बहुव्रीहौ तु भेद्यवत् ।
**रक्ताङ्ग**स्तु पुमान् भौमे विद्रुमे तु नपुंसकम् ॥ १४९४ ॥

[1]काम्बिल्यजीवन्त्योस्त्वाह स्त्रीलिङ्गं रभसः कविः ।
अर्थलिङ्गसमासांश्च तर्कयेदिह पूर्ववत् ॥ १४९५ ॥

**रहस्या** तु नदीभेदे स्त्रियां त्रिस्तु रहोभवे ।
**रवण**स्तु पुमाञ्छब्दे पटोलाख्यलतान्तरे ॥ १४९६ ॥

वल्लभे रभसः प्राह तस्य मूलं विचिन्त्यताम् ।
कांस्यसंज्ञकलोहे तु क्ली रुते रभसः पुनः ॥ १४९७ ॥

पटोलमूलेऽप्यपठीत् त्रिस्तु शब्दनशीलके ।
उष्ट्रगर्दभयोस्तु द्वे भ्रमरे चाप्यधीयते ॥ १४९८ ॥

**र**[2]**पेठ**स्तु द्वयोर्ज्ञेयो मण्डू[3]के विदुषि त्रि तु ।
**रभस**स्तु पुमान् वे[4]गे हर्षसंरम्भयोरपि ॥ १४९९ ॥

त्रिस्तु स्यान्महति द्वे तु म्लेच्छे **रमठ** इत्ययम् ।
त्रिस्तु क्रीडनशीले स्याद् **रमणं** तु नपुंसकम् ॥ १५०० ॥

क्रीडायां पुंसि तु धवे स्त्रीभेदे तु स्त्रियामियम् ।
रमणी रमयत्यर्थे पुनः स्याद् रमणा न ना ॥ १५०१ ॥

**रथाङ्गं** रथचक्रे क्ली स्यन्दनावयवेऽपि च ।
चक्रवाकाह्वये चापि पक्षिभेदे द्वयोरयम् ॥ १५०२ ॥

अथ विद्याद् **रक्तिका** तु कृष्णलाख्यलतान्तरे ।
स्त्रीलिङ्गा ना तु बन्धूके ब्रूते म्लाने तु कश्चन ॥ १५०३ ॥

**रक्षोघ्न**स्तु पुमाञ्छ्वेतसर्षपे त्रि तु हन्तरि ।
अमनुष्ये रक्षसः स्याद् **रसवत्** त्वभिधेयवत् ॥ १५०४ ॥

रसयुक्ते रसवती पुनः स्त्री स्यान्महानसे ।
पञ्चरात्रे तु नब्लिङ्गं **रात्रकं** रभसोऽपठीत् ॥ १५०५ ॥

---

१. 'कम्पिल्लजी' क. ङ. च. पाठः. २. 'पा' क. च. पाठः. ३. 'ञ्जू' क. ङ. च. पाठः.
४. 'गेहे ह' क. ङ. च. पाठः. ५. 'पि' क. पाठः.

**स** एवाह नृलिङ्गं तं वेश्यावेश्माब्दवासिनि ।
**राघवस्तु** महामत्स्यविशेषे द्वे तथा रघोः ॥ १५०६ ॥
वंश्ये द्वे रघुसम्बन्धिमात्रे तु त्रिषु भाषितः ।
**राजीवं** त्वम्बुजे क्लीबं त्रिस्तु तद्वर्णवस्तुनि ॥ १५०७ ॥
अजयस्त्वाह राजोपजीविनि द्वे तु मन्यताम् ।
मत्स्यभेदे पक्षिभेदे मृगभेदे स चेदृशः ॥ १५०८ ॥
हरिणाख्यो राजियुतो **राजार्हं** तु नपुंसकम् ।
कस्तूर्यण्डे भेद्यवत् तु राजयोग्ये स्त्रियां पुनः ॥ १५०९ ॥
**राजिका** क्षवसंज्ञाके विज्ञेया सर्षपान्तरे ।
केदारेऽपि च पङ्क्तौ च राजकं तु नपुंसकम् ॥ १५१० ॥
राजवृन्दे राजितरि पुनस्त्रिरथ **राक्षसः** ।
द्वे यातुधाने स्त्री तु स्याद् राक्षसी गन्धवस्तुनि ॥ १५११ ॥
चण्डासंज्ञे त्रिषु पुना रक्षःसम्बन्धिनि स्मृतः ।
शिशिरर्तुनिशायां तु **राजसी** स्त्री त्रिषु त्वयम् ॥ १५१२ ॥
रजःसम्बन्धिनि क्ली तु **रात्रिजं** तारके त्रि तु ।
रात्रिजाते **रामकस्तु** मर्त्यजात्यन्तरे द्वयोः ॥ १५१३ ॥
त्रि तु रन्तरि ना तु स्याद् **रागवान्** पूगपादपे ।
त्रि तु रागयुते ना तु **रुचको** भूषणान्तरे ॥ १५१४ ॥
निष्के तु रभसः प्राह मातुलुङ्गाख्यभूरुहे ।
फले तु तस्य विज्ञेयं नब्लिङ्गं **रुचिरः** पुनः ॥ १५१५ ॥
सुन्दरे भेद्यवच्छन्दोवृत्तभेदे तु सा स्त्रियाम् ।
रुचिरातिजगत्यां स्यात् तद्वृत्तमथ पुंस्ययम् ॥ १५१६ ॥
**रुधिरोऽङ्गारके** क्ली तु शोणिते कुङ्कुमेऽपि च ।
**रुचिष्यं** तु स्वादमाने त्रिः खद्योते पुनर्द्वयोः ॥ १५१७ ॥

१. 'रं' च. पाठः. २. 'स्व' ग. पाठः.

**रुवथो** ना ध्वनौ द्वे तु कुक्कुटे शाकटायनः ।
पुनरब्रूत शकुनौ **रेवटं** तु नपुंसकम् ॥ १९१८ ॥

दक्षिणावर्तशङ्खे च रेणुवातूलयोः पुमान् ।
विषवैद्ये पुनर्द्वे स्याद् **रेचनं** तु नपुंसकम् ॥ १९१९ ॥

रिक्तौ रेचयतेस्त्वर्थे रेचना न पुमानथ ।
रेचनी स्त्री त्रिवृत्संज्ञलतायां रभसः पुनः ॥ १९२० ॥

दन्तिकासंज्ञके गुल्मे कम्पिल्ले[1]ऽप्यथ **रेचितम्** ।
क्लीबं वियोजने चापि तथा संपर्चनेऽपि च ॥ १९२१ ॥

तथा रेचयतेरर्थे कृतायामेकया भ्रुवा ।
भ्रूकुटौ तुरगाणां च गतिभेदेषु पञ्चसु ॥ १९२२ ॥

धारासंज्ञेषु कस्मिंश्चिद् गतिभेदेऽस्य लक्षणम् ।
आवक्रद्रुतगत्यात्मेत्यथ तद्वति भेद्यवत् ॥ १९२३ ॥

कर्मभूते रेचयतेः सम्पृक्ते च वियोजिते ।
**रैवत**स्तु पुमान् वारिवाहभूधरयोः स्मृतः ॥ १९२४ ॥

आरग्वधे शैलभेदे **शङ्करे** रभसोऽपठीत् ।
रेवतीकालजाते च तथा मेढ्रवाति स्मृतः ॥ १९२५ ॥

नपुंसकपदार्थे तु शण्डलिङ्गः स्त्रियां पुनः ।
जातार्थे रेवतीत्येव लुप्यते ह्यत्र[2] तद्धितः ॥ १९२६ ॥
सम्बन्धिनि तु रेवत्या भेद्यलिङ्गं हि रैवतम् ।
**रोचना** तु स्त्रियां रक्तकल्हारेऽपि वरास्त्रियाम् ॥ १९२७

ईकारान्ता तु संज्ञेया रोचनी त्रिवृदाह्वये ।
लताभेदे परेऽन्ये तु कृष्णात्रिवृति मन्वते ॥ १९२८ ॥

[2] तु' क. ङ. च. पाठः

मनःशिलायां काम्बिल्यसंज्ञवृक्षे च ना पुनः ।
रोचनः कूटशल्मल्यां§ रोचनं तु नपुंसकम् ॥ १५२९ ॥
रोचत्यर्थे रोचयतेः पुनरर्थे न ना मता ।
रोचना रोहितस्तु स्याद् वृषभे रक्तवर्णके ॥ १५३० ॥
रक्ते च वर्णे त्रिस्तु स्यात् तद्वदर्थे यदा तदा ।
तत्रापि स्यात् स्त्रियां वृत्ती रोहिता रोहिणीति च ॥ १५३१ ॥
द्वयोस्तु मत्स्यभेदे स्यान्मृगभेदे च यो मृगः ।
स्याच्छ्वेतराजिमांस्तत्र शाश्वतस्तु ब्रवीत्यमुम् ॥ १५३२ ॥
ऋश्यसंज्ञमृगे स्त्री तु रोहिणी सुरभौ स्मृता ।
पण्डितै रक्तवर्णायां रोहितं तु नपुंसकम् ॥ १५३३ ॥
स्याद्दजौ शक्रचापे च तृणे च क्ली तु रोदनम् ।
रुदितेऽश्रुणि च स्त्री तु दुःस्पर्शे रोदनी स्मृता ॥ १५३४ ॥
रोहन्तस्तु पुमान् वृक्षे रोहन्ती तु स्त्रियामियम् ।
लतायां भेद्यवत् तु स्याद् रोहतादिति कर्तरि ॥ १५३५ ॥
रोचकस्तु पुमान् हस्तिकर्ण इत्यतिविश्रुते ।
कम्बलस्य प्रभेदे स्यात् त्रि तु रोचितरि स्मृतः ॥ १५३६ ॥
रोषाणस्तु पुमान् स्वर्णकषणग्राणि पारदे ।
रोषणे भेद्यवत् प्रोक्तो रोषशीलो हि रोषणः ॥ १५३७ ॥
ऊषणे* रभसः प्राह तस्य मूलं विचिन्त्यताम् ।
रोमशस्त्वृषिभेदे ना निम्बवृक्षेऽप्यथ द्वयोः ॥ १५३८ ॥
मेषे स्याल्लोमशे तु त्रि स्त्रियां तु रभसोदिता ।
काकजङ्घासहामेदामांसीषु पुनरप्ययम् ॥ १५३९ ॥

१. 'ष' ग. पाठः.

§ 'अथ कूटशाल्मलौ' । रोचनः (पृ. ५२ श्लो. ९१) इति तु वैजयन्ती ।
रोषणे हेमघर्षे पारद ऊषरे' इति तु हेमचन्द्रः ।

कार्पासे शूकशिम्ब्यां च **रोपणस्तु** शरे पुमान् ।
रोहणासाधने तु त्रिरथो स्याद् रोपणा न ना ॥ १५४० ॥

रोपणायां **रोहिषस्तु** मृगभेदे द्वयोरयम् ।
विज्ञेयो गर्दभाभासे मत्स्यभेदे च नप् पुनः ॥ १५४१ ॥

कत्तृणाकाशयोः स्त्री तु वात्यायां रोहिषी स्मृता ।
**रोहिणं** त्वष्टसङ्ख्यानां लेख्यानामेकभेदके ॥ १५४२ ॥

क्ली रोहिण्यृक्षजाते तु पुंसि मेढ्वति स्मृतः ।
क्लीबं तु शण्डे स्त्र्यर्थे तु रोहिण्येव न तद्धितः ॥ १५४३ ॥

**रौहिणस्तु** पुमान् वारिवाहभूधरयोः स्मृतः ।
भेद्यलिङ्गं तु रोहिण्याः सम्बन्धिन्यथ **रौरवः** ॥ १५४४ ॥

पुमान् नरकभेदे स्यात् क्ली तु सामान्तरे त्रि तु ।
रुरुसम्बन्धिनि तथा रभसस्तु भयङ्करे ॥ १५४५ ॥

**ललामस्त्वस्त्रियां** ज्ञेयः प्रभावे पुरुषे नृपे ।
ध्वजे चिह्ने च पुच्छे च पशुशृङ्गे च भूषणे ॥ १५४६ ॥

छत्रे धामनि पुण्ड्रे च भेद्यलिङ्गं तु लिङ्गिनि ।
श्रेष्ठे च द्वे तु घोटेऽथ नकारान्तं **ललाम** वै ॥ १५४७ ॥

एष्वेवार्थेषु विज्ञेयं **ललनं** तु नपुंसकम् ।
विलासे ललना तु स्त्री कामिन्यां रभसः पुनः ॥ १५४८ ॥

जिह्वायां नाडिभेदे च **लवणस्तु** पुमानयम् ।
दैत्यभेदे पटुरसे त्रि तु तद्वति वस्तुनि ॥ १५४९ ॥

लवणद्रव्यसंसृष्टेऽप्यथ क्ली सैन्धवादिषु ।
लताभेदे तु लवणी स्त्रियां स्यादथ **लक्षणम्** ॥ १५५० ॥

जानीयात् कार्षिके चिह्ने नाम्नि मुद्राङ्कसम्पदोः ।
क्लीबं स्याल्लक्षणा तु स्त्री भक्त्यां स्यादपुमान् पुनः ॥ १५५१

दर्शने च विजानीयादङ्कने चाथ **लक्ष्मणः** ।
रामानुजे पुमान् द्वे तु सारसाभिख्यपक्षिणि ॥ १५५२ ॥

अन्ये तु सारसस्यैनां प्रियायां लक्ष्मणां विदुः ।
स्त्रियां लतान्तरे पुत्रजननीनाम्नि लक्ष्मणा ॥ १५५३ ॥
ज्योतिष्मतीसंज्ञके तु स्थावरे रभसोऽपठीत् ।
त्रि तु लक्ष्मवति ज्ञेयं लडहस्तु पुमानयम् ॥ १५५४ ॥
विलासे भेद्यलिङ्गं तु सुन्दरे शब्दवित् पुनः ।
व्याचष्टे हर्षनन्दीमं विलासवति नप् पुनः ॥ १५५५ ॥
ललन्तिकासमाख्ये स्याद् भूषण लम्बनं तथा ।
स्याल्लम्बनक्रियायां च शकुने तु द्वयोरयम् ॥ १५५६ ॥
ललितं हारभेदे क्ली लसितेऽथ त्रिरीप्सिते ।
लङ्गनं तु गतौ क्लीबं लङ्गनी तु स्त्रियामियम् ॥ १५५७ ॥
वस्त्रलम्बनदण्डे स्यात् तिरश्चीने गृहादिषु ।
लङ्घनं तृप्तवासे स्यान्न नातिक्रमणेऽपि च ॥ १५५८ ॥
रङ्गोपजीविनि पुनर्लङ्घको द्वे त्रिषु त्वयम् ।
स्याल्लङ्घितरि लज्जालुः पुनर्लज्जनशीलके ॥ १५५९ ॥
त्रिषु स्त्री तु नमस्कारीसंज्ञक्षुद्रलतान्तरे ।
अनूपजे जलोद्भूतवल्लिभेदे च यस्य वै ॥ १५६० ॥
शमीफलेति संज्ञा स्याल्लक्ष्मीवांस्तु नृलिङ्गकः ।
कतकाख्यद्रुमे त्रिस्तु श्रीमति क्ली तु लाङ्गलम् ॥ १५६१ ॥
गृहदारुविशेषे च पुष्पभेदे हलेऽपि च ।
अथ स्याल्लाङ्गली तोयपिप्पलीसंज्ञभेषजे ॥ १५६२ ॥
स्त्रियामग्निशिखासंज्ञलतायां च पुमान् पुनः ।
शालिप्रभेदेऽथ क्लीबं लाङ्गूलं मेढ्रपुच्छयोः ॥ १५६३ ॥
लाङ्गूली तु स्त्रियां पृश्निपर्ण्याख्यस्थावरान्तरे ।
लालसा तु न नौत्सुक्ये प्रार्थनायां च दौहृदे ॥ १५६४ ॥

१. 'श्वा' च. पाठः. २. 'दोहले' ग., 'दोहने' क. च. पाठः.

अतिमात्राभिलाषे च **लावण**स्तु पुमानयम् ।
लवणाब्धौ त्रि लवणसम्बन्धिन्यथ **लासिका** ॥ १९६५ ॥
स्त्री नर्तक्यां लासकस्तु त्रिषु स्याल्लासितर्यथ ।
बालानुकृतिशब्दे ना **लालकः** स्त्री तु लालिका ॥ १९६६ ॥
नासारज्जौ तुरङ्गाणां स्यात् त्रिस्तु ललितर्यथ ।
**लालनो** ना सर्जरसे लालना त्वपुमानियम् ॥ १९६७ ॥
क्रियायां स्याल्लालयतेर्**लाञ्छनं** तु नपुंसकम् ।
अङ्कने चैव चिह्ने च संज्ञायां रभसोऽपठीत् ॥ १९६८ ॥
लाञ्छनी तु स्त्रियामेषा मुद्रायां **लाङ्गली** तु ना ।
नालिकेरद्रुमे चापि बलभद्रेऽप्यथ त्रिषु ॥ १९६९ ॥
विद्याल्लाङ्गलवत्यर्थे **लुशभं** तु वने नपि ।
ना तु मत्तगजे स्त्री तु वाद्यभेदे हि **लुम्बिका** ॥ १९७० ॥
भक्ष्यभेदेऽप्युलुम्बाख्ये त्रि तु लुम्बितरि स्मृतः ।
लुम्बनं त्वर्दनं ज्ञेयं **लेखनी** तु स्त्रियामियम् ॥ १९७१ ॥
स्याच्चित्रतूलिकायां क्ली पुनर्लेखनमित्यदः ।
क्रियायां लिखतेस्त्रिस्तु साधने लेखकर्मणः ॥ १९७२ ॥
**लेहन**स्तु शुनि द्वे स्याच्चौर्यग्रासिनि तु त्रिषु ।
सौवर्चलद्रवे त्वस्त्री (लेहितो ? लोहिते)* जारणाह्वये ॥ १५७३ ॥
त्रिस्तु लेहयतेः कर्मभूते स्याल्लेढिकर्तरि ।
**लोभनं** तु सुवर्णे क्ली लोभे लोभयतेः पुनः ॥ १५७४ ॥
अर्थे स्त्रीशण्डयोर्विद्याल्लोमन लोभनेति च ।
**लोचनं** त्वक्षणि क्लीबं पश्यत्यर्थे तु सा न ना ॥ १५७५ ॥

१. 'भशं तु' क. ङ. च. पाठः. २. 'क्ष्य' ग. पाठः.

* 'सौवर्चलं द्रवस्तु स्याज्जारणं लोहितोऽस्त्रियाम्' (पृ. १३३. श्लो. १२६) इति वैजयन्ती ।

लोचनं लोचना चेति स्त्रियामेव तु लोचना।
विचारोक्ताविदं प्रोक्तं वैजयन्त्यां मनीषिणा॥ १९७६॥

**लोहलस्तु** त्रिरव्यक्तभाषिणि स्यात् पुमान् पुनः।
शृङ्खला(वी?धा)†र्ये इत्याह रभसः शब्दवित्तमः॥ १९७७॥

**लोटना** तु स्त्रियां सानुसारवाचि नपि त्वदः।
विलोटने **लोहितं तु** रुधिरे क्ली द्वयोः पुनः॥ १९७८॥

आवतारिकसंज्ञे स्यान्मत्स्यभेदे पुमान् पुनः।
रक्तशालौ रक्तवर्णेऽप्यथ स्यात् तद्वति त्रिषु॥ १९७९॥

तत्रापि स्त्र्यर्थवृत्तित्वविवक्षास्ति यदा तदा।
लोहिनी लोहिता चेति द्वैरूप्यं **लोचकस्तु** ना॥ १९८०॥

रक्तांशुके मांसपिण्डे नीलिन्यां चर्मणि भ्रुवि।
अजयस्तु पठत्येनं नीलीरक्तांशुके त्रि तु॥ १९८१॥

दुष्टबुद्धावथ प्राह निर्बुद्धावजयस्तथा।
स्याल्लोचितर्यथ क्लीबं लोहे स्यात् कांस्यसंज्ञके॥ १९८२॥

**लोहजं** भेद्यवत् तु स्याल्लोहसम्भूतवस्तुनि।
**लोमशा** तु स्त्रियां मांस्यां लोमशस्तु त्रि रोमशे॥ १९८३॥

**वर्णकोऽस्त्री** प्रकारे स्याच्चन्दनेऽङ्गविलेपने।
प्रकारे तु स्त्रियां चाह वर्णिकां शाकटायनः॥ १९८४॥

त्रिस्तु वर्णयितर्येष **वलजा** तु स्त्रियामियम्।
अपूतधान्यराशौ स्याद् रूपवत्यां च योषिति॥ १९

अना तु पुरगेहादेर्द्वारे क्षेत्रेऽप्यथापरः।
सस्येऽप्याहाथ रभसः क्लीबं युद्धेऽप्यभाषत॥ १९८६॥

१. 'षु' क. च. पाठः. २. 'शं त्रिमन् रो' क. च. पाठः.

† 'लोहलोऽस्फुटवादिनि। शृङ्खलाभार्ये' इति हेमचन्द्रः

अथ पुंसि भवेन्मिश्ररसभेदेऽस्य लक्षणम् ।
लवणोष्णकटुस्वादुतिक्तात्मत्वं त्रिषु त्वदः ॥ १९८७ ॥
तद्वति स्यात् तथैवायं वलजातेऽपि ना पुनः ।
रज्जौ **वराटः** पद्मस्य बीजकोशेऽप्यधीयते ॥ १९८८ ॥
खड्गभेदेऽपि चैरण्डबीजाभपुलकावलौ ।
नीचेऽथ द्वे कपर्दाख्यजलजन्तौ त्रिषु त्वयम् ॥ १९८९ ॥
सेवकेऽथ **वरालो** ना मिश्रवर्णान्तरे भवेत् ।
सितपिङ्गाणरूपेऽथ तद्वति त्रिषु सा पुनः ॥ १९९० ॥
वराला हंसकान्तायां स्त्री भैषज्यान्तरे तु नप् ।
**वमन**स्तु पुमान् वृक्षे विज्ञेयोऽङ्कोठसंज्ञके ॥ १९९१ ॥
छर्दनार्दनयोस्तु स्यात् क्लीत्येवं रभसोऽपठीत् ।
**वयःस्था** तु स्त्रियां ब्राह्मीकाकोल्यामलकीषु च ॥ १९९२ ॥
सूक्ष्मैलायां हरीतक्यां तरुणे त्वभिधेयवत् ।
**व्यलीक**स्त्वप्रिये पुंसि स्यादकार्ये च नप् पुनः ॥ १९९३ ॥
पीडायां च विलक्षे चाप्यपराधे विपर्यये ।
केचित् त्वाहुर्भेद्यलिङ्गमप्रिये **व्यञ्जनं** पुनः ॥ १९९४ ॥
क्लीबं श्मश्रुणि निष्ठाने चिह्नावयवयोरपि ।
व्यनक्त्यर्थेऽथ ना यज्ञपशुसंस्कारकर्मणि ॥ १९९५ ॥
अस्त्री हलसमाख्येषु वर्णेषु स्यादथास्त्रियाम् ।
**वलयं** कटके ना तु महोदर्याख्यमुस्तके ॥ १९९६ ॥
तथा पश्चिमराश्यर्थे **वनजं** तु नपुंसकम् ।
स्यादुत्पलप्रभेदे हि कंसोत्पलमिति श्रुते ॥ १९९७ ॥
पद्मे च स्त्री तु वनजा मुद्गपर्ण्याह्वयौषधौ ।
रभसस्त्वाह पुल्लिङ्गं मुस्तके शब्दवित्तमः ॥ १९९८ ॥

---

१. 'म्ल' ग. पाठः. २. 'ह्वये।' च., 'वये।' क. पाठः. ३. 'ले' क. पाठः. ४. 'र' क. च. पाठः.

**वनोद्भवे** तु त्रिष्वेतद् **वलनं** तु नपुंसकम् ।
आवर्तने स्यात् तन्त्वादेः संवृतौ चलनेऽपि च ॥ १५९९ ॥
अना तु वलयत्यर्थे वलनाथ द्वयोर्मृगे ।
हरिणादौ **वत्सलस्तु** त्रिषु प्रेमवति स्मृतः ॥ १६०० ॥
स्त्रियां तु वत्सला वत्सकामायां गवि नप् पुनः ।
**वल्गितं** वल्गनेऽश्वानां गतिभेदेऽप्यथ त्रिषु ॥ १६०१ ॥
तद्वत्यथ **वदालो** द्वे मत्स्यभेदे यदाह्वयः ।
सहस्रदंष्ट्र इत्येष तथा मत्स्यान्तरेऽपि च ॥ १६०२ ॥
पाठीन इति यस्याख्या वैजयन्त्यां हि कीर्तितौ ।
सहस्रदंष्ट्रपाठीनशब्दौ भिन्नाभिधेयकौ ॥ १६०३ ॥
**वराङ्गं** मूर्ध्नि गुह्ये च हस्ते चोचाख्यभेषजे ।
क्ली वराङ्गा चतुर्वर्षसुरभौ स्त्री द्वयोः पुनः ॥ १६०४ ॥
**वरुटः** प्राक्प्रसूतस्वजातौ स्यात् क्षत्रियस्त्रियाम् ।
मर्त्यजात्यन्तरे व्रात्याज्जातेऽथो शाकटायनः ॥ १६०५ ॥
निरुच्यौष्ठ्यबकारादिमेनं तस्यार्थमाह हि ।
मेदं मेदो हि वैदेहान्निषाद्यां जात उच्यते ॥ १६०६ ॥
**वल्लवस्तु** द्वयोः सूपकारगोपालयोर्भवेत् ।
**वर्तकस्तु** पुमानश्वखुरे पक्ष्यन्तरे पुनः ॥ १६०७ ॥
वर्तिका व(र्ति? र्त)का च स्त्री त्रि तु वर्तितरि स्मृतः ।
**वर्तनं** तु तुरङ्गस्य क्ली धूलिलुठने तथा ॥ १६०८ ॥
जीविकायां प्रवृत्तौ च मुहुर्वचन एव च ।
व्यावर्तने कुटीपिण्डे वर्तना तु न ना भवेत् ॥ १६०९ ॥
धातोर्वर्तयतेरर्थे पिण्डीकरण एव च ।
स्याद् भेद्यवत् तु वर्तिष्णौ **वरेण्यं** त्वभिधेयवत् ॥ १६१० ॥

1. 'रुप्यौष्ठ्य' क. ङ. च. पाठः.

श्रेष्ठे नपुंसकं त्वन्ये **वराहस्तु** पुमान् गिरौ ।
मेघेऽङ्गिरःसु प्रवरेऽप्यहनि द्वे तु सूकरे ॥ १६११ ॥

**वर्धनं** छेदने वृद्धिक्रियायां भेद्यवत् पुनः ।
स्याद् वृद्धिसाधने चापि वर्धिष्णौ च स्त्रियां पुनः ॥ १६१२ ॥

गलन्तिकायामपि च सम्मार्जन्यां च वर्धनी ।
वर्धना तु न ना धातोरर्थे वर्धयतेरथ ॥ १६१३ ॥

**वशिकं** भेद्यवत् तुच्छे क्लीबं तु गुरुणि स्मृतम् ।
**वंशिकं** त्वगुरौ क्लीबमध्वमानान्तरे तु ना ॥ १६१४ ॥

दशस्तोमात्मके द्वे तु वेनाशूद्रसमुद्भवे ।
मत्स्यजात्यन्तरे स्त्री तु वंशिका वंशवाचके ॥ १६१५ ॥

कश्चित् तु वंशजालेऽपि ब्रूतेऽथ **वपनं** नपि ।
बीजवापे मुण्डने च वपनी तु स्त्रियामियम् ॥ १६१६ ॥

‡खरकुट्याख्यवपनशालायां **वयुनस्तु** ना ।
यज्ञे क्ली तु प्रशस्ते च वेदुष्येऽप्यथ स द्वयोः ॥ १६१७ ॥

देवब्राह्मणयोः †क्ली तु प्रज्ञाकान्त्योरथ त्रिषु ।
स्याद् धूर्ते **वञ्चको** द्वे तु सृगाले ना तु **वञ्चथः** ॥ १६१८ ॥

मार्गे काले च दम्भे च द्वे तु कागे च कोकिले ।
**व्रश्चनं** छेदने क्लीबं ना पत्रपरशौ त्रि तु ॥ १६१९ ॥

साधने छेदनस्याथ **वचुर्ष्यं** तु त्रि वक्तरि ।
नकुले तु द्वयोराह कश्चिच्छब्दविचक्षणः ॥ १६२० ॥

**वसिरं** त्वब्धिजे क्लीबं लवणे रभसः पुनः ।
किणिहीहस्तिपिप्पल्योरपि प्राह पुमान् पुनः ॥ १६२१ ॥

१. 'णी' क. ङ. च. पाठः. २. 'पु' ग. ङ. पाठः.

‡ 'वपनी स्यात् खरकुटी शिल्पा' (पृ. १६१. श्लो. ५०) इति तु वैजयन्ती । † '**स्त्री तु**' इति स्यात् ।

सिंहोक्तो हस्तिपिप्पल्यां कार्पासास्थ्नि तु **वर्वरः** ।
लुब्धके ना पारसीकजने तु द्वे स्त्रियां पुनः ॥ १६२२ ॥
भार्यायां वर्वरी[1] नद्यां केशविन्यसनान्तरे ।
भेद्यवत् त्वधमे वक्रकेशे च **वरकस्तु** ना ॥ १६२३ ॥
वनमुद्गे कोद्रवस्य प्रभेदे रूक्षणाह्वये ।
अस्त्रियां तु द्विखण्डाख्ये भवेत् प्रावरणान्तरे ॥ १६२४ ॥
**वठरस्तु** शठे स्थूले त्रिषु वर्षे तु पुंस्ययम् ।
**वधकस्तु** पुमान् व्याधौ पद्मबीजे तु नप्यदः ॥ १६२५ ॥
भेद्यवद् घातके ना तु **वरणः** पादपान्तरे ।
तिक्तशाकाह्वये चैव प्राकारे चैव नप्यदः ॥ १६२६ ॥
सम्भक्तावावृतौ चाथ **वरुणो** ना प्रचेतसि ।
वरुणाह्वयवृक्षे च महोदररुजान्तरे ॥ १६२७ ॥
जलोदराख्ये क्ली त्वप्सु प्रसवेऽत्रोक्तशाखिनः ।
**वसन्तस्त्वृतुभेदे** ना सुरभ्याख्ये त्रिषु त्वयम् ॥ १६२८ ॥
क्रियायां वसनेर्धातोः कर्तर्यत्रापि च स्त्रियाम् ।
यदा वृत्तिस्तदा रूपं वसन्तीति पुमान् पुनः ॥ १६२९ ॥
**वहन्तो** रथरेणौ स्यात् त्रि तु वाहक्रियाकृति ।
तत्र स्त्र्यर्थे यदा वृत्तिर्वहन्तीति तदा भवेत् ॥ १६३० ॥
ना विस्तृतकरे हस्ते क्ली ताम्रे मकरेऽपि च ।
**वल्लूरं** तु वनक्षेत्र ऊषरे वाहने च नप् ॥ १६३१ ॥
वल्लूरा तु त्रयी शुष्कमांससूकरमांसयोः ।
**वभ्रूलस्तु** गजे द्वे स्याद्दषिभेदे तु पुंस्ययम् ॥ १६३२ ॥
स्याद् रसायनतन्त्रस्य कर्तरि स्यात् तु भेद्यवत् ।
**वरिष्ठः** स्यादुरुतमे तथा वरतमेऽपि च ॥ १६३३ ॥

१. 'त' क. पाठः.

द्वे तु तित्तिरिसंज्ञे स्यात् पक्षिजात्यन्तरेऽथ सा ।
**वडवा** घोटकान्तायां स्त्रीभेदेऽपि च विश्रुते ॥ १६३४ ॥
कामतन्त्रविदां कुम्भदास्यां च रभसस्त्वमुम् ।
द्विजाङ्गनायां च प्राह शब्दज्ञोऽथ नृलिङ्गकः ॥ १६३५ ॥
यं पुमांसं वृषं सन्तमारोहन्ति यियप्सवः ।
गावस्तत्र गुदे तु स्याद् **वनिष्ठुर्ना** द्वयोः पुनः ॥ १६३६ ॥
अश्वे त्रिषु तु सम्भक्ते ***वचक्रुस्तु** पुमानयम् ।
आचार्ये श्रोत्रिये चाथ ब्राह्मणे द्वे त्रि वाग्मिनि ॥ १६३७ ॥
**वन्दना** तु न ना स्तुत्यामभिवादन एव च ।
**वर्षाभूस्तु** द्वयोर्भेके वर्षाभ्वीति यदा तदा ॥ १६३८ ॥
वृत्तिः स्याद् योनिमत्यर्थे तथा गण्डूपदेऽपि च ।
भेकोक्तन्यायभावः स्यात् परेषां तु मतं विदुः ॥ १६३९ ॥
पुनर्नवासमाख्यायामोषधौ स्त्रीति तत् पुनः ।
स्यात् संशयितमस्माभिर्यतश्छन्दसि दृश्यते ॥ १६४० ॥
अनादिसम्प्रदायात्ते प्रयोगे कण्ठजोष्मवान् ।
व्युत्पन्नो ह्वयतेर्धातोर्वर्षाह्वशब्द एष वै ॥ १६४१ ॥
उन्नम्भयेति वर्षाह्वा जुहोतीति ततश्च सः ।
अपभ्रष्ट उताहोस्विद् वर्षाभूरिति चापरः ॥ १६४२ ॥
पुनर्नवायां शब्दोऽस्ति व्युत्पन्नो भवतेरिति ।
व्युत्पाद्यमानो भवतेर्मण्डूके सावकाशकः ॥ १६४३ ॥
तस्मात् पुनर्नवायां स्यादयमोष्ठ्यभकारवान् ।
सन्दिग्धोऽथ त्रिषु ज्ञेयो **वसुमान्** वसुसंयुते ॥ १६४४ ॥

१. 'ष्कं ना' क. पाठः. २. 'क्त' क. पाठः. ३. 'दि' ग. पाठः.

वचक्नुरिति अभिधानान्तरे लिखितम् ।

भूम्यां तु स्त्री वसुमती **वलभित्** तु पुमानयम्।
पुरन्दरे तथैकाहक्रतुभेदे च नपुं पुनः॥ १६४५॥

स्यादारण्यकयोः सामभेदयोर्ऋचि गीतयोः।
उपत्वाजामयोगिर इत्यस्यामथ स द्वयोः॥ १६४६॥

**वनश्वा** क्रोष्टरि व्याघ्रे रभसोक्तोऽथ स द्वयोः।
**वयोधा** यून्यथ त्रि स्याद् वयसो धातरि त्रि तु॥ १६४७॥

**वनौका** वनवास्तव्ये मर्कटे तु द्वयोरयम्।
**वासन्तस्तु** पुमाञ्ज्ञेयो वृक्षे कुरवकाह्वये॥ १६४८॥

वासन्ती तु स्त्रियां पुष्पवल्लीभेदेऽतिमुक्तके।
यूथिकायां च रभसोऽवहिते तु त्रिषु स्मृतः॥ १६४९॥

वसन्तजाते च तथा वसन्ते पुष्पजातिषु।
वसन्तसम्बन्धिनि च **वार्ताकी** तु स्त्रियामियम्॥ १६५०॥

त्रिष्वित्येके शाकफलस्तम्बे वातिङ्गणाह्वये।
प्रसहाख्ये क्षुद्रफलस्तम्बे च प्रसवे पुनः॥ १६५१॥

तयोः क्लीबमथ द्वे स्याद् **वानरो** मर्कटेऽथ ना।
तुरुष्कसंज्ञे निर्यासे **वाटिका** तु स्त्रियामियम्॥ १६५२॥

पूगवृक्षे त्रिषु पुनर्वाटको वेष्टकेऽथ ना।
**वाडबो** वडबावह्नौ ब्राह्मणे तु द्वयोस्त्रि तु॥ १६५३॥

वडबायोगिनि प्राह रभसः पुन्नपुंसकम्।
वडबानां गणे द्वे तु **वारणः** कुञ्जरे त्रि तु॥ १६५४॥

विकारे वरणाख्यस्य तरोर्वरणयोगिनि।
ना तु सेतौ स्त्रीनपोस्तु वारणा स्यान्निवारणे॥ १६५५॥

अथात्र रभसेनोक्तः श्लोकोऽयं पठ्यते यथा।
विशारदे ग(दा?ता)तङ्के मुमुक्षौ बद्धवेष्टके॥ १६५६॥

१. 'प्यदः।' क. ग. पाठः.

निर्जरेऽपि विशाले च **वा(गु?ग)**†**रो** वारके पुमान् ।
इत्येवमत्र लिङ्गानि व्यवस्थाप्यानि यत्नतः ॥ १६५७ ॥

क्ली तु स्याद् **वाहनं** युग्ये वाहनी तु स्त्रियामियम् ।
पुरस्य राजमार्गे स्यादुपनिष्करसंज्ञके ॥ १६५८ ॥

अना तु वाहयत्यर्थे वाहना **वागुरा** पुनः ।
स्त्रियां स्यान्मृगबन्धन्यां मर्त्यजात्यन्तरे पुनः ॥ १६५९ ॥

वैश्यवेनीसमुद्भूते **वानकं** तु नपुंसकम् ।
ब्रह्मचर्ये त्रिषु पुनर्वनितर्यथ **वापनी** ॥ १६६० ॥

स्त्रियामोदनभिक्षायां ग्रासमात्र्यामना पुनः ।
वापना वापयत्यर्थे **वार्तिक**स्तु द्वयोरयम् ॥ १६६१ ॥

दूते विवाहविख्यातधूलिभक्ते तु तत्रापि ।
व्याख्याग्रन्थविशेषे च **वारुणी** तु स्त्रियामियम् ॥ १६६२ ॥

उमायां च प्रतीच्यां च सुरायां च लतान्तरे ।
भेद्यलिङ्गं तु वरुणसम्बन्धिन्यथ **वारिजम्** ॥ १६६३ ॥

पद्मे सामुद्रलवणे क्लीबं शङ्खे तु पुंस्ययम् ।
**वामन**स्तु पुमान् विष्णोरवतारान्तरे बलेः ॥ १६६४ ॥

द्वेष्टरि द्रुमभेदे च मदनाख्ये तथा भवेत् ।
दिग्गजे यमकाष्ठास्थे ह्रस्वे तु त्रिष्वथ स्मृतः ॥ १६६५ ॥

**वातूलः** पुंसि वात्यायां त्रि तु वातासहे तथा ।
वातलेऽप्यथ काके द्वे **वायसः** स्त्री तु वायसी ॥ १६६६ ॥

काकोदुम्बरिकायां च काकमाच्यां च भाषिता ।
भेद्यलिङ्गं तु विज्ञेयं वयस्सम्बन्धिमात्रके ॥ १६६७ ॥

† 'वागरस्तु गतातङ्के मुमुक्षौ वातवेष्टके । विशारदे विषाणेऽपि निर्णये वारकेऽपि च ॥' इति मेदिनी, 'वागरो वारके शाणे निर्जरे बाडवे वृके । मुमुक्षौ पण्डिते चापि परित्यक्तभयेऽपि च ॥' इति हेमचन्द्रश्च ।

**वालकं** त्वस्त्रियां ज्ञेयं वलयेऽप्यङ्गुलीयके ।
ह्रीबेरे तु नपि स्त्री तु **वालिका** सिकतासु च ॥ ११६८ ॥

ऊर्मौ च कर्णपृष्ठस्थे विज्ञेया भूषणान्तरे ।
वलये चाङ्गुलीये च पुमांसं रभसोऽब्रवीत् ॥ ११६९ ॥

**वासुकस्तु** पुमानर्कनामधेयमहीरुहे ।
रौमकाख्ये तु लवणे विजानीयान्नपुंसकम् ॥ ११७० ॥

स्त्री तु सन्देशवाचि स्याद् **वाचिकं** त्रि तु वाक्कृते ।
गिरा चाभिनये ना तु **वातघ्नो** भूरुहान्तरे ॥ ११७१ ॥

एरण्डसंज्ञे त्रिषु तु वातघ्नी वातघातके ।
अमनुष्ये **वाजिनं** तु नवामिक्षाजवस्तुनि ॥ ११७२ ॥

वाजिसम्बन्धिनि त्वेतत् त्रिरथो **वासिकं** नपि ।
गृहच्छदिष्काष्ठभेदे सन्धिकाष्ठाह्वयेऽथ सा ॥ ११७३ ॥

वासिका स्त्री माल्यदाम्नि **वार्षिकं** तु नपुंसकम् ।
त्रायमाणासमाख्ये स्यात् स्थावरे भेद्यवत् पुनः ॥ ११७४ ॥

वर्षासु भवजातादौ निर्वृत्तं यच्च किञ्चन ।
वर्षेण वर्षाभिर्वा स्यात् तत्राधोष्टादिकेऽपि तत् ॥ ११७५ ॥

**वासवस्तु** पुमानिन्द्रे द्वादशे चाप्यरत्निके ।
भवेत् सप्तदशारत्नेर्यूपस्य स्यात् तु भेद्यवत् ॥ ११७६ ॥

वसुसम्बन्धिनि द्वे तु **वातिको** विषवैद्यके ।
त्रि तु वातस्य शमने कोपने चापि वस्तुनि ॥ ११७७ ॥

**वालुका** तु स्त्रियामुक्ता सिकतासु नपि [illegible] ।
एलावालुकसंज्ञे स्याद् भेषजे [illegible] विषान्तरे ॥ ११७८ ॥

पुण्डरीकसमाख्येऽथ **वाचालो** भेद्यलिङ्गकः ।
बहुगर्ह्यगिरि स्त्री तु शारिकासंज्ञपक्षिणि ॥ ११७९ ॥

वाचाला वासरस्त्वस्त्री दिवसे ना तु पार्वके ।
कामे प्रावृषि चाथ स्युर्वाहिकाः पुंसि भूम्नि च ॥ १६८० ॥
टेकसंज्ञे* जनपदे वाहिकं तु नपुंसकम् ।
तुलासंज्ञोन्मानभेदाद्दक्षं दशगुणं स्मृतम् ॥ १६८१ ॥
वृद्ध्या दशगुणं तस्मात् स्थितेष्वाचितकादिषु ।
अष्टासु परिमाणेषु षट्के स्यात् परिमाणके ॥ १६८२ ॥
वाहकस्तु द्वयोः सर्पप्रभेदेऽजगराह्वये ।
ना त्वग्नौ सुनिषण्णाख्यशाके च जलनिर्गमे ॥ १६८३ ॥
मेयलिङ्गस्तु वहनकर्माजीवे बुधैः स्मृतः ।
वारङ्गस्तु द्वयोर्ज्ञेयः शकुनौ पुंसि तु स्मृतः ॥ १६८४ ॥
खड्गैकदेशे वाराहं पुनः सामसु केषुचित् ।
क्लीबं वराहमुनिना पुनर्ग्रन्थे कृते त्रिषु ॥ १६८५ ॥
वराहसम्बन्धिनि च वाराही तु स्त्रियामियम् ।
विष्वक्सेनप्रियानामन्योषधौ च लतान्तरे ॥ १६८६ ॥
वाराहकन्दसंज्ञे स्यादन्यस्यां क्वापि चौषधौ ।
सप्तानां चैव मातॄणामेकस्यामपि मातरि ॥ १६८७ ॥
वाशु(क?र)स्तु द्वयोर्ज्ञेयः शकुनौ स्त्री तु वाशुरा† ।
रात्रौ क्लीबं तु वादित्रं वाद्यनिर्घोषवाद्ययोः ॥ १६८८ ॥
वदितुस्तु त्रि सम्बन्धिन्यथ स्याद् वादना न ना ।
अर्थे वादयतेः स्त्री तु वाद्यनिर्घोष ईरितम् ॥ १६८९ ॥
वाद्ये तु वादिकं क्लीबं मेयलिङ्गं तु कर्तरि ।
अण्यन्तवदतेर्ण्यन्तवदतेः कर्म यः स्मृतः ॥ १६९० ॥

१. 'दपे ।' ग. पाठः. २. 'भकसं' ङ., 'षट्कसं' ग. पाठः. ३. 'स्यां चापि' ग पाठः.

* "टर्कवाहीककाश्मीरतुरुष्केषु ससिन्धुषु । बाह्लीका वाह्लिकाः कीराः शाखयो दारदाः क्रमात" (पृ. ३७. श्लो. २७) इति तु वैजयन्ती । † 'वाशुरा वासितारात्र्योः' इति तु हेमचन्द्रः

**वासना** तु न ना गन्धधूपाद्यैर्भावनाविधौ ।
तथा निवासयत्यर्थे वस्तेर्हेतुकृतावपि ॥ १६९१ ॥

**वासन**स्तु पुमान् गेहावयवे बिन्दुसंज्ञके[1] ।
वासनासाधने तु त्रि स्त्रीलिङ्गा तु स्मृता बुधैः ॥ १६९२ ॥

**वार्धुषि**स्त्वृणवृद्धौ स्त्री वृद्ध्याजीवे तु भेद्यवत् ।
**वारिणि**[2]स्तु पशौ द्वे स्यात् पशुवृत्त्यां तु सा स्त्रियाम् ॥ १६९३ ॥

**विजय**स्तु जये पुंसि तथा मध्यमपाण्डवे ।
खड्गे च स्त्री तु विजया हरीतक्यामथ त्रिपु ॥ १६९४ ॥

**विबुधो** विदुषि द्वे तु देवेऽथो पुन्नपुंसकम् ।
**विलग्नं** मध्यसंज्ञे स्याच्छरीरावयवे त्रि तु ॥ १६९५ ॥

सक्तेऽथ **विरलं** त्रि स्यादघने विरला त्वियम् ।
स्त्रियां गृध्रनखीसंज्ञलताजातावथ स्त्रियाम् ॥ १६९६ ॥

**विशल्या**म्निशिखानाम्न्यामोषधौ स्यात् तथैव सा ।
दन्तिकायां गुडूच्यां च निश्शल्ये त्वभिधेयवत् ॥ १६९७ ॥

**विशिख**स्तु पुमान् बाणे विशिखा तु स्त्रियामियम् ।
रथ्यायां रभसस्त्वेनां खनित्र्यामिति चोक्तवान् ॥ १६९८ ॥

भगवद्यादवोक्तं तु चेतसि क्लीबलिङ्गकम् ।
निश्शिखे तु त्रिषु स्त्री तु **विशाखा** तारकान्तरे ॥ १६९९ ॥

धारासंज्ञे पादपस्यावयवान्तर एव च ।
ना तु देवविशेषे स्यात् स्कन्ददेवस्य पृष्ठजे ॥ १७०० ॥

स्कन्ददेवे वदन्त्यन्ये विशाखाकालजे पुनः ।
भेद्यवत् स्याद् **विषाणा** तु पशुश्रृङ्गेभदन्तयोः ॥ १७०१ ॥

लिङ्गत्रये स्त्रियां तु स्यादजश्रृङ्गीति विश्रुते ।
लताभेदे **विषाणीति** ञ्चन्ता स्त्री तु त्रिषघ्न्यसौ ॥ १७०२ ॥

1. 'वि' द. ब. पाठः. 2. 'ण' द. पाठः.

गुलूच्यां वृश्चिकाल्यां च *भार्ङ्गीनाम्नि च भेषजे ।
त्रिवृतासंज्ञवल्ल्यां च शिरीषे तु पुमानयम् ॥ १७०३ ॥
श्लेष्मातकाख्ये च तरौ विषघ्नस्त्रि तु हन्तरि ।
अमनुष्ये विषस्य स्याद् **विनय**स्तु शमे भवेत् ॥ १७०४ ॥
त्रि तु वीतनये स्त्री तु बलायां विनयाथ सः ।
**विहणो** भेद्यलिङ्गः स्याच्छठे स तु नृलिङ्गकः ॥ १७०५ ॥
ऋषिभेदे भवेन्नो[2] तु **विपक्षः** शात्रवे तथा ।
पक्षिपक्षे भेद्यवत् तु वीतपक्षे पुमान् पुनः ॥ १७०६ ॥
**वितर्क** आशङ्कायां स्याद् वीततर्के तु भेद्यवत् ।
**विपिनं** क्ली वने हर्षनन्दी तु वितृणोत्यदः ॥ १७०७ ॥
जलदुर्गे भेद्यवत् तु गहने **विभियं** तु नप् ।
अपराधे भेद्यवत् तु विज्ञेयं विगतप्रिये ॥ १७०८ ॥
**विष्किर**स्तु द्वयोः पक्षिमात्रे कुक्कुटपक्षिणि ।
मयूरे च **विराग**स्तु वैराग्ये ना त्रिषु त्वयन् ॥ १७०९ ॥
वीतरागे **विषाद**स्तु विषस्यात्तरि भेद्यवत् ।
चित्तावसादे तु पुमान् **विश्वस्ता** तु स्त्रियाँ[3]मियम् ॥ १७१०
विधवायां शाश्वतस्तु त्रिषु विश्वासयोग्यके ।
**विपन्न**स्तु द्वयोः सर्पे भेद्यवत् तु विपद्गते ॥ १७११ ॥
अथो **वितुन्न**मानूपशाकस्तम्बे नपुंसकम् ।
सुनिषण्णाह्वये तुत्थाञ्जनाख्ये चाञ्जनान्तरे ॥ १७१२ ॥
तामलक्यां तु ना ना तु **विदण्डो** मार्गरोधिनि ।
अर्गलासंज्ञकाष्ठे च वीतदण्डे तु भेद्यवत् ॥ १७१३ ॥

१. 'भागीना' क. ङ. च. पाठः. २. 'ना' ग. पाठः. ३. 'यां स्त्रियाम्' क. ङ. च. पाठः.

* 'भार्गी ब्राह्मणयष्टिका' इति त्वमरः ।

**विलेपस्तु** पुमाञ्ज्ञेयः स्यात् क्रियायां विलिम्पतेः ।
तथानुलेपनद्रव्ये विलेपी तु स्त्रियामियम् ॥ १७१४ ॥

घनद्रवायां विज्ञेया यवाग्वामथ सा स्त्रियाम् ।
घनद्रवयवाग्वां स्याद् **विलेप्या** भेद्यवत् पुनः ॥ १७१५ ॥

विलेप्तव्ये **विशेषस्तु** ना भेदेऽतिशये त्रि तु ।
वीतशेषे पक्षिमात्रशेषेऽप्यथ नृभूमनि ॥ १७१६ ॥

**विदेहास्**तीरभुक्त्याख्यनीवृद्भेदे त्रिषु त्वयम् ।
वीतदेहे **विद्रुतं** तु क्लीबं विद्रवणे त्रि तु ॥ १७१७ ॥

पलायिते विलीने च **विकृतं** तु नपुंसकम् ।
वैजयन्त्यां तु पुंस्याह बीभत्साख्ये रसे त्रि तु ॥ १७१८ ॥

तद्वत्यर्थे पाक्षिकृतविकारापन्नयोरपि ।
तथा वीतकृतेऽपि स्याद् रोगिदूरूपयोरपि ॥ १७१९ ॥

नानाविधक्रिये चाथ क्लीबं नानाविधे कृते ।
विकृतौ चोचितस्यापि लज्जादिभिरभाषणे ॥ १७२० ॥

स्त्रीणां भावप्रभेदेऽथ **विभ्रमः** संशये पुमान् ।
शृङ्गारचेष्टाभेदे च द्राग्विपर्याससरूपके ॥ १७२१ ॥

शोभायामपि च भ्रान्तौ वेभ्रमे च त्रिषु त्वयम् ।
वीतभ्रमे **विग्रहस्तु** विस्तारे युद्धदेहयोः ॥ १७२२ ॥

वेग्रहे चाजयस्त्वाह विस्तारात् पृथगेव वै ।
वाक्यप्रभेदेऽप्येतत् तु केचिन्नेच्छन्ति सूरयः ॥ १७२३ ॥

विस्तारेण गतार्थत्वात् त्रि तु स्याद् विगतग्रहे ।
**विभूतिस्तु** स्त्रियामूतौ विभोरैश्वर्यसम्पदः ॥ १७२४ ॥

भेद्यलिङ्गा तु कथिता शब्दागमविचक्षणैः ।
वीतभूतौ **विभक्तिस्तु** स्त्री विभागेऽपि सुप्तिङोः ॥ १७२५ ॥

प्राग्दिशीयप्रत्यये च वीतभक्तौ तु भेद्यवत् ।
**विट्पतिस्तु** द्वयोर्देवे ना तु जामातरि त्रि तु ॥ १७२६ ॥
विशां पत्यौ **विधाता** तु विरिञ्चे (तु? ना) त्रिषु त्वयम् ।
कर्तृमेधाविनोः स्यात् तु **विषुवन्नृनपो**रयम् ॥ १७२७ ॥
समरात्रिन्दिवे काले क्रतुभेदे तु पुंस्ययम् ।
**विवस्वांस्तु** पुमान् सूर्ये द्वे तु देवे नरेऽपि च ॥ १७२८ ॥
वायुदिग्गजहस्तिन्यां पुनः स्त्री स्याद् विवस्वती ।
**विश्वात्मा** तु पुमान् सूर्ये विरिञ्चेऽप्यथ भेद्यवत् ॥ १७२९ ॥
बहुव्रीहौ **विजन्मा** तु मर्त्यजात्यन्तरे द्वयोः ।
शूद्रपूर्वकवैश्यायां व्रात्याज्जाते त्रिषु त्वयम् ॥ १७३० ॥
‡(सूर्ये?) जन्मन्यथो पुंसि **विरोधी** शात्रवे त्रि तु ।
विरोद्धरि **विपाकी** तु यवक्षारे पुमांस्त्रि तु ॥ १७३१ ॥
विपाकवति ना तु स्याद् **विषाणी** वृषभे गजे ।
विषाणवति तु त्रि स्याद् **विषयी** तु महीपतौ ॥ १७३२ ॥
विषयस्थजने पुंसि मन्मथेऽप्यथ भेद्यवत् ।
विज्ञेयो विषयोपेते ब्रूते [1]त्वजय ईदृशम् ॥ १७३३ ॥
विषयासक्तपुरुष इति नप् त्विन्द्रियेऽथ ना ।
**विधर्मा** ह्यहिते हर्षनन्दी त्वाह महामतिः ॥ १७३४ ॥
व्यतीचार इति त्रिस्तु भवेद् विगतधर्मके ।
सामप्रभेदे तु क्लीबं पुन्नपुंसकयोः पुनः ॥ १७३५ ॥
**विहायो** वियति द्वे तु विहगे महति त्रिपु ।
स्तेने च ना तु **वीरोज्झो** [2]योऽग्निहोत्रं स्वयं नहि ॥ १७३६ ॥

१. 'विषय ईदृशः ॥' च. पाठः. २. 'यो' ङ. पाठः.

‡ 'गर्भजन्मनि' इति स्यात् ।

अग्निहोत्री जुहोत्यब्दं *तस्मिन्(?) वीरस्य तूज्झके ।
मेघवद् **वीरहा** तु स्यादुत्सन्नाग्न्यग्निहोत्रिणि ॥ १७३७ ॥
पुमांस्त्रिषु तु [1]वीरस्य हन्तरि स्यादथ द्वयोः ।
**वृषलो** (द्वे?ऽश्वे)† भवेच्छूद्रे वृषभे तु पुमांस्त्रि तु ॥ १७३८ ॥
स्याल्लातरि वृषार्थस्य **वृजिनं** तु बले नपि ।
पापे च ना तु केशे स्यात् कुटिले त्वभिधेयवत् ॥ १७३९ ॥
**वृश्चिकस्तु** द्वयोः क्षुद्रजन्तौ द्रुण इति श्रुते ।
पुच्छकण्टकसंयुक्ते तथा स्याच्छूककीटके ॥ १७४० ॥
स्त्रीपुंसयोस्तु खर्जूरसंज्ञके विषकीटके ।
द्राघिष्ठे वृश्चिका ना तु राशिभेदेऽपि चाष्टमे ॥ १७४१ ॥
भौमाय सूर्यदत्ते स्याद् या तु श्वेता पुनर्नवा ।
तस्यां च **वेदना** तु स्याज्ज्ञानेऽनुभवपीडयोः ॥ १७४२ ॥
अना क्लीबं तु सत्तायां भवेल्लाभविचारयोः ।
**वेणुकं** गजतोत्रे क्ली वेणुका तु स्त्रियामियम् ॥ १७४३ ॥
वाद्यभेदे वंशसंज्ञे मर्त्यजात्यन्तरे पुनः ।
द्वे निषादीक्षत्रियजे **वेजनस्तु** पुमानयम् ॥ १७४४ ॥
भवेत् सप्तदशारत्नेर्यूपस्यारत्निके तथा ।
मूलात् सप्तदशे क्ली तु भये च चलनेऽपि च ॥ १७४५ ॥
अना तु वेजयत्यर्थे **वेधकं** तु नपुंसकम् ।
लवणे सैन्धवाभिख्ये त्रि तु व्यद्धरि नप् पुनः ॥ १७४६
**वेधनं** व्यधने स्त्री तु वेधनी या तु विश्रुता ।
आस्फोटनीति तत्र स्याद् **वेत्रवांस्त्वभिधेयवत्** ॥ १७४७ ॥

१. 'तद्वीरस्तस्य' ख. ग., 'द्वीरस्य' ङ च. पाठः.

* 'तस्मिन् वीरस्य तूज्झके' इति पाठः समञ्जसः । † 'वृषलस्तुरगे शूद्रे' इति हेमचन्द्रः ।

वेत्रयुक्ते वेत्रवती पुनः स्त्री निम्नगान्तरे ।
वैदर्भी तु स्त्रियां काव्यरीतिभेदे दुरालभा ॥ १७४८ ॥
इति प्रतीतस्तम्बे च वैदर्भे त्वभिधेयवत् ।
विदर्भदेशसम्बन्धे वैदेही तु स्त्रियामियम् ॥ १७४९ ॥
रोचनायामपि प्राह रभसः शब्दवित्तमः ।
मैथिल्यामपि पिप्पल्यां स्याद् विदेहनृपे तु ना ॥ १७५० ॥
मर्त्यजात्यन्तरे तु द्वे वैश्यायां शूद्रजे तथा ।
ब्राह्मण्यां वैश्यजाते च वैतसस्तु पुमानयम् ॥ १७५१ ॥
स्यात् पुंस्प्रजनने त्रिस्तु विकारे वेतसस्य हि ।
वैदिकस्तु पुमान् ब्रह्मचारिणि स्यादधीतवान् ॥ १७५२ ॥
यो वेदं तत्र वेदे तु भवे स्याद् भेद्यलिङ्गकः ।
वैशाखस्तु पुमान् मन्थदण्डे माधवमासि च ॥ १७५३ ॥
अस्त्री तु धानुष्काणां स्यात् स्थितिभेदे स चेदृशः ।
त्रिवितस्त्यन्तरौ पादौ यत्र तत्र स्त्रियां पुनः ॥ १७५४ ॥
पौर्णमास्यां विशाखाख्यनक्षत्रयुजि सा तथा ।
गजस्य पूर्वपादस्य नखादूर्ध्वे हि सप्तधा ॥ १७५५ ॥
कृतस्योर्ध्वस्थभागे च भेद्यलिङ्गं तु वैष्णवम् ।
विष्णुभक्ते तथा विष्णुदेवते विष्णुयोगिनि ॥ १७५६ ॥
ना तु सप्तदशारत्नेर्यूपस्यारभ्य मूलतः ।
ज्ञेयस्त्रयोदशेऽरत्नौ वैष्णवी तु स्त्रियामियम् ॥ १७५७ ॥
सप्तानामपि मातॄणामेकस्यां स्यात् तथैव सा ।
नवानां विष्णुशक्तीनामेकस्यामपि नप् पुनः ॥ १७५८ ॥
तवाहंसोमवर्गस्य साम्नोः प्रथमयोः स्मृतम् ।
वैणवस्तु द्वयोर्मर्त्यजातिभेदे यदुद्भवः ॥ १७५९ ॥

१. 'द' ग. च. पाठः.

ब्राह्मण्यां तत्र माहिष्यात् त्रिस्तु वेणुविकारके ।
क्ली तु स्वर्णविशेषे स्याद् वेणूतटसमुद्भवे ॥ १७६० ॥

कर्णिकारप्रभेदेऽथो ना शम्बरो गिरिमेघयोः ।
दैत्यभेदे च विज्ञेयो यो बिभर्त्युरसा स्त्रियम् ॥ १७६१ ॥

द्वे तु स्यान्मृगभेदेऽल्पहारिणे मत्स्य एव च ।
क्लीबं तु सलिले बौद्धव्रतभेदे बलेऽप्यथ ॥ १७६२ ॥

शबरो मर्त्यजातेर्द्वे प्रभेदे यस्य सम्भवः ।
शूद्राद् भिल्लस्त्रियां स्त्री तु शबरी तापसस्त्रियाम् ॥ १७६३ ॥

रामायणप्रसिद्धायां पुँल्लिङ्गस्तु महेश्वरे ।
नपुंसकं तु सलिले शबलस्तु नृलिङ्गकः ॥ १७६४ ॥

चित्रवर्णवृषे चित्रवर्णे च त्रि तु तद्वति ।
शबली तु स्त्रियां चित्रवर्णगव्यामथ द्वयोः ॥ १७६५ ॥

शफरो मत्स्यभेदे स्यात् प्रोष्ठीसंज्ञे स्त्रियां पुनः ।
शफरी वृक्षभेदे स्यादश्मन्तक इति श्रुते ॥ १७६६ ॥

शलली नपुंस्त्रियोः श्वाविल्लोम्नि श्वाविधि तु द्वयोः ।
शण्डिलस्त्वृषिभेदे ना पार्वत्यां शण्डिली स्त्रियाम् ॥ १७६७ ॥

जलशुक्तौ तु शम्बूको द्वे शम्बूका तु सा स्त्रियाम् ।
गजस्य मुखमध्यस्य पार्श्वाधोदेशयोरथ ॥ १७६८ ॥

ना सूक्ष्मे तण्डुलकणे तण्डुलस्य मलेऽपि च ।
शल्यकस्तु पुमान्क्लृतखदिरे कदराह्वये ॥ १७६९ ॥

शल्यंकी तु द्वयोर्ज्ञेया मृगभेदेऽथ शल्लकः ।
पुंसि स्याट्टङ्कणक्षारे क्ली त्वयमथ न द्वयोः ॥ १७७० ॥

शरभः सिंहशत्रौ स्यादष्टपात्संज्ञके मृगे ।
मृगान्तरे च रभसः करभे चोक्तवानमुम् ॥ १७७१ ॥

स्त्रियां तु शरभा कन्यास्वविवाह्यासु कुत्रचित् ।
विशीर्णाङ्ग्यां द्वयोस्तु स्याच्छकुलो मत्स्यभेदके ॥ १७७२ ॥

स्त्री तु कूश्माण्डवल्ल्यां स्याच्छकुला शमनस्तु ना[1] ।
यमे क्लीबं तु शान्तौ स्यादना तु शमना भवेत् ॥ १७७३ ॥

वधेऽपि शमयत्यर्थे त्रि तु स्याच्छान्तिसाधने ।
श्वसनस्तु पुमान् वायौ मदनाख्ये च पादपे ॥ १७७४ ॥

क्ली तु श्वासक्रियायां स्याच्छ्वपचस्तु द्वयोरयम् ।
मर्त्यजात्यन्तरे विप्राचण्डालप्रभवे तथा ॥ १७७५ ॥

निष्ठ्याादनन्यपूर्वायां किरात्यां जनिते त्रि तु ।
शुनः पक्तर्यथ द्वे स्याच्छ्वपाको मनुजान्तरे ॥ १७७६ ॥

विप्रयामम्बष्ठजे क्षत्तुर्जाते चोग्रास्त्रियामथ ।
उग्रात् क्षत्रस्त्रियां जात इति केचित् पुमान् पुनः ॥ १७७७ ॥

शुनः पाके पुमांस्तु स्याच्छ्वशुरो जनके भवेत् ।
भार्या(मातरि ? या अपि) पत्युश्च रभसस्त्वत्र भाषते ॥ १७७८ ॥

स्त्रीलिङ्गा श्वशुरा ब्राह्मयामित्येवं शब्दकोविदः ।
देवरे तु श्वशुर्यो ना द्वे तु स्याले पुमान् पुनः ॥ १७७९ ॥

शशाङ्के शयुनः स्वप्ने द्वयोस्त्वजगरेऽथ ना ।
प्रदोषे शयथो मृत्यौ मत्स्ये त्वजगरे द्वयोः ॥ १७८० ॥

भेद्यलिङ्गस्तु निद्रालौ शयनं तु नृशण्डयोः ।
शय्यायां क्ली तु सुरते सावेशे शरठं तु नप् ॥ १७८१ ॥

आयुधे चैव चापे[2] च क्रीडाशीले तु भेद्यवत् ।
शकलस्त्वृषिभेदे ना खण्डे[3] तु नरशण्डयोः ॥ १७८२ ॥

रागद्रव्यविशेषे च वल्कलेऽप्यथ भेद्यवत् ।
शकलो मूर्खधनिनोर्नीवृद्भेदे नृभूमनि ॥ १७८३ ॥

१. 'ङ्गं तु' क. ग. ङ. पाठः. २. 'पा' क. ङ. च. पाठः. ३. 'ण्डला न' ग. पाठः.

**शकुटस्तु** पुमाञ्छाकस्तम्बभेदे स्त्रियां पुनः ।
हस्तिनः पश्चिमं भागं विभज्य दशधोर्ध्वतः ॥ १७८४ ॥
आरभ्य पञ्चमे भागे शकुटाथ **शकोटवाक्** ।
बाहौ ना भेद्यवच्छक्ते **शताङ्गस्तु** रथे पुमान् ॥ १७८५ ॥
पूर्ववत् स्यात् समासादि **श्रपणा** तु न पुंस्यसौ ।
धातोः श्रपयतेरर्थे श्रपणी तु स्त्रियामियम् ॥ १७८६ ॥
स्यात् स्रुग्विशेषेऽग्निहोत्रहवणीसंज्ञकेऽथ नप् ।
श्रान्तौ स्याच्छ्रमणं स्त्री तु श्रमणी मुण्डिकाह्वये ॥ १७८७ ॥
भैषज्यस्तम्बभेदे स्याद् रभसस्त्वाह शब्दवित् ।
दध्याल्याख्यलतायां च द्वे तु क्षपणकेऽथ नप् ॥ १७८८ ॥
**श्रवणं** स्याच्छृणोत्यर्थे श्रोत्रे चाथ नृलिङ्गकः ।
विष्णुदेवतनक्षत्रे तद्युक्ते कालमात्रके ॥ १७८९ ॥
श्रवणा तु स्त्रियां रात्रिविशेषे पूर्णिमान्तरे ।
प्राणिभेदे पुनर्द्वे स्याच्छ्रविष्ठा तु स्त्रियामियम् ॥ १७९० ॥
वसुदेवतनक्षत्रे तद्युक्ते कालमात्रके ।
जाते तु तत्र त्रिरथो **शत्रुघ्नो** ना कनीयसि ॥ १७९१ ॥
काकुत्स्थस्य सुमित्राजे त्रिस्तु शत्रोर्निहन्तरि ।
**शर्वरो** ना महादेवे चन्द्रे च तमसि त्वदः ॥ १७९२ ॥
स्त्री स्त्री तु शर्वरी रात्रौ सन्ध्यायामपि योषिति ।
अथ स्त्री **शमिता** चूर्णे गोधूमस्येति यादवः ॥ १७९३ ॥
असाध्विव तदाभाति शब्दज्ञानां यदग्रणीः ।
गोधूमचूर्णे समिधं धान्तं पुल्लिङ्गमुक्तवान् ॥ १७९४ ॥
शाकटायन आचार्यस्तस्यौपभ्रंश इत्ययम् ।
भासते सोऽपि साध्वी चेदीप्स्ये शमयतेस्त्रिषु ॥ १७९५ ॥

१. 'क' क. ग पाठः. २. 'क' क. पाठः. ३. 'द' ग. पाठः. ४. 'वा' ङ. पाठः.

**शकुन्तस्तु** द्वयोः पक्षिमात्रे भासाख्यपक्षिणि ।
**शकुनस्तु** विहङ्गे द्वे पुंसि त्वजय उक्तवान् ॥ १७९६ ॥
मित्रे क्ली तु निमित्ताख्ये शुभादेः सूचकेऽथ ना ।
**शकुनिर्धृतराष्ट्रस्य** पक्ष्ये पूर्वनृपान्तरे ॥ १७९७ ॥
द्वे तु पक्षिणि चिल्लाख्ये पक्षिमात्रेऽप्यथ द्वयोः ।
**शयालुः** क्रोष्टरि त्रिस्तु निद्रालावथ पुंस्ययम् ॥ १७९८ ॥
उदुम्बरद्रुमे ज्ञेयः शयालुरपरे पुनः ।
वृक्षावयवभेदे च क्ली तूदुम्बरजे फले ॥ १७९९ ॥
गन्धद्रव्यविशेषे च फले त्वामे[1] त्रि[2] शाखिनाम् ।
**श्रद्धालुस्तु** त्रिषु श्रद्धाशीले स्त्रीलिङ्गवाक् पुनः ॥ १८०० ॥
स्त्रीविशेषे विजानीयात् प्राज्ञो दोहदसंयुते ।
**शर्कलूर्देवताभेदे**[3] स्त्रियां पुंसि त्वधीयते ॥ १८०१ ॥
वनस्पतिविशेषेऽथ **शब्दप्राट्** शिष्यके द्वयोः ।
त्रि तु शाब्देऽथ **शतपाच्छताङ्घ्रौ** त्रि स्त्रियां पुनः ॥ १८०२ ॥
ज्ञेया शतपदी कर्णजलौकायामथ द्वयोः ।
मत्स्ये स्याच्छकली त्रिस्तु शकलेन समायुते ॥ १८०३ ॥
**शारदस्तु** पुमान् पीतमुद्गे संवत्सरेऽपि च ।
त्रिस्त्वधृष्टे च शुद्धे च शरत्पक्वादिकेषु च ॥ १८०४ ॥
शारस्य दातर्यपि च रभसोऽप्रतिभेऽपि च ।
प्रत्यग्रे च स्त्रियां तु स्यात् सप्तपर्णाख्यपादपे ॥ १८०५ ॥
शारदी तोयपिप्पल्यामप्यथो **शार्वरं** नपि ।
स्यादन्धतमसे त्रिस्तु घातुकेऽथ त्रि **शार्करः** ॥ १८०६ ॥
शर्करावति नप् तु स्याद् योनोवर्गसमुत्थयोः ।
साम्नोर्माध्वीकसंज्ञे तु मधुमद्ये पुमानयम् ॥ १८०७ ॥

१. 'थामे' क. च. पाठः. २. 'त्र' क. च. पाठः. ३. 'तन्धूर्दे' ग. पाठः.
४. 'क्षा' क. ङ. च. पाठः.

दुग्धे फेने च[1] रभसः प्रोक्तवाञ्छब्दवित्तमः ।
शाण्डिल्यस्त्वृषिभेदे ना स्याद् बिले पावकान्तरे ॥ १८०८ ॥
शण्डिलस्य त्वपत्ये द्वे गोत्रे स्त्री तत्र शाण्डिली ।
शारिका तु स्त्रियां शारीसंज्ञे[2] पक्ष्यन्तरे तथा ॥ १८०९ ॥
वाद्यवादनदण्डे च *शाकटस्तु त्रि हिंसके ।
शालेयस्तु पुमाञ्ज्ञेयो मिश्रेयासंज्ञभेषजे ॥ १८१० ॥
चाणक्यमूलकेऽप्याह कश्चित् क्षेत्रे तु भेद्यवत् ।
शाल्युद्भवोचिते क्ली तु चर्मपर्णीसमाह्वये ॥ १८११ ॥
शार्ङ्गष्ठं स्याल्लताभेदे शार्ङ्गष्ठा तु स्त्रियामियम् ।
प्रसिद्धे स्थावरे दासीषडश्रादिपदैरथ ॥ १८१२ ॥
श्यामलोऽश्वत्थवृक्षे ना कार्ष्ण्ये च त्रि तु तद्वति ।
श्यामिका मृगभेदे स्त्री श्यामला षोडशाङ्गुला ॥ १८१३ ॥
श्वेतबिन्दुरिति प्रोक्तं लक्षणं तस्य सा तथा ।
ज्ञेया हेममले ना तु श्यामाकाह्वयधान्यके ॥ १८१४ ॥
श्यामकः शाकटस्तु स्यात् पुमान् पलशतात्मनः ।
तुलासंज्ञस्य मानस्य विंशत्यात्मकभारके ॥ १८१५ ॥
शाकटीनापराभिख्ये यत् तु मानं व्यवस्थितम् ।
उक्ता(द्) दशगुणं तस्मात् तथा दशगुणं हि यत् ॥ १८१६ ॥
तस्माच्च यद् दशगुणं तस्मिन् क्ली भेद्यवत् पुनः ।
शकटैः शकटस्यापि सम्बन्धिनि तथा स्मरेत् ॥ १८१७ ॥
वाहके शकटस्याथ शाकटी स्त्रीति बुध्यताम् ।
अर्थे निदानकारेण प्रयुक्ते शाकरस्तु ना ॥ १८१८ ॥

1. 'तु' ग. ङ. च. पाठः. 2. 'रि' ग. ङ. पाठः.

* 'शारकस्तु' इति पाठः स्याद् अर्थसामञ्जस्यात्, शाकटशब्दस्योपरिष्टाद्वक्ष्यमाणत्वाच्च ।

**वृषभे** शक्करीसंज्ञच्छन्दसि त्वेतदीरितम् ।
क्ली त्रिस्तु शक्करीयोगिन्यथ स्याच्छाम्बरं[1] त्रिषु ॥ १८१९ ॥
शम्बरेण हि सम्बद्धे शाम्बरी तु स्त्रियामियम् ।
मायायामथ पुल्लिङ्गः **श्रावकः** कण्ठजे गुणे ॥ १८२० ॥
गायकानां गुणश्चायं यो दूराच्छ्रावयेद् ध्वनिम् ।
स स्यात् त्रिस्तु भवेच्छ्रोतृश्रावयित्रोरथ द्वयोः ॥ १८२१ ॥
व्याघ्रे सिंहे च **शार्दूलो** ना भागोत्तरवर्धिनाम् ।
हिङ्ग्वादीनां दशानां स्याच्चूर्णेऽथो पुंसि **शाबरः** ॥ १८२२ ॥
लोध्रे क्ली त्वपराधे च पापे च शबरस्य तु ।
सम्बन्धिनि त्रि ना तु स्यान्मासि श्रावणिके तथा ॥ १८२३ ॥
**श्रावणः** श्रावणी तु स्त्री पौर्णमास्यां हि या भवेत् ।
श्रवणाह्वयनक्षत्रयुक्ता तस्यां तथा भवेत् ॥ १८२४ ॥
मुण्डीसंज्ञकभैषज्यस्तम्बेऽथ रभसोऽपठीत् ।
दध्या(दि ? ली)‡संज्ञके वल्लिभेदेऽथ श्रवणस्य यत् ॥ १८२५ ॥
सम्बन्धि तत्र त्रिः शीतगुणे तु **शिशिरः** पुमान् ।
त्रि तु तद्वति शैखाख्ये त्वृतुभेदे नृशण्डयोः ॥ १८२६ ॥
**शिखरो**ऽस्त्री गिरेः शृङ्गे वृक्षाग्रे रभसः पुनः ।
पक्वदाडिमबीजाभमाणिक्यशकलेऽभ्यधात् ॥ १८२७ ॥
पुलकेऽपि स एवाह भेद्यलिङ्गं तु बोधत ।
वर्तुले यत् त्विदं प्रोक्तं कश्चिच्छोभनवाचकैः[2] ॥ १८२८ ॥
बुधैः शिखरशब्दोऽयमित्यसत् तदमूलकम् ।
**शिशुक**स्तु द्वयोर्बाले शिशुमारे तथैव च ॥ १८२९ ॥

१. 'रत्रिषु' ग. ङ. च. पाठः. २. 'कम्' ग. पाठः.

‡ 'दध्याल्यां श्राव(णा ? णी) मता' इति मेदिनी ।

**उलूपी**संज्ञके चापि जलजन्तौ पुमान् पुनः।
द्रुमभेदे स्त्रियां तु स्याच्छिशुका +++++ ॥ १८३० ॥
**शिथिलं** त्वदृढे त्रि स्याच्छिथिली तु स्त्रियामियम्।
वम्रिकासदृशे पिङ्गवर्णे कीटान्तरे भवेत् ॥ १८३१ ॥
अयोमले तु **शिङ्घाणं** क्लीबलिङ्गं प्रतीयताम्।
नासामले तु स पुमान् **शिखण्ड**स्तु पुमानयम् ॥ १८३२ ॥
मयूरपिञ्छे स्त्री तु स्याच्छिखायां हि शिखण्ड्यसौ।
**शिखण्डी** तु द्वयोर्ज्ञेयो मयूरेऽपि च कुक्कुटे ॥ १८३३ ॥
शिखण्डिनी तु स्त्री यूथ्यां गुञ्जायां च पुमान् पुनः।
कलायसंज्ञे धान्येऽपि रभसः प्रोक्तवानमुम् ॥ १८३४ ॥
ऋषिभेदे क्वचिच्चापि पुरुषे भारतश्रुते।
शिखण्डवति तु त्रि स्या**च्छिखरी** तु पुमान् गिरौ ॥ १८३५ ॥
अपामार्गसमाख्ये च स्तम्बे रभस उक्तवान्।
तरौ च स्त्री तु विज्ञेया छन्दस्यत्यष्टिसंज्ञके ॥ १८३६ ॥
वृत्तभेदे शिखरिणी मार्जितासंज्ञके तथा।
संस्कृते तक्रभेदे स्या**च्छीतक**स्त्वलसे त्रिषु ॥ १८३७ ॥
ज्वालाभेदे शीतिका स्त्री **शीकर**स्तु पुमानयम्।
*वाताद्य(स्ते) स्नेह(कणे) हस्त्यायुर्वेदिनः पुनः ॥ १८३८ ॥
हस्तिहस्तसमुद्भूतदानवारिण्यधीयते।
गुणे च शबले शीतगुणे च स्यात् त्रिषु त्वयम् ॥ १८३९ ॥
गुणयोरेतयोरेकयुक्ते स्या**च्छीतल**स्तु ना।
चम्पकाख्ये पुष्पतरौ तथा शीतगुणे त्रि तु ... ॥
तद्वत्यथ स्त्रियां रक्तवर्णायां गवि शीतला।
**श्रीफल**स्तु पुमान् बिल्वे श्रीफली तु स्त्रियामियम् ॥ १८४१ ॥

* 'शीकरं सरले वातसृताम्बुकणयोः पुमान्' इति मेदिनी, 'अथ शीकरः। वातास्त-ऽम्बुकणे' इति हेमचन्द्रः।

नील्याख्यायामोषधौ स्यादामलक्यां तु शब्दवित् ।
रभसोऽथ **श्रीघनः** स्याद् बुद्धे ना क्ली तु दध्नचदः ॥ १८४२ ॥
**श्रीपर्णं** त्वग्निमन्थाख्यस्थावरे कमले च नप् ।
श्रीपर्णी तु स्त्रियां वृक्षे काश्मर्ये कट्फलेऽपि च ॥ १८४३ ॥
**शीर्षण्यं** ‡तु शिरस्त्राणे योधानां शीर्षकाह्वये ।
केशे ¶तु विशदे त्रि स्यान्मुख्ये मूर्धभवेऽपि च ॥ १८४४ ॥
अवैदिकास्तु शब्दज्ञम्मन्याः केचिदधीयते ।
तालव्योष्मादिरस्त्रीति शु(षु? षि)रध्वनिरस्य ते ॥ १८४५ ॥
अर्थं वदन्ति विवरं रभसस्तु नखाह्वये ।
भेषजेऽप्यपठीद् वाद्यभेदे त्वजय उक्तवान् ॥ १८४६ ॥
पाशादिके छिद्रयुक्ते पुनस्त्रिरिति चोक्तवान् ।
एतच्चासाम्प्रतं यस्मात् *(तालव्योष्मादिरेव?) हि ॥ १८४७ ॥
वैदिका अनुमन्यन्ते तस्य चार्थाः पृथक् कृताः ।
**शुनक**स्त्वृषिभेदे ना शुनि द्वे $(तु नृलिङ्गकः?) ॥ १८४८ ॥
मर्त्यजात्यन्तरे विप्राच्छूद्रायां व्यभिचारतः ।
जाते शूलवति त्वेतत् त्रिरथो **शृङ्खला** त्रयी ॥ १८४९ ॥
कटिसूत्रे भवेत् पुंसां पादबन्धनवस्तुनि ।
अपि स्याद् दन्तिनां ना तु **शृङ्गारः** स्याद् रसान्तरे ॥ १८५० ॥
नवानां नाट्यविख्यातरसानामुज्ज्वलाह्वये ।
गजमण्डनभेदे च क्लीबं तु रभसोऽपठीत् ॥ १८५१ ॥
लम्पटे चापि सिन्दूरचूर्णे चाथ नपुंसकम् ।
**शृङ्गाटं** यन्त्रभेदे च योधानां स्याच्चतुष्पथे ॥ १८५२ ॥

१. 'छ्रा' ङ. च. पाठः. २. 'ष्क' ग. पाठः.

‡ 'क्ली' इति स्यात् । ¶ 'ना' इति स्यात् । * 'दन्तजोष्मादिमेव' इति पठितव्यं भाति । $ 'ना तु शूलिकः' इति स्यात् ।

पुल्लिङ्गं तु विजानीयात् स्तम्बे सलिलसम्भवे ।
दन्तबीज इति ख्याते शृङ्गारी तु पुमानयम् ॥ १८९३ ॥
पूगवृक्षे सुवेषे तु त्रिरथो श्लेष्मलः पुमान् ।
गोधूमधान्ये त्रिषु तु श्लेष्मवच्छ्लेष्मकारिणोः ॥ १८९४ ॥
श्लेष्मघ्नी तु स्त्रियामुक्ता पिण्यामल्ल्योर्मनीषिणा ।
रभसेन त्रिषु त्वेष श्लेष्मणो हन्तरि स्मृतः ॥ १८९५ ॥
शैलूषस्तु नटे द्वे स्यात् कितवे च पुमान् पुनः ।
शण्डजातौ च बिल्वे च शैशवं तु नपुंसकम् ॥ १८९६ ॥
शिशुत्वेऽप्युभयोः साम्नोरुच्चैतागीतयोस्त्रि तु ।
शिशुसम्बन्धिनि क्ली तु शैलेयं तार्क्ष्यशैलके ॥ १८९७ ॥
कालानुसार्यसंज्ञे च धातुभेदे तथैव तत ।
सिन्धूत्थलवणे द्वे तु मधुपे स्यात् त्रिषु त्वतः ॥ १८९८ ॥
शैवली शैवलवति स्त्री तु शैवलिनी धुनौ ।
शैलाटस्तु द्वयोः सिंहे किराते च पुमान् पुनः ॥ १८९९ ॥
देवले शुक्लकाचे च रभसेनेदमीरितम् ।
अथ क्ली शोभनं हेम्नि धातोरर्थे च शोभ(ने ! तेः) ॥ १८६० ॥
त्रि तु स्यात् सुन्दरे क्ली तु शोधनं शुद्धिकर्मणि ।
अना तु शोधयत्यर्थे शोधना ना तु शोधनः ॥ १८६१ ॥
अङ्कोलवृक्षे स्त्री तु स्यात् सम्मार्जन्यां हि शोधनी ।
त्रिस्तु स्यात् साधने शुद्धेः शोषकस्तु पुमानयम् ॥ १८६२ ॥
वास्तुदेवविशेषे स्यात् कोष्ठश्रेणौ हि पश्चिमे ।
आरभ्य दक्षिणात् कोष्ठात् कोष्ठे तिष्ठति सप्तमे ॥ १८६३ ॥
यस्तत्र त्रिः पुनः शोष्टृशोधयित्रोरयो पुमान् ।
करञ्जभेदे षड्ग्रन्थः षड्ग्रन्था तु स्त्रियामियम् ॥ १८६४ ॥

१ 'का' क. ख. पाठः. २. 'का' ग. पाठः. ३. 'तु' च. पाठः.

भेषजे पिप्पलीमूलसंज्ञे स्यादपरे पुनः ।
आहुः शुक्लवचायां तां वचामात्रे परे विदुः ॥ १८६५ ॥
शव्यां चाथ **षडश्रा** स्त्री स्यान्नागलकपादपे । ·
प्रसिद्धे चापि शार्ङ्गाष्ठादासीप्रभृतिभिः पदैः ॥ १८६६ ॥
स्थाव(रैः स्त्री ? रे त्रि) तु षट्कोणे **षाडवस्तु** पुमानयम् ।
गतिप्रभेदे स्यादम्लमधुरोन्मिश्रिते रसे ॥ १८६७ ॥
एतद्रससमायुक्तं यत् तत्रायं त्रिषु स्मृतः ।
**षाण्मासी** तु स्त्रियां श्राद्धे कर्तव्ये मासि सप्तमे ॥ १८६८ ॥
प्रेतस्य त्रि तु सम्बद्धे षण्मास्याः **षाष्ठिकं** तु नप् ।
व्रतभेदे षष्ठकालभोजने च प्रवर्तते ॥ १८६९ ॥
मेध्यवत् तु क्रतुहुतषष्ठाहभववस्तुनि ।
**सर्वज्ञो** ना महादेवे बुद्धेऽप्यर्हेऽथ मेध्यवत् ॥ १८७० ॥
सर्ववेदिन्यथो पुंसि **समयो** नाम चाकरे ।
सङ्केताचारसिद्धान्तकालेषु शपथे तथा ॥ १८७१ ॥
क्रियाकारे चाजयस्तु ब्रूते निर्देशसम्पदोः ।
भाषायां च वयं त्वेनं ब्रूमहे सङ्गमे नरि ॥ १८७२ ॥
**सङ्गरस्तु** प्रतिज्ञायां क्रियाकारे च नापदि ।
युद्धे विषे तु रभसः क्लीबं तु स्याच्छमीफले ॥ १८७३ ॥
**सगरस्तु** पुमान् पूर्वराजभेदे त्रपि त्वदः ।
व्योम्नि त्रिर्गरलेन स्यात् सहितेऽथ नृलिङ्गकः ॥ १८७४ ॥
**सन्नाह्यः** कुञ्जरे युद्धयोग्येऽथो मेध्यलिङ्गकः ।
सन्नद्धव्ये **स्पन्दनं** तु क्ली किञ्चिच्चलनेऽथ[3] ना ॥ १८७५ ॥
तिमिशाख्यद्रुमे क्ली तु **स्यन्दनं** स्रवणे जले ।
रथे तु ना स्यन्दनी तु स्त्रीलिङ्गा स्याद् ग्रहभ्रमे ॥ १८७६ ॥

१. 'षष्ठ्यां चा' ग. च. पाठः. २. 'गृ' ङ. पाठः. ३. 'ने तथा' ग. पाठः.

**स्पर्शनं** तु नपि स्पृष्टौ दाने च प(त?व)ने तु ना।
अना तु स्पर्शयत्यर्थे स्पर्शना परिकीर्तिता ॥ १८७७ ॥

$**सर्गकं** त्वतिबाले स्याद् (बध्नी? दध्नि)* यत्रोप्तमात्रकम्।
संयावनं तत्र भेद्यलिङ्गं तु स्रष्टरि स्मृतम् ॥ १८७८ ॥

अथात्र रभसः प्राह पुल्लिङ्गे वचनं यथा।
नालिकेरस्य सस्याभमणौ खड्गे च **सस्यकः** ॥ १८७९ ॥

भागवृत्तिकृता तूक्तं सस्यसम्पन्नवस्तुनि।
व्रीहिशाल्यादिकेष्वेव स्थावरेष्वत्र भेद्यवत् ॥ १८८० ॥

यत् त्विदं गुणसम्पन्ने जयादित्येन भाषितम्।
अतिलोकतया तस्य विरसत्वादुपेक्षितम् ॥ १८८१ ॥

**संहितं** तु त्रि संश्लिष्टे संहिता तु क्रियामियम्।
शास्त्रग्रन्थजातिभेदे वेदभागेऽपि च क्वचित् ॥ १८८२ ॥

अतीव सन्निकर्षे च वर्णानां क्ली तु सामनि।
षष्ठे च नवमे चैव स्वादिष्ठावर्गगामिके ॥ १८८३ ॥

**सप्तकस्तु** पुमान् सङ्घे सप्तानां क्ली तु सप्तकम्।
मृगयाक्षादिषु स्त्री तु सप्तकी काञ्चिदामनि ॥ १८८४ ॥

**सप्तमं** तु त्रि सप्तानां पूरणे सप्तमी पुनः।
स्यात् सप्तमविभक्तौ च दुर्गादिव्याप्तिगावपि ॥ १८८५ ॥

सङ्कोचने तु **सङ्कोचः** पुमान् क्लीबं तु कुङ्कुमे।
**सम्बाधस्तु** भगे स्त्रीणां पुमान् मेढ्रे च सज्जनः ॥ १८८६ ॥

कारायां सङ्कटेऽन्ये तु सङ्कटे त्रिषु मन्यते।
**संस्कृतं** त्वाहितोत्कर्षे कृत्रिमे निर्मलीकृते ॥ ...

1. 'मात्रे स्या' ग. पाठः. २. 'प' ...

$ सर्जकमिति स्यात्। * 'संयावने तूप्तमात्रे प्राङ्मन्दात् सर्जकं दधि' (पृ. १३४. श्लो. ) इति वैजयन्ती।

त्रिषु स्याल्लक्षणोपेते भाषाभेदे तु पण्डिताः ।
नपुंसकं विजानन्ति **संसर्प**स्तु पुमानयम् ॥ १८८८ ॥
अहीनक्रतुभेदे स्यात् संसृप्तौ च नपि त्वदः ।
महासर्पसमाख्येषु सामसु स्याद् दशस्वपि ॥ १८८९ ॥
**सञ्जय**स्तु पुमाञ्ज्ञेयः पुरुषे भारतश्रुते ।
क्लीबं तु सामभेदे स्यादिन्द्रत्नरऋचि स्थिते ॥ १८९० ॥
विश्वाधनानीत्यारभ्य तथाहीनमखान्तरे ।
**सहस्रं** पुनरस्त्री स्याच्छतानां दशके भवेत् ॥ १८९१ ॥
बहुन्यपि **सहाय**स्तु द्वे सख्यौ त्रि तु सेवके ।
**सर्वौघ**स्तु पुमान् राज्ञां सर्वसन्नहनेऽथ नप् ॥ १८९२ ॥
मधुभेदे समासानां भेदाल्लिङ्गादि योजयेत् ।
**समङ्ग**स्तु त्रि मङ्गेन सहितेऽथ नृलिङ्गकः ॥ १८९३ ॥
प्राणिद्यूते समङ्गा तु स्त्री नमस्कारिकाह्वये ।
आनूपवल्लिस्तम्बे स्यात् क्षुद्रेऽथ **सचिवः** पुमान् ॥ १८९४ ॥
मन्त्रिणि स्यात् सहाये च चेटे चेत्यथ **संवृतम्** ।
क्लीबं संवरणे वर्णधर्मभेदे च तत् त्रि तु ॥ १८९५ ॥
तद्वतिच्छादिते चाथ **सवनं** क्लीबलिङ्गकम् ।
सोमाभिषवणे स्नाने काण्डेऽथो शाकटायनः ॥ १८९६ ॥
आह कालविशेषेऽमुं स्यात् प्रातस्सवनादिषु ।
यज्ञस्य ना तु यागेऽथ वनेन सहिते त्रिषु ॥ १८९७ ॥
**संहारो** नरकस्य स्याद् भेदे संहरणे च ना ।
स्यान्महाप्रलये चाथ स्त्री संहारी कर + + * ॥ १८९८ ॥

१. 'च त्र्यथ' ङ. पाठः.

* 'सन्धिस्तु कुड्यच्छिद्रेषः कावातायनिका कला । अश्वशाला तु संहारी' (पृ. १६२. श्लो. ३८) इति वैजयन्ती ।

**सरको**ऽस्त्री मणौ शीधुपाने चषकशीधुनोः ।
भेद्यवत् तु भवेत् साधु सर्तय्यथ **सगोत्र**वाक् ॥ १८९९ ॥

एकगोत्रे द्वयोस्त्रिस्तु गोत्रेण[3] सहितेऽथ नपु ।
**सहजं** स्यात् स्वभावे क्लीपुंस्येनं रभसोऽभ्यधात् ॥ १९०० ॥

सहोत्पन्ने विजानीयात् **सग**(र्ह्य? र्भ्य) चापि भेद्यवत् ।
अथात्र धीरैः **सन्दष्ट**शब्दः पुंसि प्रकीर्तितः ॥ १९०१ ॥

गाथकानां कण्ठदोषभेदे सम्मिश्ररूपके ।
त्रिस्तु सन्दंशनस्य स्यात् कर्मभूते तथैव च ॥ १९०२ ॥

यमकस्य प्रभेदे च **सरट**स्तु द्वयोरयम् ।
कृकलासे स्त्रियां तु स्यात् सरटी नीलिकाह्वये[3]* ॥ १९०३ ॥

लोहभेदेऽथ **सरलः** पूतिकाष्ठाह्वयद्रुमे ।
पुमान् विदग्धे तु त्रि स्यादृजौ च प्रियवादिनि ॥ १९०४ ॥

पुनर्हर्षः समाचष्टे **सरण्ड**स्तु पुमानयम् ।
तृणानां समवायेऽथ कृमिजात्यन्तरे द्वयोः ॥ १९०५ ॥

**स्तम्बजं** तु क्लीबलिङ्गमुशीरे भेद्यवत् पुनः ।
स्तम्बजातेऽथ पुंसि स्यात् **स्रवणः** कतकाह्वये ॥ १९०६ ॥

वृक्षे क्ली तु स्रुतौ क्ली तु **सलज्जं** स्यात् सुगन्धिके ।
स्तम्बे दमनकाख्ये स्याल्लज्जावति तु भेद्यवत् ॥ १९०७ ॥

**समुद्र**स्तु पुमानब्धौ छन्दस्युत्कृतिसंज्ञके ।
आकाशे च तथा सङ्ख्याभेदे चैवंविधः स च ॥ १९०८ ॥

†शताद् दशगुणं या स्यात् सङ्ख्या यत्र त्रयोदश ।
शाश्वतस्तु नपि प्राह समुद्रं देहलक्षणे ॥ १९०९ ॥

१. 'नैश्च स' क. ङ. च. पाठः. २. 'नु' क. ङ. च. पाठः. ३. 'ल' क. च. पाठः.

* 'मीलिकायां तु सरटी' (पृ. ४३. श्लो. २७) इति तु वैजयन्ती । † 'अथ परे दशगुणोत्तराः । शतं सहस्रमयुतं नियुतं प्रयुतार्बुदे । न्यर्बुदं बृन्दखर्वे च निखर्वं शङ्खमम्बुजम् । समुद्रो मध्यमन्तं च परार्धं च यथाक्रमम् ।' (पृ. १८८. श्लो. २७. २८. २९) इति वैजयन्ती.

त्रिस्तु स्यान्मुद्रया युक्ते **समुद्रस्तु** पुमानयम् ।
सम्पुटे त्रिस्तु सहिते मुद्रेनाथ नपुंसकम् ॥ १९१० ॥
शरस्यारोपणे चापे **सन्धानं** काञ्जिकादिनः ।
अभिषुत्यां काञ्जिके च श्लेषणे चाथ सा स्त्रियाम् ॥ १९११
सन्धानी रूप्यशालायां वार्ताक्याश्च तथान्तरे ।
गिरिप्रियासमाख्येऽथ भेद्यवत् सन्धिसाधने ॥ १९१२ ॥
**समानस्तु** पुमान् वायुभेदे देहान्तरस्थिते ।
त्रिस्तु साध्वेकतुल्येषु मानेन सहिते तथा ॥ १९१३ ॥
**सज्जनस्तु** पुमान् साधौ कुलीने भेद्यलिङ्गकम् ।
क्लीबं तु रभसो ब्रूत उपरक्षणघट्टयोः ॥ १९१४ ॥
स्त्रियां तु सज्जना हस्तिकल्पनायामथो पुमान् ।
**सर्षपस्त्वोषधीभेदे** तुन्तुभाख्ये स्त्रियां पुनः ॥ १९१५ ॥
सर्षपी फलिनीसंज्ञवृक्षे व्याघ्यन्तरे तथा ।
**स्वस्तिकस्तु** पुमान् गेहवास्तुविन्यसनान्तरे ॥ १९१६ ॥
त्रिकोणसंज्ञके चापि स्त्रीणां स्याद् भूषणान्तरे ।
मुनिषण्णाह्वये शाकस्तम्बे पङ्कसमुद्भवे ॥ १९१७ ॥
द्वे तु चाषसमाख्ये स्यात् पक्षिभेदेऽथ पुंस्ययम् ।
**स्वरितः** स्वरभेदे स्यादुच्चनीचद्वयात्मके ॥ १९१८ ॥
त्रि तु तद्वत्यपि स्याच्च स्वर्गते स्व(रस?सर)ऽस्तु ना ।
भ्रातरि क्ली तु दिवसे गेहे चाथ द्वयोरयम् ॥ १९१९ ॥
**सवर्णो** ब्राह्मणाज्जाते क्षत्रियायां विवाहतः ।
मर्त्यजात्यन्तरे त्रिस्तु मर्त्ये स्यादेकवर्णके ॥ १९२० ॥

१. 'न्द' क. ख. पाठः.

...सरो भ्राता' (पृ. १७५. श्लो. ३१) इति वैजयन्ती

तुल्यवर्णकमात्रे च **संक्रमस्त्व**स्त्रियामयम् ।
स्याद् दुर्गसञ्चरे ना तु पूर्वाधिष्ठितमाश्रयम् ॥ १९२१ ॥
उज्झित्वान्याश्रयप्राप्तौ शब्दशास्त्रविदामपि ।
गुणवृद्धिनिषेधस्य निमित्ते प्रत्यये तथा ॥ १९२२ ॥
अथात्र पठ्यते सद्भिः पुन्नपुंसकयोरयम् ।
**सङ्गमो** मेलके ना तु व्रतभेदे तपस्विनाम् ॥ १९२३ ॥
पञ्चरात्रं पयःपाने **सङ्ग(म?त)***स्तु पुमानयम् ।
दिवसस्य विभक्तस्य चतु(र्थां?र्थां)शे द्वितीयके ॥ १९२४ ॥
पञ्चरात्रपयःपानव्रतेऽथ मिलिते त्रिषु ।
**सङ्करो**ऽग्निचटत्कारे सम्मार्जन्यवपुञ्जिते ॥ १९२५ ॥
सङ्कीर्णे **सङ्करी**† तु स्त्री कन्याभेदे नृदूषिते[1] ।
‡**सहर्ष**स्तु पुमान् वायौ त्रि स्पर्धनसमानयोः ॥ १९२६ ॥
**सरणि**स्तु पुमान् सूर्ये स्त्री तु स्यात् पङ्क्तिमार्गयोः ।
सङ्घाते च सिरायां च **संक्राति**स्तु पुमानयम् ॥ १९२७ ॥
ऋषिभेदे द्वयोस्तु स्यात् तद्वंश्येषु स्त्रिया पुनः ।
षण्णवत्यक्षरे छन्दोभेदेऽपि द्वादशाक्षरे ॥ १९२८ ॥
क्ली त्वारण्यकसाम्नि स्यात् स्वादोरित्थेत्यृचि स्थिते ।
**समाधि**स्तु पुमान् ध्याने नीवाके च समर्थने ॥ १९२९ ॥
प्राणिद्यूते प्रतिज्ञायां तुल्यत्वे भेद्यवत् पुनः ।
सम आधिर्भवेद् यस्य तत्र स्यात् तु द्वयोरयम् ॥ १९३० ॥

1. 'दोषे नृ' क. ङ. च. पाठः.

* 'पञ्चरात्रं पयःपानं सङ्गमः सङ्गतश्च [illegible] श्लो. १४७) इति, 'दिनादौ प्राह्णपूर्वाह्णौ ततः सङ्गतसङ्गवौ' (पृ. २२. श्लो. ६[illegible] वैजयन्ती । † 'सङ्कारी भुक्तकन्यायाम्' इति तु हेमचन्द्रः, 'नवदूषितकन्यायां सङ्कारी पुनरुच्यते' इति मेदिनी च । ‡ 'संहर्षस्तु प्रमोदेऽपि स्पर्धायां च प्रभञ्जने' इति तु मेदिनी, 'सहर्षः पवने मुदि । स्पर्धायां च' इति हेमचन्द्रश्च ।

**सनाभिर्हि** सपिण्डेऽन्ये सोदर्येऽथाङ्गुलौ स्त्रियाम् ।
त्रिर्नाभिसहिते ना तु **सरण्युर्वायुमेघयोः** ॥ १९३१ ॥
स्त्री तु + + + + + + + + + + + + + + + ।
**स्वयम्भूस्तु** विरिञ्चे ना क्ली स्वयम्भु विहायसि ॥ १९३२ ॥
**सरस्वांस्तु** समुद्रे ना नदे चाथ नपुंसकम् ।
धनञ्जयेन पठितमाकाशेऽथ स्त्रियामियम् ॥ १९३३ ॥
सरस्वती नदीभेदे नदीमात्रे च वाचि च ।
गङ्गायां गवि मेदिन्यां स्त्रीरत्ने च वचस्यपि ॥ १९३४ ॥
तथा तृणलतास्तम्बे मत्स्याक्षीसंज्ञकेऽपि सा ।
मत्स्याक्षी चापि विज्ञेया ब्राह्मीति प्रथिता लता ॥ १९३५ ॥
भेद्यलिङ्गं तु रसिके रभसेन समीरितम् ।
सरोयुक्ते च जानीयात् सत्ययुक्ते तु **सत्यवत्** ॥ १९३६ ॥
त्रिषु सत्यवती तु स्त्री वेदव्यासस्य मातरि ।
ब्राह्मीसंज्ञतृणस्तम्बेऽप्यथ **सारङ्ग** इत्ययम् ॥ १९३७ ॥
पुमान् शबलवर्णे स्याद् भेद्यलिङ्गं तु तद्वति ।
स्त्र्यर्थे तत्रापि सारङ्गी द्वे तु चातकभृङ्गयोः ॥ १९३८ ॥
कुञ्जरे कृष्णसाराख्यमृगभेदे च ना पुनः ।
**सारसो** यामिनीनाथे क्लीबं तु सरसीरुहे ॥ १९३९ ॥
द्वे तु पुष्करसंज्ञे स्यात् पक्षिभेदेऽथ **सात्त्विकम्** ।
त्रिषु सत्त्वेन निर्वृत्ते सात्त्विकी तु स्त्रियामियम् ॥ १९४० ॥
नाट्यवृत्तिविशेषाणां कैशिकीत्यादिसंज्ञिनाम् ।
वृत्तौ कस्यामपि द्वे तु **सात्त्वतः*** प + + + + ॥ १९४१ ॥
क्षत्रपूर्वकवैश्यायां व्रात्याज्जाते नरान्तरे ।
सत्त्वतश्च तथापत्ये बलभद्रे तु पुंस्ययम् ॥ १९४२ ॥

* 'पूजके हरेः' इति पूरणीयं स्यात् । तथा च वैजयन्ती 'सात्त्वतः पूजयेद्विष्णुमुक्तो भागवतश्च सः ।' (पृ. ८०. श्लो. १०५)

**साधनं तु** धने शेफे सिद्धावनुगतौ गतौ ।
मारणे मृतसंस्कारेऽप्युपायेऽप्यर्थदापने ॥ १९४३ ॥

सेनाङ्गे यातनायां च **क्लीबं** स्यादपुमान् पुनः ।
निर्वर्तनायां मन्त्रादेरभीष्टफलदीकृतौ ॥ १९४४ ॥

साधनं साधना चेति रूपद्वयमिह स्मरेत् ।
**साहसं** (तु ? त्व)स्त्रियां दण्डशब्दपर्यायके दमे ॥ १९४५ ॥

क्ली तु तत् स्याद् बलात्कारे वयं तु ब्रूमहे परम् ।
अतर्कितप्रवृत्तौ च साहसं क्लीत्यथाजयः ॥ १९४६ ॥

कृतकार्ये त्रिरित्येवं **साहस्रं** तु नपुंसकम् ।
सहस्राणां समूहेऽथ त्रिः सहस्रवति स्मृतम् ॥ १९४७ ॥

सहस्रेण च निर्वृत्त एकाहक्रतुपु स्वयम् ।
चतुर्षु पुंसि साहस्रः **सामज**स्तु द्वयोर्गजे ॥ १९४८ ॥

त्रि तु सामसमुद्भूते **सावन**स्तु पुमानयम् ।
संवत्सरविशेषे स्यात् षष्टित्रिशतवासरे ॥ १९४९ ॥

सवनस्य तु सम्बन्धिन्येष त्रिः सहिते तथा ।
अवनेनाथ **सामुद्र**मब्धिसम्बन्धिनि त्रिषु ॥ १९५० ॥

क्ली देहलक्षणेऽथ त्रिः **सावित्रः** सवितुर्भवेत् ।
सम्बन्धिनि स्त्रियां तु स्यात् सावित्री द्विजविश्रुते ॥ १९५१ ॥

विश्वामित्रेण दृष्टे स्याद्दृग्भेदेऽनामिकाङ्गुलौ ।
**सायक**स्तु शरे खड्गे वज्रे ना त्रिस्तु [illegible] ॥ १९५२ ॥

**सारिका** तु स्त्रियां काश्यवीणाशब्देन विश्रुते[1] ।
वीणाभेदे त्रिषु त्वेष सारकः सर्तरि स्मृतः ॥ १९५३ ॥

---

[1] "काण्डवीणा कुवीणा च ढक्कारी किन्नरीति च । सारिका कुङ्खुणी चाथ" (पृ. १४६. श्लो. १२८) इति तु वैजयन्ती ।

तथा सारयितर्येष **सारणी** तु स्त्रियामियम् ।
ग्रन्थे पद्यात्मके ना तु सारणो †[1]वरुणात्मजे ॥ १९५४ ॥
शरद्वायौ चापुमांस्तु सारणा सारिकर्मणि ।
**स्थायुक**स्तु त्रिषु स्थास्नौ ना तु ग्रामाधिकारिणि ॥ १९५५ ॥
**स्थापनी** तु स्त्रियां पाठासंज्ञवल्ल्यामना पुनः ।
स्थापना स्थापयत्यर्थे त्रि तु तत्साधनेऽथ ना ॥ १९५६ ॥
(सित ? स्यात् )सर्षपे च **सिद्धार्थो** बुद्धेऽर्थेन युतेऽ[2](द्य ? न्य)वत्
**सिताभ्र**स्तु स कर्पूरे ना क्ली त्वभ्रे सिते स्मृतः ॥ १९५७ ॥
**सिध्मला** तु स्त्रियां मत्स्यविकृतौ रभसोदिता ।
कस्याञ्चिदोषधावन्ये त्रि तु सिध्मवति स्मृतः ॥ १९५८ ॥
**सिंहास्य**स्त्वटरूषे ना सिंहस्य तु मुखे नपि ।
**सलम्ब**स्त्वृषिभेदे ना तन्तुवाये पुनर्द्वयोः ॥ १९५९ ॥
**सिलिन्ध्र**स्तु पुमान् वृक्षभेदे छत्राक एव च ।
छत्राकं तु नपि प्राह रभसोऽथ द्वयोरयम् ॥ १९६० ॥
मत्स्यभेदे नपि त्वेतत् कदलीकुसुमे तथा ।
सिलिन्ध्रवृक्षप्रसवे स्त्री तु गण्डूपदीसृदि ॥ १९६१ ॥
**स्त्रीप्रिय**स्तु पुंमानाम्रपादपेऽशोकपादपे ।
क्ली तयोः प्रसवे त्रिस्तु वधूर्नाली तथा नवत् ॥ १९६२ ॥
स्त्रीणां प्रिये **सीमिकं** तु क्ली वल्मीके तथा तरोः ।
शाखायां च द्वयोस्त्वेष विज्ञेयः सल्लिकिमौ ॥ १९६३ ॥
**सीदुगुण्ड**स्तु पुमान् स्नुह्यां मत्स्यजात्यन्तरे पुनः ।
पराजक्यां द्वयोर्जाते ब्राह्मणात **रांवनी** पुनः ॥ १९६४ ॥

1. 'रावणात्म' ग. पाठः. 2. 'त भेऽवन् ।' ङ. च. पाठः.

† 'सारणो राक्षसान्तरे' इति मेदिनी । * 'सीहुण्ड' इति त्वमरसिंहः

स्त्रियामुपस्थस्याधस्तात्सूत्रे सूच्यां च नप् पुनः ।
स्यूतौ सीवनमेतच्च केषाञ्चिन्मतमीरितम् ॥ १०६५ ॥
अथो परमशोभायां सुषमा स्त्री त्रि सुन्दरे ।
सुषिरं तु नपिच्छिद्रे वैजयन्त्यां समीरितम् ॥ १०६६ ॥
वाद्यभेदे च वंशादौ सुषियुक्ते तु भेद्यवत् ।
स्याद् विद्रुमलतायां तु सुषिरा स्त्री नटे तु ना ॥ १०६७ ॥
सर्पाण्डे तु सुनारो ना शुनीस्तनपयस्यपि ।
विद्याच्छोभननारादौ समासादीनि पूर्ववत् ॥ १०६८ ॥
गरुडे तु सुपर्णो ना किरणे च द्वयोः पुनः ।
अश्वे गरुडवे(द्) ज्ञेयः पक्षिजात्यन्तरेऽथ सा ॥ १०६९ ॥
सुपर्णी विनतायां स्त्री सुवर्णस्त्वस्त्रियामयम् ।
हेम्नि हेम्नश्च कर्षे‡ + + + ++ ++ स्त्रियाम् ॥ १०७० ॥
सुकन्दस्तु पलण्डौ ना त्रि तु शोभनकन्दके ।
सुव्रता सुखसन्दोह्या या गौस्तत्र स्त्रियां त्रि तु ॥ १०७१ ॥
सद्व्रते †सुवहा तु स्त्री सल्लकीरास्नयोरपि ।
शेफालिकायामपि च तथा गोधापदीति या ॥ १०७२ ॥
ओषधि + + + + + + + + + सुकेश्यसौ ।
स्त्रियां स्यादप्सरोभेदे त्रि तु शोभनमूर्धजे ॥ १०७३ ॥
क्ली तु स्यात् सुकृतं पुण्ये सत्क्रियायां च तत् त्रि तु ।
कृते सुष्ठु पुमांस्तु स्याद् बुद्धे सुगत इत्ययम् ॥ १०७४ ॥
त्रि शोभनगते क्ली तु (सुरूपं शाल्मलीफले) ।
स्त्रियां तु मल्लिकाभेदे सुरूपा वेश्यसंज्ञके ॥ १०

१. 'च' ग. पाठः. २. 'वि' ग. पाठ

‡ 'स्यात् क्रतुभेदे तु सा' इति धरणीस्थ मान । 'सुवर्णा च मखान्तरे' इति विश्वः ।
† 'सुवहा सल्लक्येलापर्णीगोधापदीषु वीणायाम् ।
रास्नाशेफालिकयोः स्त्री सुखवाह्येऽन्यलिङ्गः स्यात् ॥' इति मेदिनी ।

**सुलभं** तु त्रिष्वयत्नलभ्ये ना तु द्विजन्मनाम् ।
विज्ञेयः पाकयज्ञाग्नौ **सुनीथ**स्तु पुमानयम् ॥ १९७६ ॥

पूर्वे राजनि कस्मिंश्चित् कश्चित् त्वाह + + + + ।
+ + + + + + + + + **क्र**भेदे यदाह्वयः ॥ १९७७ ॥

बीजपूर इति त्रिस्तु बहुव्रीहावथो पुमान् ।
**सुपार्श्वो** गर्दभाण्डाख्यपादपे सम्प्रकीर्तितः ॥ १९७८ ॥

मेरोरुत्तरविष्कम्भपर्वतेऽप्यथ भेद्यवत् ।
बहुव्रीहौ **सुगन्ध** + + + + + + + + + + ॥ १९७९ ॥

+ + + + + वायां च **सुभिक्षा** तु स्त्रियामियम् ।
धातकीसंज्ञके वृक्षे त्रिस्त्वनाढ्येऽथ नप्यदः ॥ १९८० ॥

**सुनालं** रक्तकुमुदे बहुव्रीहौ तु भेद्यवत् ।
अथो लताबृ + + + + + + + + + + + + ॥ १९८१ ॥

+ + + + क्ष्यतनयनागराजविशेषयोः ।
**सुराष्ट्रः** पीतमुद्गे ना न स्त्री राष्ट्रे हि शोभने ॥ १९८२ ॥

नीवृद्भेदे तु पुंभूम्नि सुराष्ट्राः पश्चिमोदधेः ।
समीपे **सुरसा** तु स्त्री महाजम्बूसमाख्यके ॥ १९८३ ॥

जम्बु + + + + + + + + + + + + + + + ।
**सुषेण**स्तु पुमान् विष्णौ करमर्दाख्यपादपे ॥ १९८४ ॥

सुग्रीववैद्येऽप्याहैनं रभसो नप् प्रसूनके ।
करमर्दतरोः क्लीबं सुषेणा तु स्त्रियामियम् ॥ १९८५ ॥

कृष्णत्रिवृत्समाख्यायां लतायामथ सा स्त्रियाम् ।
**सू** + + + + + + + + + + + + + + + ॥ १९८६ ॥

वास्तुदेवविशेषे च कोष्ठश्रेणौ हि पश्चिमे ।
आरभ्य दक्षिणात् कोष्ठात् तृतीये तत्र यः स्थितः ॥ १९८७ ॥

ग्रीवायां शोभनायां स्त्री बहुव्रीहौ तु भेद्यवत् ।
**सुगन्धिस्तु** पुमान् सूक्ष्म + + + + + + + + के ॥ १९८८ ॥
वास्तुदेवविशेषे च + + + + + + + श्रुतः ।
कलमाले च गन्धे च तत्र यो घ्राणतर्पणः ॥ १९८९ ॥
त्रि तु तद्वति चारौ च श्रेष्ठे च स्यात् स्त्रियां पुनः ।
+ + + + + + वह्नौ स्यात् तथा चैत्रवसन्तयोः ॥ १९९० ॥
रभसश्चम्पके जातिफले चापि बहु + + ।
+ + + + + + + + भेद्यवच्छस्तपर्वते ॥ १९९१ ॥
**सुमना** तु स्त्रियां ज्ञेया मालत्यां कुसुमे पुनः ।
स्त्रीभूम्नि स्यात् सुमनसस्त्रि तु स्याच्छुभचेतसि ॥ १९९२ ॥
पण्डिते च द्वयोस्तु स्याद् देवे क्ली तु शुभे हृदि ।
**सुमेधा तु** स्त्रियां ज्ञेया + + + + + + + + + ॥ १९९३ ॥
गृहस्योपरिभूमौ या स्थूणा तस्यामथ त्रिषु ।
**सूचकः** पिशुने हस्तभ्रूभङ्गाद्यैश्च बोधके ॥ १९९४ ॥
द्वे तु श्वक्रोष्टुकाकेषु सूचना तु न ना भवेत् ।
रभसस्त्वाह वृष्टौ च गन्धने च विचक्षणः ॥ १९९५ ॥
**व्यथने** + + + + + + + + + + + + + ।
+ + + + + + + + + + + + रभसस्त्विदम् ॥ १९९६ ॥
जन्मन्यप्याह सततं नृनपोराह पारदे ।
स्त्रियां तु स्यात् प्रसूतायां **सूतका सूतिका**पि च ॥ १९९७ ॥
**सृणीक**स्त्वम्न्यशन्योर्ना सृणीका तु स्त्रियामियम् ।
लालायां त्रिषु तूंन्मत्ते **सृमरस्तु** मृगान्तरे ॥ १९९.. ॥
द्वे त्रिस्तु गत्वरे + + **सृगालस्तु** पुमानयम् ।
दैत्यभेदे द्वयोः क्रोष्टौ (ध ? ड)*मरे तु स्त्रियामियम् ॥ १९९९ ॥

---

* 'शृगालो वञ्चके दैत्यभेदे ना डमरे स्त्रियाम् ।' इति मेदिनी ।

इत्याह रभसो ना तु **सृदाकुः** पावके मतः ।
गोत्रकृत्यृषिभेदे च शकुनौ तु द्वयोरयम् ॥ २००० ॥

क्ली तु तोये **सेवनं** तु क्लीबं स्यात् स्यूतिसेवयोः ।
अना तु सेवयत्यर्थे सेवना **सेवकः** पुनः ॥ २००१ ॥

स्यूते प्रसेवसंज्ञे ना त्रि तु सेवितरि स्मृतः ।
**सेनानी**स्तु पुमान् स्कन्दे त्रि तु सेनापतौ स्मृतः ॥ २००२ ॥

**स्वेदनी** तु स्त्रियां कन्दुसंज्ञभाण्डे नपि त्वदः ।
स्वित्तौ स्यात् स्वेदनं नपुंस्त्री पुनः स्यात् स्वेदना तथा ॥ २००३ ॥

अर्थे स्वेदयतेरस्त्री पुनः स्याल्लवणोत्तमे ।
**सैन्धवं** पुंसि तु प्राहुर्धीमन्तस्तज्जयद्रथे ॥ २००४ ॥

द्वे त्वश्वेऽश्वप्रभेदे च सिन्धुदेशजमानुषे ।
क्ली तु वस्त्रे च जाले च राष्ट्रे चाह त्रिषु त्वयम् ॥ २००५ ॥

सिन्धुसम्बन्धिनि द्वे तु **सैरिन्ध्रो** मानुषान्तरे ।
दस्योरायोगवीजाते सैरिन्ध्री तु स्त्रियामियम् ॥ २००६ ॥

परवेश्मस्थिता या स्त्री स्ववशा शिल्पकारिका ।
तस्यामथाह रभसो नामार्थज्ञानकोविदः ॥ २००७ ॥

तां स्त्रीमतल्लिकायां च **सैकतं** तु त्रिषु स्मृतम् ।
सिकतावति नपु तु स्यात् पुलिने सिकतामये ॥ २००८ ॥

**सैरिक**स्तु पुमान् स्वर्गे त्रिस्तु सीरस्य योगिनि ।
सीरस्य वोढर्यपि च **स्रोतस्वी** त्वभिधेयवत् ॥ २००९ ॥

स्रोतोयुक्ते स्त्रियां तु स्यान्नद्यां स्रोतस्विनीत्यथ ।
**सौवीरं** काञ्जिके स्रोतोञ्जने बदरिकाफले ॥ २०१० ॥

पुमांस्तु गोपघोण्टायां सौवीरास्तु नृभूमनि ।
सीवृद्धेदेऽथ **सौरभ्यं** सौगन्ध्ये गुणगौरवे ॥ २०११ ॥

**मनोज्ञ**तायां च क्लीबं भेद्यलिङ्गं तु कीर्तितम् ।
मनोज्ञे **सौरत**स्तु स्यान्मृदुवायौ नृलिङ्गकः ॥ २०१२ ॥
त्रिस्तु सम्बन्धिनि रतेः **सौमिक**स्तु त्रिषु स्मृतः ।
सोमयागभवे स्त्री तु सौमिकी याज्ञिकैः स्मृता ॥ २०१३ ॥
इष्टौ स्याद् दीक्षणीयायां **सौराष्ट्री** तु स्त्रियामियम् ।
सौराष्ट्रदेशविख्याते मृद्भेदे हि यदाह्वयः ॥ २०१४ ॥
आढकीति नपि त्वेतत् सौराष्ट्रं कांस्यसंज्ञके ।
लोहेऽथ **हरितः** पुंसि स्यान्मुद्गकपिभेदयोः ॥ २०१५ ॥
पालाशवर्णे च त्रिस्तु तद्वत्यर्थे हि तत्र च ।
यदा तदा स्त्रियां वृत्तिर्हरिता हरिणीति च ॥ २०१६ ॥
द्वे तु सिंहेऽथ हरिता हरेः स्त्री भावकर्मणोः ।
**हरिण**स्तु द्वयोर्ज्ञेयस्ताम्रवर्णमृगेऽथ सा ॥ २०१७ ॥
प्रतिमायां हिरण्मय्यां हरिणी स्त्री तथैव सा ।
चारुस्त्रिया च कथिता रभसेन हरिण्यसौ ॥ २०१८ ॥
अत्यष्टिच्छन्दसि ज्ञेया वृत्तभेदेऽथ कीर्तिता ।
पूर्वं हरितशब्दे हि स्त्र्यर्थे वर्णे तु पाण्डुरे ॥ २०१९ ॥
पुमांस्तद्वति तु त्रि स्यात् तत्र स्त्र्यर्थे कथं भवेत् ।
अन्तोदात्ततया (ङीपा न हि भा)व्यमसंशयम् ॥ २०२० ॥
हरिणे (त्रीन ? ङीष)जन्त(त्वाच्चित )स्वरोऽन्तेऽस्य हि स्थितः ।
उदात्तो द्वे तु **हर्यक्षः** सिंहे वैश्रवणे तु ना ॥ २०२१ ॥
त्रिः पुनः कपिलाक्षेऽथ ह[1](र्ष ? र्पु)लो ना बुधग्रहे ।
द्वे पुनः शिल्पिनि मृगे भेद्यलिङ्गं तु कामिनि [illegible] ॥
हर्षशीले हासशीले **हरणं** तु नपुंसकम् ।
नाट्यप्रसिद्धे करणसंज्ञे चेष्टान्तरे तथा ॥ २०२३ ॥

[1] 'अथ हर्षुलः । बुधः' (पृ. १९, श्लो. ३२) इति, 'हर्षुलो मृगकामिनोः' (पृ. २६४, ९३) इति च वैजयन्ती ।

दृढदुष्करचित्रेषु यौधानामपि कर्मसु ।
अश्वानां देयभेदे च क्वचिद् देशे हि दीयते ॥ २०२४ ॥

योग्याशनादिकं तेषां शरीरपरिपुष्टये ।
पश्चाद् बीजनिषेकस्य तथा हरतिकर्मणि ॥ २०२५ ॥

गणितज्ञप्रसिद्धे च सङ्ख्यायास्ताडने तथा ।
भुजे क्लीबं तु **हसितं** हासे हासान्तरे तथा ॥ २०२६ ॥

दृष्टदन्ते त्रिषु त्वेतत् फुल्लेऽत्रैहसितेऽपि च ।
तथा हसितवत्येष **हवनं** तु नपुंसकम् ॥ २०२७ ॥

होमे वह्नौ तु ना स्त्री तु हवनी स्रुचि नप् पुनः ।
हास्ये **स्याद्धसनं** स्त्री तु हसनी परिकीर्तिता ॥ २०२८ ॥

अङ्गारशकटौ ना तु **हनुषः** क्रोध ईरितः ।
राक्षसे तु द्वयोरुक्तो ***हलिजस्तु** महाद्रुमे ॥ २०२९ ॥

शाकसंज्ञे कदम्बद्रौ केतक्यां च नपि त्वदः ।
तेषां स्यात् प्रसवे ना तु **हविष्यः** स्यात् तिले त्रि तु ॥ २०३०

साधा हविष्यथो पुंसि **हरेणुः** परिकीर्तितः ।
कलायधान्यभेदे स्याद् रङ्कटीसंज्ञकेऽथ सा ॥ २०३१ ॥

स्त्रियां कौन्तीसमाख्ये स्याद् भेषजे **हाटकं** पुनः ।
अस्त्रियां हेमनि क्ली तु स्यात् त्रिकण्टकसंस्थितौ ॥ २०३२ ॥

कुन्तभेदे **हारकस्तु** यष्टिसंज्ञायुधान्तरे ।
पुमान् हर्तरि तु त्रि **स्याद्धारणस्तु** पुमांस्तरौ ॥ २०३३ ॥

१. 'प' ङ. पाठः.

* 'हलीमे केतकी' (पृ. ६३. श्लो. २२३) इति, 'शाके पृथुच्छदहलीमकौ' (पृ. ५१. श्लो ७६) इति च वैजयन्ती ।

धा पङ्काख्ये नपुंस्त्रियोस्तु हारणं हारणेति च।
अ... हारय... स्त्री पुनर्हायन इत्ययम् ॥ २०३४ ॥

व...रेऽर्चि(ष ? षि) ... ना तु स्याच्छालिभेदे द्विषत्यपि।
हा...रि...ल...वाह्यासु कन्यकासु क्वचित् स्त्रियाम् ॥ २०३५ ॥

उत्पक्ष... पति...द् या स्यात् त्रि तु हारयतीप्सिते।
हिमजा तु ...टीसंज्ञगन्धमूलौषधौ स्त्रियाम् ॥ २०३६ ॥

पार्वत्यां च हिमोत्थे तु त्रिर्ना मैनाकपर्वते।
हिमस्रस्तु पुमाञ्छत्रौ हिंसायां तु नपुंसकम् ॥ २०३७ ॥

हिडिम्बस्तु पुमान् भीमसेनेन निहतेऽसुरे।
हिडिम्बा तु स्त्रियां तस्य भगिन्यामथ हिङ्गुलः ॥ २०३८ ॥

(ना ? दा)*रदाख्ये रागद्रव्यधातुभेदे स्त्रियां त्वियम्।
वार्ताक्यां हिङ्गुली तस्याः पुनर्भेदेऽप्ययमिष्ट ताम् ॥ २०३९ ॥

प्रग्रहसंज्ञके वैजयन्त्यामथ भवेद् द्वयोः।
व्याघ्रे हिंसीर इत्येष तस्करे त्वभिधेयवत् ॥ २०४० ॥

हिङ्गुकुस्तु पुमान् रागद्रव्यधात्वन्तरे स्मृतः।
दारदाख्ये स्त्रियां त्वेषा भण्टाक्यां नाम चापरम् ॥ २०४१ ॥

यस्या वार्तािङ्गन इति तस्यामथ नृलिङ्गकः।
हुडुके हुडुको द्वे तु मत्तदात्यूहपक्षिणि ॥ २०४२

हल्लीसस्तु पुमाञ्ज्ञेयो (हू ? औरु)(ण्डे ? ...) हुडुक ... रे।
...ल... तु स्त्रियां मन्त्रभेदे तान्त्रिकवि...ने ॥ २०४३ ॥

१. 'हुडुके हुडुको ...' क. ड. च. पाठः.

§ 'पुंस्यर्चिर्मरीचिभेदयोः' इति मेदिनी। * 'हिङ्गुलो दारदो रसः' (प. ४४. श्लो. ४४)

हेमलस्तु (द)द्रेदे नाथ द्वे कृकर ।सके ।
त्रिस्तु स्व ह्र्ा. द्वे तु हेरम्बो महिषेऽथ ना ॥.२०४४ ॥

प्रमथानां प्रभेदे व हेरम्बो विघ्ननायके ॥ २०४५ ॥

इति त्र्यक्षरकाण्डे नानालिङ्गाध्यायः ॥

---

त्र्यक्षरकाण्डः समाप्तः ।

---

॥ श्रीः ॥

. राजराजीयापरनामा

# नानार्थार्णवसंक्षेपः

केशवस्वामिप्रणीतः ।

## चतुरक्षरकाण्डः ।

### स्त्रीलिङ्गाध्यायः ।

अथ प्रस्तूयते काण्डं नाम्नां चतुरचामिदम् ।
तत्रापि तावत् स्त्रीलिङ्गशब्दाध्यायः प्रदर्श्यते ॥ १ ॥
**अक्षमाला** स्त्रियां विद्यादरुन्धत्यां तथापि च ।
जपसङ्ख्यापरिच्छित्त्यै रुद्राक्षस्फटिकादिभिः ॥ २ ॥
सूत्रस्यूतैः कृते चापि वलयेऽथ निबोधत ।
**अजमोदा** यवानीति प्रसिद्धे भेषजान्तरे ॥ ३ ॥
शल्मलेरपि निर्यासेऽथ**ान्तशय्या** श्मशानके ।
तथैव भूमिशय्यायामथो **अपचितिः** क्षये ॥ ४ ॥
व्ययनिष्कृतिपूजासु स्यादप्येकाहयज्ञयोः ।
अथ विद्याद**नुमति**मनुज्ञायां तथैव च ॥ ५ ॥
पौर्णमास्यां कलाहीनचन्द्रायामजयः पुनः ।
अम्ले चेति पठत्येनाम**भिशस्ति**पदं पुनः ॥ ६ ॥
प्रार्थने चाभिशापे च वैजयन्त्यां तु पठ्यते ।
दूषणे प्रार्थने चाथो अजयम्यार्थमुत्तरम् ॥ ७ ॥

१. 'म' क. च. पाठः.

**अङ्कपालिः** परीरम्भे पालौ धात्र्यां कटध्वनिः(?) ।
इत्येव**मर्नपालि**स्तु[२] धात्र्यां पाल्यां गदद्रुहि ॥ ८ ॥
सेनामात्रे दशांशे चाप्यक्षौहिण्या **अनीकिनी** ।
**अर्धसूची** तु सूच्याः स्यादर्धे चाप्यासनान्तरे ॥ ९ ॥
तस्य लक्षणमप्याहुरित्थमासनवेदिनः ।
ऊर्ध्वज्ञोः संहतौ पाणितलौ चेदित्युपक्रमे ॥ १० ॥
अर्धसूची तु तौ द्वौ चेत् प्रादेशान्तरतो मुखात् ।
इत्येव**मिक्षुगन्धा** तु कोकिलाक्ष इति श्रुते ॥ ११ ॥
आनूपे[३] कण्टकिस्तम्बे विदारीकाशयोरपि ।
भवे**दितिकथा**पार्थवागश्रद्धेयवाक्ययोः ॥ १२ ॥
**इरावती** नदीमात्रे नदीभेदेऽप्यथोच्यते ।
**उपचर्या** चिकित्सायां पूजायां चेति मन्वते ॥ १३ ॥
प्रजनप्राप्तकालाया**मुपसर्या** गवि स्मृता ।
व्याचष्टे कश्चिदप्येनां सामान्यजनसेवने ॥ १४ ॥
कल्लोलेऽपि तथोत्क (ण्ठे ? ण्ठ्ये) भवे**दुत्कलिका**ध्वनिः ।
**उपलब्धि**स्तु शेमुष्यां प्राप्तिविज्ञानयोरपि ॥ १५ ॥
रहस्यार्थे **तूपनिषद्** धर्मवेदान्तयोरपि ।
रहसीत्यपरे प्राहुः प्रथमर्तौ च योषिताम् ॥ १६ ॥
**ऋक्षगन्धा** तु शुक्लायां विदार्यां वृद्धदारके ।
छगलाम्त्री(?)ति* विख्यातं भेषज्यं वृद्धदारकः ॥ १७ ॥
**ऋष्यप्रोक्ता** शतावर्यामृद्धिमंज्ञे च भेषजे ।
आत्मगुप्तानिबलयोर्गोपध्योश्चाथ बुध्यताम् ॥ १८ ॥

---

१. 'न' क. च. पाठः. २. 'ली तु' ङ पाठः. ३. 'पक' क ङ पाठः ४. 'द्वी' क च. पाठः.

---

* 'छगलान्त्री' इति पाठः स्यात । "स्याद् ऋक्षगन्धा छगलान्त्र्यावेगी वृद्धदारक" इत्यमरसिंहः । 'छगलस्येवान्त्रमस्याः' इति भानुजिदीक्षितश्च । क्षीरस्वामी तु 'छगलस्येवाण्डानि अस्थीनि यस्याः' इति व्युत्पाद्य छगलाण्डीत्याह ।

**काकजङ्घा** षडश्रेति प्रसिद्धस्थावरान्तरे।
गुडासंमाख्यवल्ल्यां च जङ्घायां करटस्य च ॥ १९ ॥

**काकनासा** तु विज्ञेया काकाङ्गाख्यलतान्तरे।
वसुभट्ट इति ख्यातपुष्पस्तम्बे तथैव च ॥ २० ॥

नासिकायां (चकोरस्य? च काकस्य) ज्ञेया **कुटिलिका** पुनः।
मायायामपि चाङ्गारापकर्षण्यां च शिल्पिनाम् ॥ २१ ॥

कर्मारना(म?म्नां) धान्यं तु कर्षकाणां च मृद्गताम्।
पूलोत्क्षेपणवेणौ च परिव्राजां तु भूतले ॥ २२ ॥

निधानस्य निषिद्धत्वाद् दण्डानां धारणाय यत्।
स्यात् कम्बिग्रहणं तत्राप्यथ चोरजनस्य हि ॥ २३ ॥

यष्ट्यग्रप्रतिबद्धोऽन्यशरणारोहणाय यः।
लोहकर्कटकस्तत्राप्यथ विद्यात् **कुनालिकाम्** ॥ २४ ॥

कुत्सितायां नालिकायां शालायामपि पक्षिणाम्।
अथ **गन्धफली** वृक्षे प्रियङ्गुरिति विश्रुते ॥ २५ ॥

कलिकायां च सा ज्ञेया चम्पकाभिख्यशाखिनः।
गिरिकर्णीलताजातिभेदे यस्यापराजिता ॥ २६ ॥

इति संज्ञा वैजयन्त्यां त्वस्य भेदे सितेऽपठीत्।
पृथिव्यां चाथ वादित्रकोणे **घर्घरिका** तथा ॥ २७ ॥

वाद्यभेदेऽप्यथो **तुण्डिकेरी** कण्ठरुजान्तरे।
कार्पास्यामपि बिम्बीति प्रसिद्धे च लतान्तरे ॥ २८ ॥

श्रीवेष्टे **तैलपर्णी** स्याद् धवलेऽपि च चन्दने।
गौरीदिशोर्दक्षकन्या **दीर्घवल्ली** तु वेत्रके ॥ २९ ॥

लतायामपि दीर्घायां **देवसेना** तु सैन्यके।
देवानां षण्मुखस्यापि देव्यां देववधूः पुनः ॥ ३० ॥

१. 'श्र' ग. पाठः. २. 'रा' क. ङ. च. पाठः. ३. 'द्धं' क. ङ. च. पाठः. ४. 'त' ग. पाठः.

दिशि देवस्य वध्वां च **नागजिह्वा** तु बोधत ।
मनःशिलाशारिबयोर्नागस्य रसने तथा ॥ ३१ ॥

**निदिग्धिका** तु पठिता वैजयन्तीकृता यथा ।
गिरिप्रियेति विख्यातक्षुद्रवार्तिङ्गिनान्तरे ॥ ३२ ॥

कण्टकार्यां च विज्ञेया **प्रतिपत्तिस्तु** गौरवे ।
प्राप्तौ प्रवृत्तौ प्रागल्भ्ये प्रतिभाज्ञानयोरपि ॥ ३३ ॥

प्रायुक्तं प्रत्यये भक्तिर्विश्वासः प्रत्ययो मतः ।
प्रतिमायां **प्रतिकृतिः** प्रतिकारेऽप्यथो शृणु ॥ ३४ ॥

***प्रत्यक्छ्रेणी** नागदन्त्यां गिरिकर्ण्यां तथैव ताम् ।
विद्यान्मूषिकपर्ण्यामप्यथ ज्ञेया **प्रचोदनी** ॥ ३५ ॥

कण्टकार्यामना तु स्यात् प्रेरणायां प्रचोदना ।
गयायां त्वाम्रसे(के ? को) ‡यस्तत्र ज्ञेया **पितृप्रपा** ॥ ३६ ॥

पितुः प्रपायामप्येषा **पीलुपर्णी** तु कथ्यते ।
मू(र्च्छा?र्वा)†यां बिम्बिकायां च **पुटग्रीवा** तु कथ्यते ॥ ३७

गर्गर्यां ताम्रघट्यां च मूर्वापविकयोः पुनः ।
ज्ञेया **मधुरसा**थ स्यान्मृगतृष्णाख्यतेजसि ॥ ३८ ॥

**मरीचिका** तथा लिक्षासंज्ञमानेऽप्यदः पुनः ।
त्रसरेण्वष्टकं स्यात् तु हरिद्रायां **मनःशिला** ॥ ३९ ॥

ख्याते मनःशिलेत्येव धातावथ **महाशिला** ।
शस्त्रप्रभेदे तस्योक्तं लक्षणं शस्त्रवेदिभिः ॥ ४० ॥

शतघ्नी तु चतुस्ताला लोहकण्टकसञ्चिता ।
अयःकण्टकसञ्छन्ना शतघ्न्येव महाशिला ॥ ४१ ॥

* 'प्रत्यक्छ्रेण्यपराजिता' (पृ. ५६. श्लो. १३३) इति तु **वैजयन्ती** । अपराजिता = गिरिकर्णी । ‡ 'आम्रसेकस्तु यस्तत्र सा चारी सा पितृप्रपा' । (पृ. ८८. श्लो. ६७) इति **वैजयन्ती** । † 'देव्यां मूर्वा बहुश्रेणी गोकर्णी पीलुपर्णिका ।' (पृ. ५४. श्लो. ११४) इति **वैजयन्ती** ।

इत्येवं पृथुपाषाणे प्रसिद्धैव महाशिला ।
**महासहा** माषपर्ण्यां स्तम्बे चाम्लानसंज्ञके ॥ ४२ ॥
**मधुपर्णी** तु काश्मर्यगुडूचीनीलिनीषु च ।
**मन्दाकिनी** स्यादाकाशगङ्गायामापगान्तरे ॥ ४३ ॥
**मुखशोभा** वेदशालिमुखे कान्तौ मुखस्य च ।
**रङ्गमाता** तु कुट्टन्यां लाक्षायां चाजयोदिता ॥ ४४ ॥
**राजकन्या** तु कन्यायां राज्ञोऽपि च नपुंसके ।
नपुंसकस्य संज्ञासु वररुच्युदिता ह्यसौ ॥ ४५ ॥
(शासे ?)केसरमालाख्ये स्यात् तु **राजसभा**ध्वनिः ।
राष्ट्रेऽपि राज्ञ आस्थाने व्याख्याकारेण केनचित् ॥ ४६ ॥
व्याख्यातोऽमरकोशस्य ह्यशालार्थेषु का कथा ।
**ललाटिका** ललाटस्थपत्राङ्गुल्यां तथैव च ॥ ४७ ॥
सा भवेत् पत्रपाश्यायामथापि स्याद् **वराङ्गना** ।
मुख्यायामङ्गनायां च तालीसंज्ञमहाद्रुमे ॥ ४८ ॥
वरस्त्रियां **वरारोहा** महोदर्याख्यमुस्तके ।
मल्लिकाया विशेषे च देवमल्लीति विश्रुते ॥ ४९ ॥
अत्रोक्तं सज्जनेनेदं व्यर्था इत्यधिकृत्य यत् ।
**वरिवस्या** परीष्टौ स्यादिति तत् संशयास्पदम् ॥ ५० ॥
**विष्णुक्रान्ता** तु सुमुखीगिरिकर्णिकयोरपि ।
**शतह्रदा** तु तडिति तद्भेदे मरिचे पुनः ॥ ५१ ॥
**श्यामवल्ली** लतायां च श्यामायामथ कथ्यते ।
मल्लिकायां (**शेष ? श्लेष्म**)†**घना** केतक्यां चाजयेन तु ॥ ५२ ॥

१. 'तु' ग. पाठः. २. 'नां' क. च. पाठः.

† 'अथ श्लेष्मघना मल्ल्यां केतक्यामपि योषिति' इति मेदिनी । 'श्लेष्मघना तु केतक्यां मल्ल्याम्' इति हेमचन्द्रश्च ।

**समुद्रान्ता** तु दुःस्पर्शे कार्पासीस्पृक्कयोरपि ।
**स्ववासिनी** चिरण्ट्यां स्यान्नववध्वां च सज्जनः ॥ ९३ ॥
**सामिधेनी**ति तस्यां स्याद् यया चाधीयते समित् ।
समिध्यप्यपठीदेनां शाश्वतः शब्दवित्तमः ॥ ९४ ॥
**सिनीवाली** तु पार्वत्यां दृष्टचन्द्रे च दर्शके ।
**सुवर्चला** तु सूर्यस्य प्रभादेव्यां क्षुमाह्वये ॥ ९५ ॥
धान्ये शाकविशेषे च **सोमवल्ली** त्ववल्गुजे ।
ब्राह्मीगुडूच्योश्चाथ स्याद् विद्युद्विद्युद्विशेषयोः ॥ ९६ ॥
**सौदामनी**ति च चतुर(न्)स्त्र्यध्यायः समाप्तवान् ॥ ९६[1] ॥

इति चतुरक्षरकाण्डे स्त्रीलिङ्गाध्यायः ।

## अथ चतुरक्षरकाण्डे पुंल्लिङ्गाध्यायः ।

अथो चतुःस्वराः शब्दाः कीर्त्यन्तेऽत्र नृलिङ्गकाः ।
**अपवर्गः** क्रियासाध्यफलाप्तौ त्यागमोक्षयोः ॥ १ ॥
**अपदेशस्तु** लक्षे स्यान्निमित्तव्याजयोरपि ।
**अपवादस्तु** निन्दायामाज्ञायां च द्वयोरपि ॥ २ ॥
**अपभ्रंशो**ऽपशब्दे स्याद् भाषाभेदप्रपातयोः ।
**अभिमान**स्त्वहङ्कारे हिंसाप्रणययोरपि ॥ ३ ॥
ऐश्वर्यहेतुके दर्पे ज्ञाने चाथा**भिहारवाक्** ।
अभियोगे सन्नहने चौर्ये वैरेऽपि सज्जनः ॥ ४ ॥
* + + + + + + + + + + + + + परोऽभ्यधात् ।
गजशायनकालेऽपि गजशास्त्रेषु दृश्यते ॥ ५ ॥

1. 'तु चतुरस्त्र्यध्यायः पूर्णवानयम् ॥' इ. पाठः.

* ग्रन्थपातस्थाने 'संश्लेषणेऽभिक्रमणे मेलने च' इति पठनीयं भाति ।

कुले त्वभिजनो जन्मभूमौ चाभिषवः पुनः ।
सवने मद्यमन्धाने (स्नाने चाथाभियो)गवाक् ॥ ६ ॥
अन्यायधर्षितनरैः प्राड्विवाकाय वेदने ।
अभिमाते(?)[1]पूतनया परिक्षेपेषुणा तथा ॥ ७ ॥
तथा परिचयेऽपि स्यादभिषङ्गस्तु कथ्यते ।
आक्रोशशापाभिषवसङ्गेष्वाह तु सज्जनः ॥ ८ ॥
दुःखे पराभवे त्वाह सिंहोऽभिक्रमवाक् पुनः ।
आरोहणक्रियायां चाभिमुखक्रमणेऽपि च ॥ ९ ॥
अवग्रहो वृष्टिरोधे प्रतिबन्धे गजालिके ।
अवगाहो जलद्रोण्यां तैलाङ्क्ष[2]र्थ[3]वगाहने ॥ १० ॥
अवगाथोऽक्षसङ्घाते रथयाने तथा पथि ।
स्यात् प्रातःसवने चापि केचित् त्ववगथध्वनिम् ॥ ११ ॥
अस्य स्थाने पठित्वाहुरस्यैवार्थान् विचक्षणाः ।
अवतारोऽवतरणे तीर्थे भूतादिके ग्रहे ॥ १२ ॥
इत्युक्तं शाश्वतेनापि तदयुक्तं यतो मुनिः ।
करणे चाधिकरणेऽप्यवतारं शशास सः ॥ १३ ॥
अवपातस्तु हस्त्यर्थे गर्ते छन्ने तृणादिना ।
शैलप्रपातेऽप्यन्ये तु गर्तमात्रे वदन्ति तम् ॥ १४ ॥
अवरोहोऽवतरणे पादपस्य लतोद्गमे ।
मूलादग्रं गतायां च लतायां किञ्च शाखिनः ॥ १५ ॥
शाखाजातशिफायां चाप्यथ स्यादवरोधवाक् ।
अन्तःपुरे स्वीकृतौ चाप्यवलेपस्तु लेपने ॥ १६
गर्वेऽथावक्रयो मूल्ये सूत्रनिर्दिष्टवैक्रये ।
क्रयभेदेऽप्यदत्तार्धाधिकमूल्ये परे [4]विदुः ॥ १७ ॥

१. 'स्तेतपूतनाया' ग. पाठः. २. 'क्यान्यव' क. च. पाठः. ३. 'न्त्य' ङ. पाठः.
४. 'वि' क. च. पाठः.

सज्जनो हाटकेऽवादीदवष्टम्भस्तु काञ्चने ।
समालम्बे तथा स्तब्धौ स्तम्भे चाप्यजयोऽवदत् ॥ १८ ॥

नैतद् रुचितमसभ्यं यतः षत्वस्य साधुता ।
आलम्बनादाविदूर्याच्चान्यत्र विषयेऽस्य न ॥ १९ ॥

अवस्करस्तु विष्ठायां गुह्ये चाथो धनञ्जयः ।
रहस्य इत्यभाषिष्ट वयं तु ब्रूमहे परम् ॥ २० ॥

मलप्रक्षेपणस्थानेऽप्यथावकर इत्ययम् ।
धर्मशास्त्रविदां ख्यातेऽवकीर्णित्वेऽवचूर्णने ॥ २१ ॥

सम्मार्जनीनिरस्तस्य तृणपांस्वादिवस्तुनः ।
राशौवुत्ककटाभिख्येऽप्यथावस्कन्द इत्ययम् ॥ २२ ॥

सौप्तिकेऽपि नगर्यादेरपहारे बलोद्धतैः ।
अथावयव इत्येष एकदेशाप्रधानयोः ॥ २३ ॥

पृथग्भूते पृथग्भावेऽप्यव(घा?खा)*तस्तु गर्तके ।
जलाशये च कीर्णाख्ये वैजयन्त्यामभाषत ॥ २४ ॥

दोषोत्पादेऽनुबन्धः स्यात् प्रकृत्यादेर्विनश्वरे ।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ॥ २५ ॥

क्रोधेऽपि सज्जनः प्राह दोषेऽप्यमरदत्तकः ।
अथानुद्वेष इत्येष दीर्घद्वेषानुबन्धयोः ॥ २६ ॥

पश्चात्तापे च केचित् तु द्वेषमात्रे परः पुनः ।
व्याख्यातामरकोशस्य देशभेदेऽप्यभाषत ॥ २७ ॥

अनुषङ्गस्तु कारुण्ये प्रकृतस्यानुवर्तने ।
अनुकर्षस्त्वधःस्थे स्याद् रथकाष्ठेऽनुकर्षणे ॥ २८ ॥

१. 'सम्भेदेऽप्य' क. च पाठः. २. 'काशा' क ग. च. पाठः. ३. 'कावुत्कुटा' क. च. पाठः. ४ 'नि' क. ग. च. पाठः. ५. 'त्व' क ग च. पाठः. ६. 'नुद्वय इ' क. च, 'यवाय इ' ग. पाठः.

* 'अवखातस्तु कीर्णः स्याद्' (पृ. १५४. श्लो. ७) इति वैजयन्ती ।

अनुतर्षस्तु चषके मद्ये चाथानुभावत्वाक् ।
सूचके चापि भावस्य सतां च मतिनिश्चये ॥ २९ ॥
प्रभावेऽप्यधिवासस्तु गन्धद्रव्यादिसंस्कृतौ ।
निवासेऽप्यग्निमन्थस्तु श्रीपर्णीतिमिशुवे ॥ ३० ॥
वृक्षभेदेऽग्निमथनेऽप्यङ्गहारस्तु नृत्यताम् ।
अङ्गविक्षेपणेऽङ्गस्य हरणेऽथो अरुन्तुसः ॥ ३१ ॥
भेषजस्तम्बभेदे च प्रहस्ताख्ये च राक्षसे ।
अपांगर्भौ मरुद्वह्नयोरथाथर्वणि रित्ययम् ॥ ३२ ॥
पुरोहितेऽप्यथर्वज्ञेऽप्यथाश्वरिपुरित्ययम् ।
महिषे करवीरे चा(प्य ? प्या)वसथश्चानिः पुनः ॥ ३३ ॥
ज्ञेय आवसथे चाग्निभेदे चाहवनीयनः ।
प्राग्देशस्थेऽथात्मयोनिः स्मरे स्मरहरेऽजके ॥ ३४ ॥
विरिञ्चनेऽप्यथाग्नीन्ध्रोराशौचनिरिति ध्वनिः ।
इन्द्रवृक्षस्तु ककुभे कुटजे देवदारुके ॥ ३५ ॥
उपक्रमश्चिकित्सायामुपधारम्भयोगि ।
उपायपूर्वे त्वारम्भेऽमरसिंहः शरण्यथा ॥ ३६ ॥
अङ्गीकृतावुपगमः समीपगमनेऽपि च ।
अथो उपशयः स्थाने यत्र स्थित्वा हि लुब्धकाः ॥ ३७ ॥
गूढात्मानो मृगान् घ्नन्ति तत्र यूपे[2] तु याज्ञिकाः ।
एकादशकवक्षे यः शेते दक्षिणतो भुवि ॥ ३८ ॥
दशानामपि यूपानां तत्रायुर्वेदिनः पुनः ।
औषधान्नविहाराणामुपयोगे[3] सुखावहे ॥ ३९ ॥
व्याधेः सात्म्यमितीदं च तत्रा [illegible] ।
समीपशयने चापि विदन्ति [illegible] ॥ ४० ॥

१. 'थ्यथे ॥' क. ङ. च. पाठः. २. 'रि' ग., 'तु' क. च. पाठः. ३. 'ग' ङ. पाठः.

उपरागस्तु राहौ च सक्त्याख्यव्यसने तथा।
सूर्यचन्द्रग्रहे च स्यादुपरक्तौ च कीर्तितः ॥ ४१ ॥
उपसर्गः क्रियायुक्तप्रादौ संसर्ग एव च।
उत्पाते चाप्यथोत्पाते ग्रहणे चन्द्रसूर्ययोः ॥ ४२ ॥
राहौ चोपप्लवोऽभ्यासे चेति धीराः प्रचक्षते।
उपग्रहस्तु बन्दौ स्याद् ग्रहणेऽप्यनुकूलने ॥ ४३ ॥
स्यात् परस्मैपदेऽप्येष आत्मनेपद एव च।
उपस्पर्शस्तु संस्पर्शे स्नानाचमनयोरपि ॥ ४४ ॥
उपकारस्तूपकृतौ विकीर्णकुसुमादिषु।
इत्युक्तं कैश्चिदस्माकं भासते तदयुक्तवत् ॥ ४५ ॥
उपचारस्तु तत्र स्यात् सकारो यो विधीयते।
विसर्जनीयस्य स्थाने प्राभृ(तौ?ते) चाप्युपासने ॥ ४६ ॥
उपनाहस्तु वैरानुबन्धे वीणानिबन्धने।
पक्ष्मलोचनसन्धिस्थरोग[3]भेदे च मन्यते ॥ ४७ ॥
व्रणादे[4]र्भेषजे बीजेऽप्युपतापस्तु कीर्त्यते।
रोगे तापेऽप्यथ प्रोक्तो वारिवाहमहेन्द्रयोः ॥ ४८ ॥
ऋञ्जसानः श्मशाने च त्रिष्वर्थेषु मनीषिभिः।
कारस्करो राजवृक्षे गिरिभेदे च दर्शितः ॥ ४९ ॥
कौरालिको वृक्षमात्रे पठितः + डि[6]खङ्गयोः $ ।
कारोतरः* सुरामण्डे कूपे कामोत्सवः पुनः ॥ ५० ॥

१. 'व' क. च. पाठः. २. 'दा' क. ग च. पाठः. ३. 'रा' क. पाठः. ४. 'दैर्भेषजेर्बीजे' क. ङ. च. पाठः. ५. 'क' ग. ङ. च. पाठः. ६. 'खि' ग. ङ. पाठः. ७. 'त' ग. पाठः.

$ खड्गिखड्गयोः' इति स्यात्। 'खड्गिनखौ करालिकौ' (पृ. २६६. श्लो. २०) इति वैजयन्ती। * 'कारोतरो नाम वैदलश्चर्मरचितो भाजनविशेषः, यस्मिन् सुरायाः स्रावणं क्रियते' इति ऋग्भाष्यम्। 'कारोत्तरः सुरामण्डः' इति यादवामरसिंहौ।

**कामाद्धर्षे** तथा कामस्योत्सवे चेति दर्शितः।
अथ **कामगुणो** रागे विषयाभोगयोरपि ॥ ९१ ॥

**कालधर्मस्तु** कालस्य धर्मेऽपि मरणेऽपि च।
**क्रियाकारः** संविदि च क्रियायाः करणेऽपि च ॥ ९२ ॥

**कुरुविन्दो** रत्नभेदे मुस्तके हिङ्गुले तथा।
आरण्यक्षुद्रधान्यानां सप्तानामेकधान्यके ॥ ९३ ॥

**ग्रहराजस्तु** विज्ञेयो भास्करे चन्द्रमस्यपि।
शक्रे घातुकमत्तेभे वर्षुकाब्दे **घनाघनः** ॥ ९४ ॥

**घनसारस्तु** कर्पूरे दक्षिणावर्तपारते।
**चन्द्रोदयः** स्यादुल्लोचे शशाङ्कस्योदयेऽपि च ॥ ९५ ॥

**चन्द्रहासोऽसिमात्रे** स्याद् दशास्यस्याप्यसावसौ।
खड्गभेदेऽपि तं प्राहुर्वैजयन्त्यां यथापठीत् ॥ ९६ ॥

चन्द्रहासोऽर्धचन्द्राभ इति शब्दार्थकोविदः।
**चित्रभानू** रवौ वह्नौ देशे **जनपदो** जने ॥ ९७ ॥

**जनक्षयस्तु** सङ्गमे जनस्यापि क्षये मतः।
**तमोनुदः** सहस्रांशौ शीतांशौ पावकेऽपि च ॥ ९८ ॥

**तनूनपात्** तु यास्कोक्त आज्ये चाग्नौ च निश्चितः।
**तिरस्कारः** परिभवेऽप्यन्तर्धेरुपचारतः ॥ ९९ ॥

अन्तर्धौ चाथ विज्ञेयस्त्रिकण्टक इति ध्वनिः।
गोक्षुरे च विपत्रायां स्नुह्यां चाथ निबोधत ॥ ६० ॥

हिन्तालतालद्रुमयोस्तृणराज इति ध्वनिः।
**दर्दरीकस्तु** वादित्रविशेषे डाडिमे तथा ॥ ६१ ॥

अनिले चन्द्र इत्यन्ये दधिपाय्यमपि ...पि।
पृषत्यपीति केषाञ्चिन्मतमेतन्न तच्छुभम् ॥ ६२ ॥

१. 'च निद' क. ङ. च. पाठः. २. 'लौ' क. ङ. च. पाठः. ३. 'भा' क. च. ४. 'भा' क. च. पाठः. ५. 'वि' ग. पाठः. ६. 'च' क. ग. ङ. पाठः.

द्रुमामयस्तु लाक्षायां द्रुमस्याप्यामये तथा ।
अथ देवरथो नाम्नि[1] स्यन्दने च रथस्य भूमिकाम् ॥ ६३ ॥
देवानां च रथे ज्ञेयो देवधूपस्तु गुग्गुलौ* ।
देवानामपि धूपः स्यादिति नानार्थदा विदुः ॥ ६४ ॥
धनञ्जयस्तु शक्रेऽग्नौ तथा मध्यमपाण्डवे ।
शारीरवायुभेदे च काद्रवेये च भङ्गुरिः ॥ ६५ ॥
धनाध्यक्षो वैश्रवणे धनाधिकृतपूरुषे ।
वैवस्वते च बुद्धे च धर्मराजो युधिष्ठिरे ॥ ६६ ॥
धन्वन्तरिः काशिराजे भास्करेऽप्यथ बुध्यताम् ।
कोशातक्यामजगमार्गे धामार्गव इति ध्वनिः ॥ ६७ ॥
धूमकेतुस्तु विज्ञेय उत्पाते पावकेऽप्यथ ।
यज्ञे मन्त्रविशेषे च नाराशंसोऽनलेऽप्यथ ॥ ६८ ॥
सोमे समुद्रेऽवभृथे निचुम्पुण इति ध्वनिः ।
निषङ्गधिस्तु विज्ञेयो रुद्रेऽपि च धनुर्धरे ॥ ६९ ॥
नृपयज्ञस्तु सङ्ग्रामे राजसूयादिकेष्वपि ।
प्रतिग्रहः क्रियाकारे सैन्यपृष्ठे पतद्ग्रहे ॥ ७० ॥
द्विजेभ्यो विधिवद् देये तद्ग्रहे स्वीकृतावपि ।
प्रतिग्राहयते तोये प्रतिग्राहश्च तद्ग्रहे ॥ ७१ ॥
प्रतियत्नस्तु संस्कार उपग्रहणलिप्सयोः ।
प्रतिश्रयस्तु विज्ञेयः स्थाने गोष्ठ्यां च सूरिभिः ॥ ७२ ॥
प्रत्याहारे तथा सत्रशाले च विदितागमैः ।
आश्रये शाश्वतः प्राह मण्डपेऽप्यजयोऽपठात्[2] ॥ ७३ ॥

१. 'थ' क. ङ. घ. पाठः. २. 'भ' ग. पाठः.

* 'कौशिको गुग्गुलुः पुरः' इति त्वमरः ।

अथ प्रतिक्रियामात्रे **प्रतीकारो**[1][‡] (पि? हि) भूभुजाम् ।
वैरनिर्यातने चापि **प्रतिहार**स्तु कच्छपे ॥ ७४ ॥

द्वारे च द्वारपाले च **प्रतीकाश**[2]स्तु कथ्यते ।
गजानां पूर्वपादस्य मूलस्याधःप्रदेशके ॥ ७५ ॥

सादृश्येऽप्युत्तरपदभूतोऽथायुधकोशके ।
प्रत्याकृतौ **प्रत्याकारः प्रत्याहार**स्त्वणादिषु ॥ ७६ ॥

अप्यक्षरसमाम्नाये प्रत्यानयनकर्मणि ।
वाद्यवादकसामग्रीविन्यासे[3] नाट्यगोचरे ॥ ७७ ॥

विषयेभ्यः समाहृत्यामिन्द्रियाणामथोच्यते ।
**प्रत्यासारो** व्यूहपार्ष्णौ प्रत्यासरणकर्मणि ॥ ७८ ॥

उक्तस्त्वमरदत्तेन चमूकक्ष्यामिति द्वयम् ।
**प्रजागम**स्तु विज्ञेयः प्रजाया आगमे गमे ॥ ७९ ॥

एकाहाहीनसत्राख्ययज्ञक्रतुषु चाप्यथ ।
**पराशरो** व्यासताते शक्रे चाथ **प्रभाकरः** ॥ ८० ॥

रविवह्न्योरथो **पङ्करसः** शीधौ तथा रसे ।
पङ्कस्याथाम्बुदे स्त्रीणां स्तने मु(क्ते? स्ते) ***पयोधरः** ॥ ८१ ॥

**परिस्पन्दः** परिजने स्पन्देऽथ **परिवापवाक्** ।
द्विर्दीर्घेण परीवापशब्देनैकात्मिका हि सा ॥ ८२ ॥

इयं तु लाजेष्वप्युक्ता शिष्टैरथ परिच्छदे ।
पर्युप्तावालवाले च परिवापोऽत्र शाश्वतः ॥ ८३ ॥

१. 'ति' ग. पाठः. २. 'ति' क. ङ. च. पाठः. ३. 'द्य' क. च. पाठः. ४. 'न्त' क. ङ. च. पाठः. ५. 'सा' क. च. पाठः. ६. 'पा' क. ग. च. पाठः. ७. 'पा' क. ग. च. पाठः.

‡ इत उत्तरं 'महीभुजाम्' इति स्यात् । * 'पयोधरः कोशकारे नारिकेल स्तनेऽपि च । कशेरुमेघयोः' [illegible] । कशेरु गुस्ताविशेषः ।

आरोहेऽपीत्यभाषिष्ट स्थाप्ये बीजेऽपि चाजयः ।
**परिवारः** परिजने प्रावारे खड्गकोशके ॥ ८४ ॥
स्याज्जक्रमे **परीवारः** खड्गकोशे परिच्छदे ।
**परिग्रहस्तु** शपथे मूले परिजने तथा ॥ ८५ ॥
आदानपत्न्योरर्केन्द्वो राहुवक्त्रस्थयोरथ ।
वीणाया वादनोपाये निर्वादे **परिवाद्वाक्** ॥ ८६ ॥
**परिणाहो** विशालत्वे परितो बन्धनेऽपि च ।
अथ **प्रतिदिवाह्नि** स्यादपराह्णेऽपि पठ्यते ॥ ८७ ॥
**पाञ्चजन्यो** हरेः शङ्खे शङ्खमात्रे हुताशने ।
**पारिजातस्तु** पञ्चानामेकस्मिन् देवशाखिनाम् ॥ ८८ ॥
वृक्षभेदे च मन्दारपारिभद्रादिभिः पदैः ।
प्रसिद्धे **पारिभद्रस्तु** मन्दाराह्वयपादपे ॥ ८९ ॥
तद्भेदे देवदारौ चाप्यथ **पारस्कर**ध्वनिः ।
देशभेदे तथानर्तनीवृत्स्थनगरान्तरे ॥ ९० ॥
**पादावर्तः** पुनः पादस्यावर्तेऽप्यैरघट्टके ।
**प्राणनाथस्तु** विज्ञेयो धर्मराजे तथा प्रिये ॥ ९१ ॥
**पाणिग्रहो** विवाहे स्यात् पाणेश्च ग्रहणे तथा ।
स्यात् तु **पुण्यजनो** यातुधाने साधुजनेऽपि च ॥ ९२ ॥
**पुरुभोजास्तु** मेघे च गिरौ चाथ **पृथग्जनः** ।
मूर्खे नीचे तथा **पोटगलस्तु** नडसंज्ञके ॥ ९३ ॥
आनूपस्तम्बभेदे च काशसंज्ञे च कीर्तितः ।
**ब्रह्मगर्भस्तु** विज्ञेयश्चतुर्वक्त्रे च मन्मथे ॥ ९४ ॥
अथो **मरुवको** वृक्षभेदे मदनसंज्ञके ।
फणिर्जकाख्यस्तम्बे च **मणिबन्ध**ध्वनिः पुनः ॥ ९५ ॥

१. 'स्था' क. च. पाठः. २. 'त्स्थे' ग. पाठः. ३. 'प्या' ग. पाठः.

पाणिप्रकोष्ठसन्धौ च मणेर्बन्धेऽप्यथोदितः।
**मनोरथो**ऽभिलाषेऽन्यैर्वाञ्छितार्थे तथा परैः ॥ ९६ ॥
**महाकाल**स्तु किम्पाके हरे बाणासुरे तथा।
शाश्वतः प्रमथेऽप्याह **महाराज**स्तु कीर्तितः ॥ ९७ ॥
[1](म?न)खे† वैश्रवणे राज्ञि महत्यथ **महाबुसः**।
यवे हायनसंज्ञे च धान्येऽथ स्यान्**महामुनिः** ॥ ९८ ॥
रुद्राक्षे च महर्षौ च **मृत्युपुष्प**स्तु मस्करे ।
इक्षौ चाथो **मृगरिपुः** सिंहे व्याघ्रेऽप्यथोदितः ॥ ९९ ॥
**मेघनादो** मेघघोष इन्द्रजित्तण्डुलीययोः ।
वेणौ तु स्याद् **यवफल**स्तथा कुटजपादपे ॥ १०० ॥
महिषे स्याद् **यमरथो** यमस्य स्यन्दनेऽपि च।
**यादःपति**स्तु वरुणे समुद्रेऽथ **युधिष्ठिरः** ॥ १०१ ॥
धर्मपुत्रेऽपि शक्रेऽथ **रत्नाकर** इति ध्वनिः।
रत्नानामाकरेऽम्भोधौ **रञ्जसान**स्तु वारिदे ॥ १०२ ॥
धर्मे च **राजराज**स्तु धनदे राजसत्तमे ।
तृणजातौ तु दात्रे च काले चापि **लवाणकः** ॥ १०३ ॥
**लक्ष्मीपति**र्नृपे विष्णौ **लोकपाल**स्तु राजनि ।
इन्द्रादौ **वह्निगर्भ**स्तु समुद्रे पादपेऽपि च ॥ १०४ ॥
**वनद्रुम**स्त्वगुरुणि वनस्थविटपिन्यपि ।
विषभेदे **वत्सनाभो** वृक्षभेदे च दृश्यते ॥ १०५ ॥
**व्यवहारो** वाक्प्रयोगे सम्बन्धे द्यूतदण्डयोः ।
शासने वित्तसंवादे विवादेऽसिवणिज्ययोः ॥ १०

१. 'थ कथ्यते' क. ङ. च. पाठः.

† 'पुनर्भवः पाणिरुहो महाराजः पुनर्नवः' (पु. १७९. श्लो. ७६) इति वैजयन्ती।

व्यवच्छेदस्तु विज्ञेयो धनुषः शरमोक्षणे ।
व्यावर्तनायां चाथ स्याद् व्यसनव्यतिषङ्गयोः ॥ १०७॥
ज्ञेयो व्यतिकरोऽत्राह सज्जनः शब्दवित्तमः ।
व्याजप्रस्तावसम्पर्कायुक्ति(व्य ? र्थे)तिकरध्वनिः ॥ १०८॥
इत्येवम(र्थे ? त्र)शब्दार्थौ विविच्यन्तां मनीषिभिः ।
विनायको गणपतौ सुगतेऽथ विरोचनः ॥ १०९॥
अर्केन्दुवह्निष्वसुरराजे[2]ऽप्यथ विभीषणः ।
पुरन्दरे रावणस्य कनिष्ठेऽप्यथ कथ्यते ॥ ११०॥
विमलापो विरोधोक्तौ विप्रलम्भोपमर्दयोः ।
विप्रस्य भाषणे चाथ विशोलिम इति ध्वनिः ॥ १११॥
चन्द्रे सूर्येऽप्यथो[5] बिन्दुतन्त्र इत्यजयोऽपठीत् ।
चतुरङ्गे पाशके च विश्वगोप्ता तु शार्ङ्गिणि ॥ ११२॥
शक्रेऽप्यथो विश्वकर्मा देववर्धकिसूर्ययोः ।
अब्जजे वैजयन्त्याह विरिञ्चोऽब्जज उच्यते ॥ ११३॥
[6]विश्वेदेवास्तु सूर्येऽग्नौ वृक्षधूपध्वनिः पुनः ।
श्रीपिष्टाह्वयनिर्यासे निर्यासे कृत्रिमाह्वये ॥ ११४॥
वृषसानस्तु पुरुषे मृत्यौ भूमिधनेऽपि च ।
वेशवारः पिष्टमांसविशेषे चाप्युपस्करे ॥ ११५॥
शरवारिः शरमुखे पातक्यशरजीविनोः ।
शिशिम्बिष्टस्तु मेघे स्याद् भारद्वाजेऽप्यभाषत ॥ ११६॥
समूहे स्यात् समुदयः समरे च समुद्गमे ।
समुदायस्तु युद्धे स्यात् सनूढेऽथ समुच्छ्रयः ॥ ११७॥

१. 'द् व्यक्ति' क. ङ. च. पाठः. २. 'ज्ये' क. ग. च. पाठः. ३. 'स्वर्गे' क ङ. च. पाठः. ४. 'थ' क. ङ. च. पाठः. ५. 'विदुस्तन्त्र इ' क. ङ. च. पाठः. ६. 'श्व' ग. ङ. पाठः. ७. 'दौ' ग. पाठः. ८. 'वात्यकय' ग. पाठः. ९. 'क्ष्य' क. च. पाठः. १०. 'रि' क. च.; 'रिम्बिरस्तु' ङ. पाठः.

उन्नतौ च विरोधे च **समुन्नय**पदं पुनः।
समुत्क्षेपे समुदये पृष्ठस्थायिबलेऽपि च ॥ ११८ ॥
आचारे(नु? तु)**समारम्भः** सम्यगारम्भणेऽपि च।
**(सा? स)म्परायस्तु** सङ्ग्रामे विपदुत्तरकालयोः ॥ ११९ ॥
**सम्प्रयोग**स्तु सुरतेऽप्यन्वयेऽप्यभिधीयते।
**संस्तुवान**स्तु सामे[1] स्यान्महर्षौ चापि होतरि ॥ १२० ॥
कश्चिदुद्गातगीत्याह **संवत्सर**पदं पुनः।
अब्दमात्रेऽब्दभेदे च स्यात् तु **संवसथ**ध्वनिः ॥ १२१ ॥
ग्रामे संवसने चाथ **सत्यङ्कारः** करार्पणे।
सत्याकृतौ चाथो **सर्पराजो** राजिलभोगिनाम् ॥ १२२ ॥
भेदेष्वेकत्र भेदेऽपि सर्पभुक्संज्ञभोगिनि[2]।
वासुकौ **स्तनयित्नु**स्तु मेघे मेघस्य गर्जिते ॥ १२३ ॥
**सुयामुनो**[3] वत्सरा(ज?जे)* प्रासादवसुदेवयोः।
**स्थूलोच्चय**स्त्वसाकल्ये नागानां मध्यमे गते ॥ १२४ ॥
**स्नेहपूरः** क्षमायां स्यात् स्नेहस्यापि च पूरणे।
**सोमवल्क**स्तु धवलखदिरे कट्फले तथा ॥ १२५ ॥
**हन्तकारस्तु** भिक्षासु षोडशस्वपि भाषितः।
ग्रासमात्रौदनं भिक्षा हन्तशब्दकृतार्पणे ॥ १२६ ॥
**हस्तिमल्लो** गणपतौ महेन्द्रस्य च कुञ्जरे।
**हस्तिकर्णो** रोचकाख्यकम्बले हस्तिनः श्रुतौ ॥ १२७ ॥
निवारणार्थे शस्त्रस्य भटानां फलकान्तरे।
**हस्तिचारो** गजत्रासहेतौ शरभसन्निभे ॥ [illegible] ॥

1. 'संस्तवेऽप्य' ग. पाठः. 2. [illegible] पाठः. 3 'म' क. ङ. च. पाठः.

* 'सुयामुनो वत्सराजे प्रासादेऽश्मान्तरेऽच्युते' इति मेदिनी।

शस्त्रभेदे हस्तिनश्च चारे स्यात् तु धनुर्भृताम् ।
हस्तावापः शरादाने व्यधनार्थेऽपि पाणिना ॥ १२९ ॥
आवापे धान्यबीजादेर्हराहरपदं पुनः ।
योग्याचारे[1] तथा प्राणवियोगावसरोत्थिते ॥ १३० ॥
निःश्वासे हरिमन्थस्तु पीतमुद्गे हरेरपि ।
मन्थेऽथ हरिरोमः स्यात् पुरुहूते विरिञ्चने ॥ १३१ ॥
हिमारातिस्तु विज्ञेयः पावके भास्करेऽपि च ॥ १३१½ ॥

इति चतुरक्षरकाण्डे पुंलिङ्गाध्यायः ।

## अथ चतुरक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

अथो चतुःस्वरनपामध्यायो वर्णयिष्यते ।
अधिष्ठानं तु नगरे रथचक्रप्रभावयोः ॥ १ ॥
अध्यासने च[2] कैश्मीर[3]प्रसिद्धनगरान्तरे ।
कश्चित् त्वारोपणेऽप्याह व्यवस्थापन एव च ॥ २ ॥
अभ्याधानमभिन्यासे वह्न्यर्थे चेध्मसङ्ग्रहे ।
अत्याहितं महाभीत्यां प्राणानाकाङ्क्षिकर्मणि ॥ ३ ॥
*अवदातं कर्मणि स्यादितिवृत्तेऽवखण्डने ।
सज्जनस्त्वप्रधानेऽथो अरविन्दं[4] जलेऽम्बुजे ॥ ४ ॥
अन्वाहार्यममावास्याश्राद्धमिष्टेश्च दक्षिणा ।
अपस्नानं[5] मृतस्नाने येन स्नातं च वारिणा ॥ ५ ॥

१. 'यें' क. ङ. च. पाठः. २. 'तु' ङ. पाठः. ३. 'का' क. ङ. च पाठः. ४. 'न ग. पाठः. ५. 'व' क. ग. च. पाठः.

* 'अपदानं कर्माणि स्यादितिवृत्तेऽवखण्डने' (पृ. २७३. श्लो. १) इति तु वैजयन्ती ।

त(स्या?त्रा)पि स्यात् तु भूतानां स्वपक्षप्रभवे भये।
भयमात्रेऽप्याहिभयमथो **आयतन**ध्वनिः ॥ ६ ॥

देवालये शरण्ये च गृहमात्रे च तो[1]रणे ।
स्थानमात्रे च विज्ञेयमा**तञ्चन**पदं पुनः ॥ ७ ॥

आप्यायने च जवने प्रती[2]वापेऽपि दृश्यते ।
**आस्कन्दनं** स्यादास्कन्दे युद्धेऽप्या**स्तरणं** पुनः ॥ ८ ॥

आस्तीर्णौ च कुथे चापि दर्भाद्यास्तीर्णवस्तुनि।
**आयोधनं** वधे युद्ध **आवेशन**पदं पुनः ॥ ९ ॥

‡कुवेशे शिल्पिशालायाम**थोद्धरण**मुन्नये ।
(खाता?वान्ता)न्ने* शाश्वतस्तून्मूलने भुक्तोज्झितेऽपि च ॥ १० ॥

अ**थोत्पतन**मुत्पत्तावूर्ध्वं गमन एव च ।
**उत्सर्जनं** तु दाने च परित्यागे च कीर्तितम् ॥ ११ ॥

**उन्मीलनं** स्यादुन्मेषे विकासे कुसुमस्य च ।
**उपधान**मुपष्टम्भ उपष्टम्भनसाधने ॥ १२ ॥

उच्छीर्षकेऽ**थोपमान**मुपमायां च येन च ।
उपमीयेत तत्रापि **कपिशीर्षं** पुनः कपेः ॥ १३ ॥

मूर्ध्नि प्राकारशिखरेऽप्यथ **कामपदं** भगे ।
कामस्यापि पदे **कोकनदं** तु कथितं बुधैः ॥ १४ ॥

रक्ताब्जे रक्तकुमुदेऽप्यथ ज्ञेयं **गृहोदकम्** ।
काञ्जिके गृहसम्बन्धिजले **गोदारणं** पुनः ॥ १५ ॥

कुद्दाले लाङ्गले चाथ **चामीकर**मिति ध्वनिः ।
चामरे कनके चाथ **च्युतादान**मिति ध्वनिः ॥ १६ ॥

१. 'का' क. ग. च. पाठः. २. 'ति' ख. ङ. पाठः

‡ 'आवेशनं शिल्पिशाले भूतावेशप्रवेशयोः' इति विश्वमेदिन्यौ । * 'स्यादुद्धरणमुद्वान्तके ऽप्युत्पाटनेऽपि च' (पृ. २७३. श्लो. ६) इति वैजयन्ती ।

कन्दुकादानदण्डे स्याच्च्युतस्य ग्रहणे(न?ऽपि) च ।
**जपापुष्पं** कुङ्कुमे स्याज्जपायाः कुसुमेऽपि च ॥ १७ ॥

**जलाञ्जलं** स्रुतो वारिनिर्गमे शैवलेऽपि च ।
**त्रिवर्णकं** त्रिगन्धे स्यात् त्रिफलायां कटुत्रये ॥ १८ ॥

षोडशाहोपवासे तु + + + + + + + + ।
+ + † नाम्नो देवमुनेः सत्रे चाप्यथ कीर्तितम् ॥ १९ ॥

**देवधान्यं** यावनाले देवानामपि धान्यके ।
**निःश्रेयसं** तु कल्याणे मोक्षे **निःसरणं** पुनः ॥ २० ॥

उपाये निर्गमे द्वारे मरणे भयनिर्गतौ ।
याने पुरगृहादीनां मुखे **निस्तरणं** पुनः ॥ २१ ॥

उपाये तरणे चाथ स्या**न्निर्हरण**मित्यदः ।
निर्हृतौ मुष्टिमान्द्ये च बन्द्धुं **निरसनं** पुनः ॥ २२ ॥

निरासे च वधे चाथ मरणे स्या**न्निर्मीलनम्** ।
निमेषे मुकुलीभावेऽप्यर्थो **निवसन**ध्वनिः ॥ २३ ॥

वसनक्रिययोर्वस्त्रे गृहेऽपि स्यात् त्वलक्तके ।
**निर्भर्त्सनं** खलीकारेऽप्यथ स्या**न्निकुरुम्ब**वाक् ॥ २४ ॥

अङ्कुरे च समूहे च **नृपलक्ष्म** तु भूपतेः ।
छत्रे नृपस्य चिह्ने च **प्रयोजन**पदं पुनः ॥ २५ ॥

कार्ये हेतौ **प्रवचनं** पुनर्व्याख्यानवेदयोः ।
प्रशस्तवचने च स्याच्छास्त्र इत्याह सज्जनः ॥ २६ ॥

अथ **प्रकरणं** प्रोक्तं प्रकीर्णो रूपके क्वचित् ।
दशानां रूपकाणां स्याद् दृश्यते च प्रघट्टके ॥ २७ ॥

स्यात् तु **प्रहरणं** शस्त्रे युद्धे **प्रवहणं** पुनः ।
कर्णीरथे प्रकृष्टे च वहनेऽथ प्रमन्थने ॥ २८ ॥

१. 'गृहपुरादौ' क. ङ. च. पाठः २. 'क' च. पाठः. ३. 'प्रभेद' ग. पाठः. 'च' क. च. पाठः.

† अत्र 'तुरसत्रपदं तथा । तुर' इति पाठः स्यात् ।

हिंसायां च **प्रमथनं** भवेत् **प्रजननं** पुनः।
उपस्थयोः प्रजातौ च विद्यात् **प्रहसनं** पुनः॥ २९॥

रूपकाणामन्यतमे प्रहासेऽथ **प्रदेशनम्**।
प्रदिष्टौ प्राभृते[1] दाने **प्रस्फोटन**पदं पुनः॥ ३०॥

शूर्पे शूर्पेण पवने **पद्मपत्र**पदं पुनः।
भवेत् पुष्करमूलाख्यभेषजेऽब्जस्य चच्छदे॥ ३१॥

**प्रतिदानं** परी[2]वर्ते न्यासद्रव्यस्य चार्पणे।
**प्रतिमानं** प्रतिकृतौ गजदन्तद्वयान्तरे॥ ३२॥

**परिधान**मधोवस्त्रे तदाच्छादनकर्मणि।
**परासनं** निरसने वधे चाथ **परायणम्**॥ ३३॥

चतुर्मासोपवासे च साकल्यासङ्गयोरपि।
अथ **पारायणं** ध्याने तत्परेऽधीष्ट आश्रये॥ ३४॥

साकल्यासङ्गयोश्च स्यादङ्कुशस्य च [3]बन्धने।
[4]जलेन चतुरो मासाञ्जीवनेऽप्यथ पाप्मनः॥ ३५॥

निष्कृतौ रुक्चिकित्सायां **प्रायश्चित्त**मथोदितम्।
**पीतदारु**पदं पीतचन्दने देवदारुणि॥ ३६॥

अथ **पुंसवनं** गर्भस्त्रियाः संस्कारकर्मणि।
क्षीरे पुंसश्च सवने विद्यात् **पुष्परजः** पुनः॥ ३७॥

कुङ्कुमे च परागेऽथ सरले देवदारुणि।
**पूतिकाष्ठ**मथो शुण्ठ्यां लशुनेऽपि **महौषधम्**॥ ३८॥

विद्यादतिविषायां च शकटे तु **महानसम्**।
पाकस्थानेऽप्यथो भावकर्मणोर्मिथुनस्य च॥ ३९॥

**मिथुनत्वं** र[5]ते चाथ कालशेये **रसायनम्**।
रसस्याप्ययने दीर्घजीवित्वकरभेषजे॥ ४०॥

१. 'तौ' क. च. पाठः. २. 'रि' ङ. पाठः. ३. 'खण्डने' ग. पाठः. ४. 'क' क. च. पाठः. ५. 'थे' क. ग. च. पाठः.

अथो रत्नवरं स्वर्णे रत्नानां प्रवरेऽपि च ।
रतर्धिकं सुखे स्नाने दिनमङ्गलयोरपि ॥ ४१ ॥

रागसूत्रं तुलासूत्रे पट्टसूत्रेऽजयोऽब्रवीत् ।
शब्दशास्त्रे व्याकरणं ज्याटङ्कारे स्फुटीकृतौ ॥ ४२ ॥

विसर्जनं परित्यागे दाने विहननं पुनः ।
पिञ्जने च वधे च स्यात् पिञ्जनं प्रविसारणम् ॥ ४३ ॥

विघात् कार्पासतूलादेर्विघातेऽप्यथ कथ्यते ।
वैकक्ष्यकमुरःस्थानतिर्यग्[1]विक्षिप्तमाल्यके ॥ ४४ ॥

प्रावारे शृङ्गिवेरं तु शुण्ठ्यामप्यार्द्रकेऽप्यथ ।
संसारे स्यात् संसरणमसम्बाधचमूगतौ ॥ ४५ ॥

घण्टापथे जन्मनि च वारणेऽप्याह सज्जनः ।
संसार उक्त्वा भूयोऽपि संसृतावजयोऽब्रवीत् ॥ ४६ ॥

शरीरे स्यात् संहननं घटनेऽप्यथ कथ्यते ।
वशीकृतौ सं[3]वननं सम्भक्तौ याचनेऽप्यथ ॥ ४७ ॥

उत्क्षौ स्यात् स्वस्त्ययनं क्षेमेण गमनेऽप्यथ ।
मेखलायां सारसनमुरस्त्राणेऽपि केचन ॥ ४८ ॥

सकञ्चुका भटा मध्ये यद् बध्नन्त्यधिकाङ्ककम् ।
इति नाम्ना परे तत्र समासोऽध्याय ईत्ययम् ॥ ४९ ॥

इति चतुरक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

१. 'न्यग्तमा' क. च. पाठः. २. 'घे' ग. ङ. च. पाठः. ३. 'ह' ग. पाठः
४. 'उत्तमः ॥' ग. पाठः.

## अथ चतुरक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

अथो चतुःस्वराः शब्दा भेद्यलिङ्गाश्च ये स्मृताः ।
तेषामयमिहाध्यायः स्पष्टः प्रस्तूयतेऽधुना ॥ १ ॥

**अभिजातः** कुलीने च न्याय्यपण्डितयोरपि ।
**अभिनीतः** संस्कृते च न्याय्ये चामर्षवत्यपि ॥ २ ॥

**अभिरूपो** बुधे चारावभिपन्नं त्वभिद्रुते ।
अभिग्रस्तेऽपराद्धे च तथैवोक्तं विपद्गते ॥ ३ ॥

**अभियुक्तः** परिचिते परिक्षिप्तेऽरिसेनया ।
व्यवहारप्रवृत्तानां तथैवोत्तरवादिनि ॥ ४ ॥

**अभिशस्तो**ऽभिशस्ते स्याद् विवाद्युत्तरवादिनि ।
**अत्यारूढं** समारूढे दृश्यतेऽभ्यधिकेऽपि च ॥ ५ ॥

**अधिक्षिप्तं** प्रणिहिते प्रेक्षिते भर्त्सितेऽपि च ।
अथाध्यक्षेऽप्यधिकृतः स्वरितेनानुवर्तिते ॥ ६ ॥

**अवदातः** सिते पीते प्रधाने शुद्ध एव च ।
अविदूरे(ऽप्य?त्व)**वष्टब्ध**मवलम्बित एव च ॥ ७ ॥

**अपध्वस्तं** धिक्कृते स्यादुज्झितेऽप्यवचूर्णिते ।
केचित् तु निन्दिते प्राहुर्धिक्कृतार्थमशासतः ॥ ८ ॥

निश्चिते स्याद**वसितं** समाप्त उषितेऽपि च ।
**अवाचीनं** विपर्यस्तेऽप्यवागर्थेऽपि दर्शितम् ॥ ९ ॥

**अतिवेलं** भृशे वेलामतिक्रान्तेऽप्यथोच्यते ।
सहाये स्याद**नुचर**स्तथैवाप्यनुगन्तरि ॥ १० ॥

**असम्पृक्त**स्त्वसंस्पृष्टे रहस्यन्तर्गतः पुनः ।
विस्मृतेऽन्तःप्रविष्टेऽथो **अवकीर्ण**मिति ध्वनिः ॥ ११ ॥

**अवज्ञाते**ऽप्यवाकीर्णेऽप्य**थानूचान** इत्ययम् ।
विनयावनते साङ्गवेदाधीतिनि च द्विजे ॥ १२ ॥

**अभियोक्ता** विवादेषु पूर्ववादिन्यपि द्विषः ।
परिक्षेप्तरि सैन्येन स्यादथो **अनुजीविवाक्** ॥ १२ ॥

सहाये सेवके चाथो **आक्षारित** इति ध्वनिः ।
विवादेष्वभियुक्ते चाक्षाविते चाभिशस्तके ॥ १४ ॥

अथो **आपणिकः** ख्यातो वणिक्पत्तनवासिनोः ।
शाकटायननिर्णीतस्तथैव व्यवहारके ॥ १५ ॥

**उद्ग्राहितमुपन्यस्ते** बद्धग्राहितयोरथ ।
उत्कीर्णे स्यादु**ल्लिखितमनुषक्ते** तनूकृते ॥ १६ ॥

**कक्ष्यापालस्त्वौपरिके** शूरपालेऽजयोदितः ।
‡**कौकूटिको** दाम्भिके च स्याच्चादूरेरितेक्षणे ॥ १७ ॥

*दशमीस्थो नष्टबीजे स्थविरे च मृताशने ।
**प्रतिशिष्टं** निरस्ते स्यादाहूय प्रेषिते तथा ॥ १८ ॥

स्यात् तु **प्रणिहितं** प्राप्ते न्यस्तेऽपि च समाहिते ।
विद्विष्टे तु **प्रतिहतं** प्रतिस्खलितवस्तुनि ॥ १९ ॥

अथ **प्रज्वलितं** दग्धे दीप्ते दीपित एव च ।
अथो **परिगतं** व्याप्ते विज्ञाते परिवेष्टिते ॥ २० ॥

स्यात् तु **पक्षचरो** यूथभ्रष्टेऽप्येकचरेऽपि च ।
**प्राप्तरूपः** सुन्दरे स्यात् तथैव च विचक्षणे ॥ २१ ॥

१. 'नु' ग पाठः. २. 'कु' ग., 'कूटीको' क., 'कुटीको' च. पाठः. ३. 'भि' क. च. पाठः. ४. 'व' क. ङ. च. पाठः.

‡ 'कौकुटिको डाम्भिकः स्याद् (पृ. २७५. श्लो ६) इति तु वैजयन्ती । * 'दशमीस्थस्तु स्थविरे नष्टबीजि मृताशने' (पृ. २७५. श्लो. ७) इति तु वैजयन्ती ।

पुरस्कृतः पूजिते स्यादभियुक्ते च शत्रुभिः ।
अग्रतश्च कृते कश्चित् त्वभिषिक्ते[1]ऽप्यभाषत ॥ २२ ॥
पुण्यश्लोकः पुण्यकीर्तौ सज्जनस्तु प्रियंवदे ।
ब्रह्मबन्धुरधिक्षिप्य निर्देश्ये[2] ब्राह्मणाधमे ॥ २३ ॥
मत्तनागे मर्दकलो[3] मदेनाव्यक्तवाचि च ।
यातयामं तु जीर्णे स्यात् परिभुक्तोज्झितेऽपि च ॥ २४ ॥
लालाटिकः प्रभुच्छन्ददर्शिकार्यासमर्थयोः ।
विशारदो बुधे धृष्टे तथा विगतशारदे ॥ २५ ॥
विवक्षितं तु रुचिरे वक्तुमिष्टे च भाषितम् ।
विलम्बितं वञ्चिते स्यान्मन्दे शाकुनिकः पुनः ॥ २६ ॥
वैतंसिके निमित्तज्ञे समाहितपदं पुनः ।
प्रतिज्ञाते समाधिस्थे तथा परिहृते[5]ऽप्यथ ॥ २७ ॥
गर्विते पण्डितम्मन्ये समुन्नद्ध उदीरितः ।
समर्यादं समीपे स्यान्मर्यादासहिते तथा ॥ २८ ॥

इति चतुरक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

---

## अथ चतुरक्षरकाण्डे नानालिङ्गाध्यायः ।

अथो चतुःस्वराः शब्दा नानालिङ्गाश्च ये स्मृताः ।
तेषामयमिहाध्यायः स्पष्टः प्रस्तूयतेऽधुना ॥ १ ॥
अम्बरीषः पुमान् सूर्ये राजर्षौ च चिरन्तने ।
तथाश्वसाधके तैलपर्ण्यां च क्ली तु संयुगे ॥ २ ॥
तृणजातिविशेषे च वर्षे रोधसि वाससि ।
केचिच्चुल्ल्यां महाभ्राष्ट्रेऽप्याहुरन्ये कुलेऽपि च ॥ ३ ॥

१. 'षेकेऽप्य' ग. पाठः. २. 'शे' क. च. पाठः. ३. 'दो' ग. पाठः. ४. 'त्त' क च. पाठः. ५. 'हृ' क. च. पाठः.

अग्नियां आष्ट्रमात्रेऽन्ये किशोरे तु द्वयोरयम् ।
अकूपारस्तु नादित्ये समुद्रे कूर्मराजि च ॥ ४ ॥
अकूपारा तु कस्याञ्चित् पुत्र्यामाङ्गिरसः स्त्रियाम् ।
अनुरूपस्तु सदृशे स्मृतस्त्रिषु मनीषिभिः ॥ ५ ॥
स्याद् बहिष्पवमानस्य द्वितीये च तृचे[1] पुमान् ।
ना त्वव्यथिष[2] आदित्ये समुद्रे च सुखेऽपि च ॥ ६ ॥
क्षेत्रज्ञेऽव्यथिषी तु स्त्री पृथिव्यां रजनावपि ।
द्वयोस्त्वनिमिषो देवे मत्स्ये त्रिस्त्वनिमेषके[3] ॥ ७ ॥
अनिमेषो द्वयोर्देवे मत्स्ये त्रिस्त्वनिमेषके ।
अविशेषस्त्ववेः शेषे विशेषादितरत्र च ॥ ८ ॥
ना यस्य न विशेषोऽस्ति तत्र स्याद् भेद्यलिङ्गकः ।
अन्तरिक्षं तु गगने क्ली साम्नोरुभयोरपि ॥ ९ ॥
वैरूपाष्टकवर्गस्य ये साम्नी उपरि स्थिते ।
वास्तुदेवविशेषे तु पुंसि स्यात् सर्वदक्षिणे ॥ १० ॥
कोष्ठे यो वर्तते प्राच्यैकोष्ठपङ्क्तेर्हि वास्तुनः ।
क्ली त्वग्निशिखमाम्नातं कुसुम्भे कुङ्कुमेऽपि च ॥ ११ ॥
स्त्रियां त्वग्निशिखा शक्रपुष्पीति प्रथितौषधौ ।
लाङ्गलक्याह्वयायां च वह्नेश्चापि तथार्चिषि ॥ १२ ॥
अग्निज्वाला पुनः स्त्री स्याद् धातकीसंज्ञपादपे ।
स्त्रीपुंसयोस्तु वह्नेः स्याज्ज्वालेऽथो अग्निगन्धवाक् ॥ १३ ॥
कणजीरणनाम्ना स्यात् प्रसिद्धे सूक्ष्मजीरके ।
अग्नेर्गन्धे च पुंस्यग्नितुल्यगन्धे तु स त्रिषु ॥ १४ ॥
अग्निहोत्रं त्वाहिताग्नेर्नित्यहोमे नपुंसकम् ।
होमधेनौ त्वग्निहोत्री स्त्र्यवतंसस्तु पुन्नपोः ॥ १५ ॥

1. 'णे' ग. पाठः. 2. 'धि' ग. पाठः. 3. 'के । अवि' ग. ङ. च. पाठः. 4. 'च्यः' क. ङ. च. पाठः.

शेखरे कर्णपूरे चाप्यथ स्याद[1]वहारवाक् ।
ग्राहाख्ययादसि द्वे स्यात् त्रिषु चोरे पुमान् पुनः ॥ १६ ॥
निमन्त्रणोपनेतव्यद्रव्येऽ[2]वहरणेऽपि च ।
द्यूतयुद्धादि†विश्रान्तादथ स्यादवगीतवाक् ॥ १७ ॥
निर्वादे क्ली त्रिषु पुनर्मुहुर्दृष्टेऽपि गर्हिते ।
अवलग्नं तनोर्मध्ये न स्त्री सक्ते पुनस्त्रिषु ॥ १८ ॥
अवखातस्तु पुंसि *स्याच्छूरीसंज्ञजलाशये ।
खाते त्रिरतिमुक्तस्तु पुमांस्तिमिशपादपे ॥ १९ ॥
माधवीसंज्ञकुसुमलतायां चाप्यथ त्रिषु ।
अतीव मुक्तेऽत्याकारस्त्वधिक्षेपे परे पुनः ॥ २० ॥
अवज्ञायां त्रिषु पुनरत्याकृतिनि नप् पुनः ।
काञ्जिकेऽभिषवे चाभिषुतं स्यात् त्वन्यलिङ्गकम् ॥ २१ ॥
कर्मण्यभिषवस्याथो अभिषिक्तपदं द्वयोः ।
क्षत्रियायां समुद्भूते ब्राह्मणाद् व्यभिचारतः ॥ २२ ॥
कृताभिषेके तु त्रि स्यादभिधानं तु पुन्नपोः ।
नाम्नि क्लीबं तु वचने बन्धने च स्त्रियां पुनः ॥ २३ ॥
अभिधानी पशो रज्जावभि[3]प्लवपदं पुनः ।
पुमानभिमुखप्लुत्यां यज्ञस्याहर्गणान्तरे ॥ २४ ॥
त्रिः पुनः सेवकेऽथ स्यादनुदात्तः पुमान् स्वरे ।
निघाताख्ये तद्वति तु त्रिरुदात्तात् परत्र च ॥ २५ ॥
अनुक्रोशः कृपायां ना स्यादनुक्रोशनेऽपि च ।
क्ली तु सामान्तरेऽथ स्यादस्थिखादः शुनि द्वयोः ॥ २६ ॥

१. 'प' क. ग. ङ. पाठः. २. 'प' क. ग. ङ. पाठः. ३. 'प्लुतप' ग. पाठः.

† 'विश्रान्तावथ' इति स्यात् । 'अवहारस्तु युद्धादिविश्रान्तौ ग्राहचौरयोः ।' इति हैमः
* 'अवखातस्तु कीर्णः स्यादुत्कीर्णश्च पुरी स्त्रियाम् ।' (पृ. १५४. श्लो. ७) इति तु वैजयन्ती

त्रिष्वस्थ्रः खादकेऽस्थ्रस्तु खादने पुंस्त्रियोरथ ।
अहिच्छत्रं तु नब्लिङ्गं छत्राके स्यान्नृभूम्नि तु ॥ २७ ॥
*प्रत्यग्रधा इति ख्याते ख्यातो जनपदान्तरे ।
अनिरुद्धः पुमान् पत्यावुषायाश्च त्ववारिते ॥ २८ ॥
अर्धहस्तस्तु ना पञ्चहस्तमाने नृनप् पुनः ।
हस्तस्यार्धेऽर्धचन्द्रा तु मसूरविदलाह्वये ॥ २९ ॥
लताभेदे स्त्रियां ना तु क्षुरप्राख्यायुधान्तरे ।
चन्द्रस्यार्धेऽप्यथो अम्बुप्रियो ना वेतसद्रुमे ॥ ३० ॥
त्रि तु प्रियजलेऽथाम्लिप्रियो ना चूतनीपयोः ।
काकजम्बूसमाख्ये च जम्बूभेदे स्त्रियां त्वयम् ॥ ३१ ॥
अलेः प्रियायां त्रिषु तु प्रिये मधुलिहस्तथा ।
अलिर्यस्य प्रियस्तत्राप्यथो अश्वप्रियो यवे ॥ ३२ ॥
पुमान् समासभेदेषु त्वर्थो लिङ्गं च पूर्ववत् ।
अश्वबालस्तु काशे ना बाले त्वश्वस्य पुन्नपोः ॥ ३३ ॥
अश्वपण्यस्त्वनूढायां वैश्यायां क्षत्रिया(न्तः?न्न)गे ।
जाते द्वयोस्त्रिषु पुनर्बहुव्रीहौ नपि त्वदः ॥ ३४ ॥
ज्ञेयं तत्पुरुषेऽथ स्यादपक्रम इति त्रिषु ।
गर्ह्यक्रमयुते पुंसि त्वपगत्यां पलायने ॥ ३५ ॥
त्रिषु त्वपशदो नीचे द्वे तु षट्सु नृजातिषु ।
वर्णानामानुलोम्येन जातास्वथ पराक्रमे ॥ ३६ ॥
अपदानं नपि त्रिस्तु बहुव्रीहावथो पुमान् ।
अपसव्यः सूतकादौ प्रतिकूले तु स त्रिषु ॥ ३७ ॥

१. 'स्थ्रां' ङ. पाठः. २. 'गुह्यक' क. ङ. च. पाठः.

* 'साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्' (४. १. १७३) इति सूत्रानुरोधात् 'प्रत्यग्रथा' इति पाठो युक्तः प्रतिभाति ।

दक्षिणे च तनोर्ना तु चारभेदेऽपसर्पवाक् ।
अपसृतौ बहुव्रीहौ त्वेष त्रिः क्ली त्वपासनम् ॥ ३८ ॥

वधे निरसने चापि बहुव्रीहौ तु तत् त्रिषु ।
अपाश्रयस्तु ना मत्तवारणेऽपाश्रितावपि ॥ ३९ ॥

अन्येषु च समासेषु लिङ्गार्थौ पूर्ववत् स्मरेत् ।
अ(प?प्र)हृष्टस्तु काके द्वे त्रि त्वप्रमुदिते भवेत् ॥ ४० ॥

अष्टापदोऽस्त्री कनके तथा शारिफलेऽपि च ।
अष्टवर्गस्तु ना राज्ञामारम्भाद्यष्टके तथा ॥ ४१ ॥

अष्टके भेषजानां च मेदादीनां भिषक्श्रुते ।
समानामपि चाष्टानां समूहे भेद्यवत् पुनः ॥ ४२ ॥

बहुव्रीहावनीकस्थस्त्वनीके[1] स्थातरि त्रिषु ।
ना तु राज्ञां रक्षिवर्गे *गजशिक्षाक्रमेऽपि च ॥ ४३ ॥

अधिकाङ्गं सारसनसंज्ञे कवचधारिभिः ।
मध्यबद्धे[2]ऽधिके चाङ्गे क्ली त्रि त्वन्यपदार्थकम् ॥ ४४ ॥

अङ्गारकस्तु ना भौमे द्वयोस्तु विहगान्तरे ।
अश्मन्तकं तु नपुंस्त्रीत्वे चुल्ल्यां वृक्षान्तरे तु ना ॥ ४५ ॥

अङ्गुलीयं तूर्मिकाख्ये क्लीबमङ्गुलिभूषणे ।
स्यादङ्गुलिभवे तु त्रिरब्रह्मण्यं तु नप्यदः ॥ ४६ ॥

‡नाट्यावध्यो[3]क्तिषु त्रिस्तु ब्रह्मण्यादन्यवस्तुनि ।
अरोचको नारुच्याख्यरोगेऽरोचितरि त्रिषु ॥ ४७ ॥

१. 'क' ग. ङ. पाठः. २. 'न्धे' ग. ङ. पाठः. ३. 'ध्यो' ग. पाठः.

* 'नृपरक्षिण्यनीकस्थो हस्तिशिक्षाविचक्षणे' (पृ. २६६. श्लो. १४) इति तु वैजयन्ती ।
‡ 'अब्रह्मण्यमवध्यं स्याद्' (पृ. १४४. श्लो. १०९) इति वैजयन्ती । 'अब्रह्मण्यमवध्योक्तौ' इति त्वमरसिंहः ।

यत् तु सर्वौषधिस्नानं तत्र क्लीबमलोचकम् ।
अलोचितरि तु त्रि स्यात् तथालोचयितर्यपि ॥ ४८ ॥

अमावास्या स्त्रियां दर्शे जाते त्वत्र त्रिषु स्मृता ।
त्रिषु त्वसहनः शत्रौ बहुव्रीहौ च नप् पुनः ॥ ४९ ॥

ज्ञेयं तत्पुरुषेऽथार्कपुष्पमर्काख्यशाखिनः ।
पुष्पे नृशण्डयोः साम्नोस्तूभयोः स्यान्नपुंसकम् ॥ ५० ॥

अरुष्करस्तु पुंसि स्याद् भल्लातकमहीरुहे ।
त्रि तु व्रणकृति त्रि स्यादृजुगामिन्यजिह्मगः ॥ ५१ ॥

असर्पे तु द्वयोर्ना तु शरेऽथो अर्शसानवाक् ।
नाग्नौ मनसि च द्वे तु ब्राह्मणे कश्चिदब्रवीत् ॥ ५२ ॥

अन्नपानस्तु पुंसि स्यादृषिभेदेऽस्त्रियां भुजे ।
अविसोढं त्ववेर्दुग्धे क्ली विसोढात् परे त्रिषु ॥ ५३ ॥

अशिरस्कः कबन्धे ना बाहौ चामूर्ध्नि तु त्रिषु ।
अबलोर्णं तु शण्डे स्यात् ताम्बूलस्य विचर्विते[1] ॥ ५४ ॥

चूर्णे ना त्वस्फुटायां स्याद् वाचि त्रिषु पुनर्भवेत् ।
उपर्युदीच्यश्रेष्ठानां विपरीतेष्वनुत्तरः ॥ ५५ ॥

श्रेष्ठे च विपरीते तु प्रतिवाक्यस्य नप्ययम् ।
अयोमयस्त्वयस्कान्ते पुमान् स्त्रीपुंसयोः पुनः ॥ ५६ ॥

अयोमयमणौ त्रिस्तु नाथेऽधिपतिरित्ययम् ।
पुमांस्तु मूर्ध्न आवर्ते ब्राह्मणे त्वग्रजन्मवाक् ॥ ५७ ॥

द्वयोर्ज्येष्ठे च सहजे स्यादन्तेवासिवाक् पुनः ।
शिष्ये त्रिषु द्वे चण्डाले स्यादित्येवं विदुर्बुधाः ॥ ५८ ॥

आडम्बरोऽस्त्री संरम्भे गजगर्जिततूर्ययोः ।
युद्धवादित्रनिर्घोषे केचित् क्रोधे तु सज्जनः ॥ ५९ ॥

१. 'र्वि' ग. पाठः.

आभोगे चाथ पुंसि स्यादारोहण इति ध्वनिः ।
रथे क्ली त्वधि[1]रोहस्य साधने चाधिरोहणे ॥ ६० ॥
स्त्रियामाश्वयुजी पौर्णमासीभेदेऽश्वयुग्युते ।
ना तु मास्याश्विने त्रिस्तु जातेऽश्विन्याख्यकालके ॥ ६१ ॥
द्वयोस्त्वाखनिको वारिचरपक्षिणि सूकरे ।
तटाककारे तु त्रि स्यात् त्रिषु त्वापतिकध्वनिः ॥ ६२ ॥
पादोष्णके वणिजि च द्वे तु श्येनमयूरयोः ।
पुंसि कालेऽथापदिको वणिजि त्रि पुमान् पुनः ॥ ६३ ॥
इन्द्रनीले भवेदिन्द्रकीले चा[2]थो पुमान् भवेत् ।
इन्द्रनीले चेन्द्रनीले* तथापानिक इत्ययम् ॥ ६४ ॥
वणिजि त्रिष्वथो आस्यप्रिया निष्पावसंज्ञके ।
धान्यभेदे स्त्रियां वक्त्रप्रिये तु त्रिष्वना पुनः ॥ ६५ ॥
आवर्तना स्यादभ्यासे सूत्रस्य लवने$ तथा ।
आवृत्तौ तु नपि स्यात् तु क्लीबमास्फोटनध्वनिः ॥ ६६ ॥
आस्फोटे स्त्री तु वेधन्यामास्फोटन्यथ नर्तने ।
रसभावाङ्गहाराद्यैः शास्त्रोक्तै रूपकाश्रये ॥ ६७ ॥
आभ्यन्तरं क्ली त्रि त्वेतदभ्यन्तरभवादिषु ।
आत्मनीनः सुते स्याले प्राणधारिणि दूषके ॥ ६८ ॥
अजयस्य त्वयं पाठः प्राणधारे[3] विदूषके ।
अर्थयोः पूर्वयोर्लिङ्गं द्वे त्रि तूत्तरयोर्भवेत् ॥ ६९ ॥
आत्मने च हिते ना तु यद्यर्थस्या विदूषकः(?)§ ।
अना त्वाकलना बन्धे सङ्ख्यानज्ञानयोरपि ॥ ७० ॥

१. 'व' ग. पाठः. २. 'वा' क. ङ. च. पाठः. ३. 'र' क. च., 'रणद्' ङ. पाठः.

* 'इन्द्रकीले' इति स्यात् । $ 'वलने' इति स्यात् । 'आवर्तनं तु वलनम्' (पृ. १३६. श्लो. ११) इति वैजयन्ती । § 'यद्यर्थः स्याद्विदूषकः' इति पाठः स्यात् ।

क्लीं शब्दने समूहे च स्यादथाराधना न ना ।
सन्तोषणायां तृप्तौ च संसिद्धौ चाप्यथो न ना ॥ ७१ ॥
आमन्त्रणं स्यादाह्वाने स्यादनुज्ञापनेऽपि च ।
कामचाराभ्यनुज्ञानेऽप्यथो आमन्त्रिता न ना ॥ ७२ ॥
सम्बोधनविभक्तौ स्यात् त्रि त्वनुज्ञापिते तथा ।
अनुज्ञाते च श(ब्द?ण्ड)स्तु स्यादामन्त्रणकर्मणि ॥ ७३ ॥
आघारणः स्रुवे पुंसि न तु ना क्षारणेऽथ ना ।
आवापकः †परीहार्ये स्यादावप्तरि तु त्रिषु ॥ ७४ ॥
आध्यात्मिकस्तु योगे स्यात् पुमान् ध्यानात्मके त्रि तु ।
स्यादध्यात्मभवेऽथ स्यादाथर्वणमिति ध्वनिः ॥ ७५ ॥
अथर्वणां समूहेऽपि तेषामाम्नायधर्मयोः ।
इदं शान्तिगृहेऽपि स्यात् साम(वे?भे)देऽप्यथर्वणा ॥ ७६ ॥
शन्नो देवीरिति ह्यस्यामृचि दृष्टे नपुंसकम् ।
वाच्यलिङ्गं तु सम्बन्धिमात्रे विद्यादथर्वणः ॥ ७७ ॥
आयोगवो द्वे वैश्यायां शूद्राज्जाते निषादतः ।
शूद्रायामपि जातेऽथो त्रिष्वयोमयपत्रिणः ॥ ७८ ॥
सम्बन्धिनि स्त्रियां तु स्याद् विद्युत्याकालिकीपदम् ।
अह्नो वा रजनेर्वापि भागमारभ्य कञ्चन ॥ ७९ ॥
आ तस्मात् परतो भागाद् भवे ह्याकालिकं त्रिषु ।
आर्यपुत्रो द्वयोरार्यतनये ना तु भर्तरि ॥ ८० ॥
नाट्योक्तिविषयेऽत्रैव देवरेऽप्यथ वेष्टके ।
त्रि स्यादावेष्टको वाटे पुनर्नाथापुमानयम्* ॥ ८१ ॥
आयतस्तू(त्?ः) पुमान् कश्चित् त्वाचष्टे ब्राह्मणे द्वयोः ।
क्लीबमिन्द्रायुधं शक्रचाप इन्द्रायुधा पुनः ॥ ८२ ॥

---

† 'आवापकः पारिहार्ये' इत्यमरः । * इत उपरि कियांश्चिद् ग्रन्थोऽपेक्षित इव भाति ।

अचिकित्स्यविषायां स्यात् सविषाणां जलौकसाम् ।
षण्णामेकजलूकायां स्त्रियामश्वान्तरे पुनः ॥ ८३ ॥

कृष्णैर्नेत्रैः समायुक्ते द्वयोरिन्द्रमहः पुनः ।
शुनि द्वे ना तु शक्रस्य महेऽथो इन्द्रकोशवाक् ॥ ८४ ॥

तमङ्गकाख्येऽवयवे गृहस्याऽस्त्री तथा हरेः ।
कोशेऽपीन्दीवरं तु स्यात् क्लीबं नीलोत्पलेऽथ सा ॥ ८५ ॥

इन्दीवरा शतावर्यां स्त्रियां ना त्विध्मवाहवाक् ।
दृढच्युतसंज्ञकमुनौ त्रिषु त्विध्मस्य वाहके ॥ ८६ ॥

इन्द्रवृद्धिस्तु निर्मुष्कहये पुंसि स्त्रियां पुनः ।
इन्द्रस्य वृद्धौ द्वे त्वीहामृगो वृक इति श्रुते ॥ ८७ ॥

मृगभेदे पुमांस्त्वेष दशरूपकमध्यगे ।
स्याद् रूपकप्रभेदेऽथो पुमानेष उदुम्बरः ॥ ८८ ॥

वृक्षे जन्तुफलाभिख्ये देहल्यां च नृभूम्नि तु ।
नीवृतः साल्वसंज्ञस्यावयवे क्षुद्रनीवृति ॥ ८९ ॥

क्ली तु ताम्रे च हेमाक्षेऽप्युग्रगन्धा पुनः स्त्रियाम् ।
वचायामजमोदायां सिते तु लशुने पुमान् ॥ ९० ॥

फलवल्लीविशेषे(ण ? च) चीर्णवृन्त इति श्रुते ।
उपह्वरोऽस्त्री रहसि समीपेऽथो उपासना ॥ ९१ ॥

शुश्रूषायां शराभ्यासे समीपासन एव च ।
न नाथो उपकार्या स्त्री राजगेहे त्रिषु त्विदम् ॥ ९२ ॥

उपकर्तव्यकेऽथ स्यादुपग्राह्यं त्रिषु स्मृतम् ।
विद्यादुपग्रहीतव्ये प्राभृते तु नपुंसकम् ॥ ९३ ॥

उपोदका स्त्रियां शाकवल्लिभेदे सुताह्वये ।
जलं तूपगते त्रि स्यात् पुमांस्तु स्यादुपद्रवः ॥ ९४ ॥

चतुर्थ्यां सामभक्तौ स्याड्डमरे चाप्युपद्रुतौ ।
प्रधानरोगानुचरे रोगभेदे त्रिषु त्वयम् ॥ ९५ ॥

उपयाते द्रवं क्ली तु द्रवस्य स्यात् समीपके ।
**उपलिङ्गं** तु डमरे क्ली लिङ्गोपगतादिषु ॥ ९६ ॥

लिङ्गार्थौ पूर्ववज्ज्ञेयावुपसर्गस्तु ना बुधैः ।
डमरेऽपि क्रियायुक्तप्रादिप्रभृतिषु स्मृतः ॥ ९७ ॥

संसर्गे च समासार्थलिङ्गाद्यस्यापि पूर्ववत् ।
**उपप्लव**स्तु डमरे राहौ चान्यत् तु पूर्ववत् ॥ ९८ ॥

**उपरक्तौ** तु पुंसि स्तो राहुग्रस्तेन्दुसूर्ययोः ।
उपरक्तं पुनस्त्रि स्याज्जपापुष्पादिवस्तुनः ॥ ९९ ॥

प्रभोपरञ्जिते द्रव्ये स्फटिकादावथ स्त्रियाम् ।
न्यग्रोधीसंज्ञगुल्मे स्यादु**पचित्रा**त्र कश्चन ॥ १०० ॥

नागदन्तीपृश्निपर्ण्योरोषध्योरिति पूर्ववत् ।
समासाद्यु**पकण्ठं** तु सामीप्याख्यगुणे नपि ॥ १०१ ॥

अश्वस्यास्कन्दिताभिख्यगतौ च त्रि तु तद्वति ।
समीपगुणयुक्ते च स्या**दुपाध्याय**वाक् पुनः ॥ १०२ ॥

अध्यापके पुमांस्तस्य पत्न्यां रूपद्वयं भवेत् ।
उपाध्यायान्युपाध्यायीत्यथ स्यात् स्वयमेव या ॥ १०३ ॥

अध्यापयित्री तस्यां स्यादेवं रूपद्वयं तथा ।
उपाध्यायाप्युपाध्यायीत्यु**पाहित**पदं तु ना ॥ १०४ ॥

अग्न्युत्पाते त्रिषु त्वेतत् स्यादारोपितवस्तुनि ।
**उरुक्रम**स्तु ना विष्णौ विक्रमत्रयशालिनि ॥ १०५ ॥

अर्थलिङ्गसमासादि पूर्वत्रेवात्र तर्कयेत् ।
स्या**दुद्धननं**मुत्खातौ क्लीबं स्त्रीशण्डयोः पुनः ॥ १०६ ॥

**स्फ्य**संज्ञकाष्ठकुद्दाले भवेदुद्धननीत्यथ ।
**उदास्थित**स्तु भिक्षाकवेषधारस्पशे पुमान् ॥ १०७ ॥
अजयः शूरभेदेऽमुं प्राह द्वाःस्थे पुनस्त्रिषु ।
**उत्साहना** (न) नाङ्कार्थवाद्यघोषे तथैव च ॥ १०८ ॥
उत्साहहेतुव्यापारेऽप्यथो **उत्सादना** न ना ।
उद्वर्तने मलस्य स्यादुन्नत्युच्छेदयोरपि ॥ १०९ ॥
**उद्वर्तना** न नाङ्गस्य मलोन्मर्दनकर्मणि ।
उद्वृत्तहेतुव्यापारे क्ली तूद्वृत्तावथो न ना ॥ ११० ॥
**उद्वासना** वधेऽन्यत्र न्यासेऽन्यत्र स्थितस्य च ।
आवाहितस्य देवादेरुत्सर्जनविधावपि ॥ १११ ॥
**उदञ्चनं** क्ली स्थाल्यादिपिधाने स्यात् तथोद्गमे ।
स्त्रीनपुंसकयोस्तूर्ध्वं गमनायामुदञ्चना ॥ ११२ ॥
**उन्मीलितं** त्रि स्यात् फुल्ले सोन्मेषे चापि नप् पुनः ।
उन्मीलनेऽथो**न्मिषितं** त्रिः सोन्मेषे च फुल्लिते ॥ ११३
क्लीबं तून्मेषणे क्ली तु चित्त **उत्कलितं**[1] त्रिषु ।
उत्कम्पितेऽथो**त्तराङ्गं** द्वारस्योपरिदारुणि ॥ ११४ ॥
तिर्यङ्न्यस्ते समासादि पूर्वेष्विव समुन्नयेत् ।
**उष्णवीर्यो** जलकपौ द्वे समासादि पूर्ववत् ॥ ११५ ॥
**उलूखलं** तु सन्धौ क्ली कक्षाया वङ्क्षणस्य च ।
उलूखलो स्त्री त्वश्वस्य दन्तच्छिद्र उलूखली[3] ॥ ११६ ॥
पुमांस्तु व्रतिनो दण्ड उदुम्बरतरूद्भवे ।
पुमांस्तू**पनिधि**र्न्यासे धनस्यार्थादि पूर्ववत् ॥ ११७ ॥
**उच्चैःश्रवा**स्तु नेन्द्राश्वे घोटमात्रे न स द्वयोः ।
इहापि पूर्ववज्ज्ञेयमर्थलिङ्गादि पुंसि तु ॥ ११८ ॥

१. 'कं' ग. पाठः. २. 'ल' क. च. पाठः. ३. 'लिः' ङ. पाठः.

**ऊर्ध्वमूलः** स्तम्बभेद ‡उलूकाख्येऽत्र पूर्ववत् ।
समासाद्यू**र्ध्वधन्वा** तु नेन्द्रे लिङ्गादि पूर्ववत् ॥ ११९ ॥
**ऋषिमृष्टा** त्वृद्धिसंज्ञभेषजे स्त्री तथात्र च ।
लिङ्गाद्य**मृश्यजिह्वं** तु कुष्ठव्याध्यन्तरेऽपि च ॥ १२० ॥
स्त्रियां त्वृश्यस्य जिह्वायां स्त्रियां §**त्वेकपदे**ऽपठीत् (?) ।
इहापि पूर्ववज्ज्ञेयं समासाद्यव्ययं पुनः ॥ १२१ ॥
विद्यादेकपदेशब्दमेकारान्तममुष्य च ।
तत्क्षणे इत्यसावर्थे ***एकाक्षीला** पुनः स्त्रियाम् ॥ १२२ ॥
पाठायां ना तु विख्याते शिवमल्लीति पादपे ।
**एकादश**स्तु त्रिष्वेकादशानां पूरणे भवेत् ॥ १२३ ॥
एकादशी तु स्त्रीन्द्रस्य तिथौ वीणान्तरे तथा ।
स्यादेकादशतन्त्रीक **एकदेशः** पुनः पुमान् ॥ १२४ ॥
विज्ञेयोऽवयवेऽत्रापि स्युरर्थादीनि पूर्ववत् ।
अथो **एकायनं** त्रि स्यादेकाग्रे स पुनर्नपि ॥ १२५ ॥
शास्त्रे भागवतानां तत् [3]कैश्मीरेष्वेर्वे विश्रुतम् ।
अथो **एणीकृतः** पुंसि वर्णदोषे त्रि तद्वति ॥ १२६ ॥
आपादितैणभावे च क्ली त्वेणीकरणेऽथ ना ।
**ऐरावतो** महेन्द्रस्य कुञ्जरे पादपान्तरे ॥ १२७ ॥
नागरङ्गाह्वये क्ली तु तत्फलेऽपि शचीपतेः ।
ऋजुदीर्घे व्योमचापे स्थाने च व्योमगोचरे ॥ १२८ ॥

---

१. 'चारेयां' ग. ङ. च. पाठः. २. 'च क' ग. पाठः. ३. 'का' क. ङ. च. पाठः. 'क' क. ङ. च. पाठः.

‡ 'उलूकस्तूलगो दर्भ ऊर्ध्वमूलः' (पु. ६४. श्लो. २२९) इति तु वैजयन्ती । § 'त्वेक पदी पथि' इति स्यात् । * 'एकाष्ठीला पापचेली स्थापनी वनतिक्तिका । पाठाम्बष्ठा' (पृ. ५५. श्लो. १३०, १३१) इति, 'शिवमल्लिका........एकाष्ठीलोऽम्बुको वसुः' (पृ. ६१. श्लो. १९३. १९४) इति च वैजयन्ती ।

अश्विन्याद्यृक्षनवककलसवीथीत्रयात्मनः ।
दे(वया)नाख्यमार्गस्य स्त्रियां त्वैरावती भवेत् ॥ १२९ ॥

वीथ्यां पुनर्वस्वाद्यैश्च कलसायामुडुभिस्त्रिभिः ।
आचक्षते च तामेनां विद्युद्विद्युद्विशेषयोः ॥ १३० ॥

सम्बन्धिनि त्विरावत्यास्त्रिष्वथौदुम्बरं नपि ।
कुष्ठरोगान्तरे केचित् पुनस्ताम्रेऽप्यधीयते ॥ १३१ ॥

वानप्रस्थविशेषे तु पुमानस्याह लक्षणम् ।
औदुम्बरस्तु षण्माससङ्ग्रही तुर्यकालभुक् ॥ १३२ ॥

उदुम्बरस्य सम्बन्धिन्येतत् स्याद् मेद्यलिङ्गकम् ।
और्वशेयस्त्वगस्त्यर्षौ ना द्वयोस्तूर्वशीसुते ॥ १३३ ॥

**कलधौतं** रूप्यहेम्नोः क्ली त्रि तु स्यात् कलध्वनौ ।
**कलकण्ठः** कोकिले द्वे समासार्थादि पूर्ववत् ॥ १३४ ॥

**कलक्वाणस्तु** दात्यूहे भ्रमरे च द्वयोः स्मृतः ।
तत्राप्यर्थसमासादि पूर्ववत् तर्कयेदथ ॥ १३५ ॥

पारावते **कलरवो** द्वे समासादि पूर्ववत् ।
**कलहंसस्तु** कादम्बसंज्ञके विहगे द्वयोः ॥ १३६ ॥

राजहंसेऽप्यथो पुंसि विज्ञेयः श्रेष्ठभूभुजि ।
**कलेबरं** तु क्ली काये शवे त्वन्ये स्त्रियां पुनः ॥ १३७ ॥

नवानां शम्भुशक्तीनामेकस्यां स्यात कलेबरा ।
**कर्णपूरस्तु** पुष्पाद्यैः कृतकर्णविभूषणे ॥ १३८

अशोकवृक्षे च तथा तिलकाख्यतरौ च ना ।
कर्णपूरा तु कर्णस्य पूर्तौ स्त्रीपुंसयोर्भवेत् ॥ १३९ ॥

नपुंसकं तु विज्ञेयं स्यात् सौगन्धिक उत्पले ।
ना तु **कङ्कमुखो** ज्ञेयः सन्दंशे लोहकारिणाम् ॥ १४० ॥

अत्रापि पूर्ववद् विद्यात् समासार्थादि पण्डितः ।
**कङ्कपत्रस्तु** ना बाणभेदेऽत्रार्थादि पूर्ववत् ॥ १४१ ॥

**कङ्कणीकस्तु** ना घण्टाजाले प्रतिसरे पुनः ।
कङ्कणीका स्त्रियामेतदौणादिकनिरूपितम् ॥ १४२ ॥

**कलविङ्कस्तु** चटके तद्भेदे पीतमुण्डके ।
द्वयोः स्यात् **कमनीयस्तु** चम्पकाख्यमहीरुहे ॥ १४३ ॥

नाथ कामयितव्ये त्रिः स्त्रियां तु स्यात् **कपिप्रिया** ।
तिन्त्रिणीकाख्यवृक्षे स्यात् प्रियायां च कपेस्तथा ॥ १४४ ॥

अर्थलिङ्गसमासांस्तु विद्यादत्रापि पूर्ववत् ।
**कपीतनस्तु** ना ज्ञेयस्त्रिषु वृक्षेषु सूरिभिः ॥ १४५ ॥

गर्दभाण्डाह्वयप्लक्षेऽप्याम्रातकशिरीषयोः ।
फलप्रसूनयोस्तेषां विद्यादेतन्नपुंसकम् ॥ १४६ ॥

**करमर्दस्तु** ना ज्ञेयो मर्दने करवस्तुनः ।
कृष्णपाकाख्यवृक्षे च करमर्दी तु सा स्त्रियाम् ॥ १४७ ॥

तस्य जात्यन्तरे स्वल्पे ***कलहाटः** पुनर्नरि ।
मदनाख्यद्रुमे पद्मकन्देऽप्याह तु शाश्वतः ॥ १४८ ॥

पुष्पजातौ च लिङ्गं तु तत्र क्ली मदनस्य च ।
प्रसूनफलयोः पुंसि **करवीरो** महीरुहे ॥ १४९ ॥

अश्वमारकसंज्ञेऽस्य पुनः पुष्पे नपुंसकम् ।
मनःशिलायां तु भवेत् करवीरा स्त्रियामियम् ॥ १५० ॥

१. 'ङ्क' ग. पाठः. २. 'लः' ग. पाठः ३ 'त' क. च. पाठः.

* 'करहाटः' इति स्यात् । 'करहाटः शिफाकन्दे पद्मस्य मदनद्रुमे' इति मेदिनी ।

†[आढकीसंज्ञधान्ये चाप्यथो ना करपल्लवः।
बाहौ किसलयप्रख्यकरे[1] त्वेष[2] नृशण्डयोः॥]

**करपाली** स्त्रियामीलीसंज्ञे शस्त्रे[3] पुमान् पुनः।
करपालो भवेत् खड्गे पालके तु करस्य सः॥ १९१ ॥

त्रि स्यात् पुनर्नवायां तु रक्तायां स्याद् **कठिल्लकः**।
कारवेल्ले च (टस्तु? नप् तु) स्यात् फलेऽस्याथो नपुंसकम्॥ १९२ ॥

**कश्मीरजं** कुङ्कुमे स्यात् त्रि तु कश्मीरसम्भवे।
**क्रमेलको** द्वे स्यादुष्ट्रे मर्त्यजात्यन्तरे तथा॥ १९३ ॥

उग्र्यां निष्टयात् समुद्भूते स्यात् तु **कर्षफला** स्त्रियाम्।
आमलक्यां *पुनस्त्वेष विभीतकमहीरुहे॥ १९४ ॥

कुलत्थे स्त्री **कफहरिः** श्लेष्मघ्ने तु त्रिषु स्मृता।
**कदम्बकं** समूहे क्ली सर्षपे तु पुमानयम्॥ १९५ ॥

**कटूत्कटं** तु क्ली व्योषेऽप्यार्द्रकेऽपि त्रिषु त्वदः।
उत्कटे कटुनाऽथो ना शालिभेदे **कलापकः**॥ १९६ ॥

कलमाख्ये नपि त्वेतज्जानीयाद् विश्वभेषजे।
स्याद् विद्रुमलतायां तु **कपोताङ्घ्रिः** स्त्रियामियम्॥ १९७ ॥

कपोतस्य तु पादे ना द्वयोस्तु स्यात् **कमण्डलुः**।
चतुष्पाज्जातिभेदे क्लीपुंसोः कुण्ड्यां द्वयोः पुनः॥ १९८ ॥

स्यात् **कालकण्ठो** दात्यूहे समासार्थादि पूर्ववत्।
**कालकुण्डस्तु** ना विष्णौ यमे चापि द्वयोः पुनः॥ १५९ ॥

मनुष्यजातिभेदे स्यात् क्षत्रियायां निषादजे।
**कालस्कन्धस्त**माले ना तिन्दुके चाथ कश्चन॥ [illegible] ॥

1. 'तरौ त्वे' ग. पाठः. 2. 'त्रे' [illegible] [illegible]. ...त्रेऽस्त्रियां पुनः' ङ. पाठः.

† इहास्य श्लोकस्य पाठो लेखकप्रमादायात इति भाति। पञ्चाक्षरस्य करपल्लवपदस्य चतुरक्षरकाण्डपाठासङ्गतेः। * 'पुमांस्त्वेषः' इति पाठः स्यात्।

आह च श्यामखदिरे क्लीबं त्वेषां फले भवेत् ।
अत्रापि लिङ्गमर्थश्च समासश्चापि पूर्ववत् ॥ १६१ ॥
स्त्रियां तु **कालमेषी** स्यान्मसूरविदलाह्वये ।
लताजात्यन्तरे सोमराजिमञ्जिष्ठयोरपि ॥ १६२ ॥
द्राक्षायां च द्वयोस्तु स्यात् काले मेषे द्वयोः पुनः ।
**कालपुच्छो** हि चमरमृगे स्यात् कृष्णवालधौ ॥ १६३ ॥
पूर्वत्रेवात्र लिङ्गादि **कालशेयं** तु गोरसे ।
क्ली भेद्यवत् तु कलशिर्भवेऽथो **काकतुण्ड्यसौ** ॥ १६४ ॥
तापिञ्छे स्त्री पुमांस्त्वेषोऽगुर्वाख्ये गन्धवस्तुनि ।
**काकशीर्ष**स्तु ना पुष्पस्तम्बभेदे शिवप्रिये ॥ १६५ ॥
वसुभट्ट इति ख्याते क्ली तु काकस्य मूर्धनि ।
**काकोदर**स्तु द्वे सर्पमात्रे सर्पान्तरे तथा ॥ १६६ ॥
षड्विंशतेरन्यतमे दर्वीकरफणाभृताम् ।
ना तु **कापटिक**श्छात्रवेषधारि स्पशान्तरे ॥ १६७ ॥
संस्थाचराणां पञ्चानामेकर्स्मिस्त्रि तु दाम्भिके ।
**कामिकान्तं** तु माध्वीकसंज्ञे मद्यान्तरे नपि ॥ १६८ ॥
पूर्ववच्चात्र लिङ्गादि तर्क्यं **कामध्वज**स्तु ना ।
ज्ञेयो वादित्रनिर्घोषे तथा कामोत्सवेऽप्यथ ॥ १६९ ॥
ध्वजे कामस्य नृनपोः **कामरूपा**स्तु नीवृति ।
प्राग्ज्योतिषाख्ये पुम्भूम्नि लिङ्गाद्यत्रापि पूर्ववत् ॥ १७० ॥
**कारस्करो** ना स्त्रीत्येके वृक्षभेदे परे पुनः ।
क्ली नगर्यन्तरे प्राहुः **काकपीलु**स्त्वसौ स्त्रियाम् ॥ १७१ ॥
गुञ्जायां ना तु †काकेजुसंज्ञे स्यात् त्रि खुरान्तरे ।
**कामरूपी** द्वयोर्नानावर्णे च कृकलासके ॥ १७२ ॥

१. 'जी' क. ग. च. पाठः. २. 'ल' क. च. पाठः.

† 'काकेन्दुसंज्ञे' इति स्यात्। 'काकेन्दौ काकपीलुः स्यात्' (पृ. ४९. श्लो. ५१) इति वैजयन्ती।

बिम्बाख्ये पूर्ववद् विद्यादत्राप्यर्थादिकं बुधः ।
अथ **किम्पुरुषो** द्वे स्यात् किन्नरे क्ली तु भारतात् ॥ १७३ ॥
उत्तरेऽनन्तरे वर्षे हेमकूटापराह्वये ।
**किंकिदीविस्तु** ना वर्णे द्वे तु चाषाह्वये खगे ॥ १७४ ॥
**क्षीरशुक्ला** विदार्यां स्त्री ना तु शृङ्गाटकाह्वये ।
कन्दार्थजलजस्तम्बे लिङ्गाद्यत्रापि पूर्ववत् ॥ १७५ ॥
**कुटन्नटस्तु** ना गुण्डसंज्ञवृक्षे नपि त्वदः ।
गोनर्दसंज्ञके मुस्ताभेदे **कुरवकः** पुनः ॥ १७६ ॥
पुमानरुणाझिण्ट्यां स्यात् पीतझिण्ट्यां तथैव च ।
शोणाम्लाने च केचित् तु प्राहुः कुरवकेऽपि तम् ॥ १७७ ॥
क्लीबं त्वेषां भवेत् पुष्पे स्त्रियां तु स्यात् **कुलत्थिका** ।
कुलाल्यादिपदैः ख्याते भेषजे नृस्त्रियोः पुनः ॥ १७८ ॥
कुलत्थधान्ये द्वे तु स्याद् दर्वीकरफणाभृताम् ।
एकत्र भेदेऽथ स्त्री स्यात् **कुम्भका(रस्त्वरीत्य)**यं ध्वनिः ॥ १७९ ॥
कुलत्थिकाख्यभैषज्ये कुलाले तु द्वयोरथ ।
**कुम्भीनसः** सर्पमात्रे द्वयोर्दर्वीकरान्तरे ॥ १८० ॥
**कुशीलवस्तु** द्वे मर्त्यजातिभेदे यथावदत् ।
वैदेहाज्जनितेऽम्बष्ठ्यां लङ्घनप्लवनादिना ॥ १८१ ॥
वर्तमाने नटानां च प्रसिद्धे चारणे तथा ।
कुशीसंज्ञायोविकारलवे तु स्यात् पुमानयम् ॥ १८२ ॥
अथोत्पले **कुवलयं** क्ली समासादि पूर्ववत् ।
**कुशेशयं** तु पद्मे क्ली वासुदेवे तु पुंस्ययम् ॥ [illegible] ॥
**कुचन्दनोऽस्त्रियां** पीतचन्दने रक्तचन्दने
**कुक्कुटाक्षः** पुमानल्पतुम्ब्यामन्यादि पूर्ववत् ॥ १८४ ॥

१. 'ग' च. पाठः. २. 'स्थि' ग. पाठः. ३. 'स्थि' ग. पाठः. ४. 'ह्ये' क. पाठः.

**कूलङ्कषा** स्त्रियां नद्यां त्रि तु कूलस्य काषके ।
**कृतमालस्**तु ना गन्धद्रव्ये तक्कोलसंज्ञके ॥ १८५ ॥
आरग्वधे च द्वे तु स्यादुलूकाह्वयपक्षिणः ।
विशेषे कृष्णवर्णे च मृगभेदे च पूर्ववत् ॥ १८६ ॥
अर्थाद्यथो **कृष्णफला** सोमराज्याह्वयौषधौ ।
स्त्री ना तु करमर्दाख्यतरावर्थादि पूर्ववत् ॥ १८७ ॥
**कृष्णवर्णस्**तु ना धान्ये *चराख्येऽर्थादि पूर्ववत् ।
**कृष्णवृन्ता** तु पाटल्यां माषपर्ण्याह्वयौषधौ ॥ १८८ ॥
कार्ष्मर्ये च स्त्रियां ना तु कुलत्थेऽर्थादि पूर्ववत् ।
**कृष्णसर्पस्**तु कृष्णेऽहौ द्वयोर्दर्वीकरान्तरे ॥ १८९ ॥
**कृकवाकुः** कुक्कुटे द्वे कृकलासे च केचन ।
खञ्जरीटे **क्षेपणीयः** पुनर्ना भिण्डिपालके ॥ १९० ॥
क्षेप्तव्ये त्रिः **केशपाशी** पुनश्चूडार्थके स्त्रियाम् ।
ना तु केशकलापेऽथ पुमान् **केलिकिलः** स्मृतः ॥ १९१ ॥
कूश्माण्डाख्ये भृत्यगणे हेरम्बस्य प्रियङ्करे ।
स स्यात् केलिसहाये च क्रीडाशीले तु स त्रिषु ॥ १९२ ॥
स्त्री तु **कोशफला** राजकोशातक्याह्वये भवेत् ।
कोशातकीविशेषे सा तिक्तकोशातकीति च ॥ १९३ ॥
प्रसिद्धे ना तु सामान्ये कोशातक्या नपि त्वदः ।
तक्कोले स्याज्जातिफलेऽप्यथ स्यात् **कोटिवर्षवाक्** ॥ १९४ ॥
देविकोट इति ख्याते पुरभेदे नपुंसकम् ।
स्त्री कोटिवर्षा स्पृक्कायामत्राप्यर्थादि पूर्ववत् ॥ १९५ ॥

१. 'र्ष्मे' क. ख. च. पाठः. २. 'पु' क. ख. च. पाठः.

* 'चणाख्ये' इति स्यात् । 'कृष्णवर्णः संवर्तो वातुलश्चणः' (पृ. १२६. श्लो. ४३) इति वैजयन्ती ।

**कौलेयकः** शुनि द्वे स्यात् कुलीने त्रिर्द्वयोः पुनः ।
**कौलटेयः कौलटेरः** पर्या(येऽयौ) बन्धकीसुते ॥ १९६ ॥

कुलान्यटन्त्या भिक्षुक्याः सत्या एव च यः सुतः ।
तस्मिन् कौलटिनेयाख्ये कुलटायाः सुतेऽप्यथ ॥ १९७ ॥

कुलत्थे ना **खलकुलः** खलस्य तु कुले नपि ।
**खरच्छदः** पुमानूर्ध्वमूलसंज्ञे तृणान्तरे ॥ १९८ ॥

अत्रापि पूर्ववज्ज्ञेयमर्थलिङ्गाद्यथो नपि ।
शृङ्गवाद्ये **खरमुखं** लिङ्गाद्यत्रापि पूर्ववत् ॥ १९९ ॥

स्त्रियां तु स्यात् **खरकुटी** शालायां वपनस्य हि ।
अत्रापि पूर्ववज्ज्ञेयमर्थलिङ्गादि सूरिभिः ॥ २०० ॥

स्त्री तु **गन्धवहा** घ्राणे ना तु वायौ मृगे द्वयोः ।
**गन्धवाह**स्तु ना वायावत्राप्यर्थादि पूर्ववत् ॥ २०१ ॥

**गवीधुका** तु स्त्री क्षुद्रधान्यभेदे पुरे तु नप् ।
**गवादिनी**[1] स्त्री गिरिकर्ण्यभिधानलतान्तरे ॥ २०२ ॥

अर्थादि पूर्ववत् स्त्री तु सल्लक्यां स्याद् **गजप्रिया** ।
श्यामाके तु पुमानत्राप्यर्थलिङ्गादि पूर्ववत् ॥ २०३ ॥

**गजच्छाया** स्त्रियां सूर्यग्रहणे कैश्चिदीरिता ।
सांवत्सरास्तु ब्रुवते गजच्छायां सलक्षणाम् ॥ २०४ ॥

हस्तनक्षत्रगे सूर्ये कृष्णपक्षे त्रयोदशी ।
मखाभिश्च समायुक्तेत्यपुमांस्तु गजस्य सा ॥ २०५ ॥

छायायामत्र पूर्वत्रेवार्थाद्यथ **गलस्तनी** ।
अजायामर्थलिङ्गादि पूर्वत्रेवात्र बुध्यताम् ॥ २[illegible] ॥

**गदयित्नु**स्तु पर्जन्ये पुमांस्त्रिर्वा[illegible]
**गार्हपत्यः** पश्चिमाग्नौ पुमान् [illegible]पतेः पुनः ॥ २०७ ॥

1. 'द्' क. ङ. च. पाठः.

**भावे** कर्मणि च क्लीबमथ स्त्री स्याद् **गिरिप्रिया** ।
सन्धानीसंज्ञके क्षुद्रफलवातिङ्गनान्तरे ॥ २०८ ॥
पूर्ववच्चात्र लिङ्गादि द्वयोस्तु स्याद् **गुहाशयः** ।
ऋक्षाखुसिंहकूर्मेषु समासाद्यत्र पूर्ववत् ॥ २०९ ॥
दीपे **गृहमणिः** पुंसि स्त्री गृहस्य मणावसौ ।
पुमान् **गृहपतिर्वह्नौ** गार्हपत्याह्वये तथा ॥ २१० ॥
कृषीवले छद्मवेषस्पशे स्यात् सत्रयाजिनाम् ।
प्रधाने यजमाने च गृहस्य त्वधिपे त्रिषु ॥ २११ ॥
**गोवन्दनी** फलिन्यां स्त्री गोस्तु गोवन्दना न ना ।
वन्दनेऽथ द्वयो**र्गोलाङ्गूलः**[1] कृष्णमुखे कपौ ॥ २१२ ॥
नपुंसकस्तु[2] पुच्छे गोरथो **घनरसो** नृनप् ।
जले पूर्ववदत्रापि समासादि स्त्रियां पुनः ॥ २१३ ॥
**घण्टारवा** प्रसिद्धायां *चणपुष्पीति चौषधौ ।
पूर्ववत् स्यात् समासाद्यमथ क्ली घोषसंज्ञके ॥ २१४ ॥
लोहे **घण्टास्वनं** लिङ्गसमासाद्यत्र पूर्ववत् ।
**चराचरं** क्ली भुवने जङ्गमे तु त्रिषु स्मृतम् ॥ २१५ ॥
चरस्याप्यचरस्यापि समासाद्यत्र तर्क्यताम् ।
**चतुरन्ता** स्त्रियां भूमौ समासादिकमूह्यताम् ॥ २१६ ॥
अथो चतुर्दशानां त्रिः पूरणे स्या**च्चतुर्दशः** ।
स्त्रियां तु वीणाभेदे स्याद् यस्य तन्त्र्यश्चतुर्दश ॥ २१७ ॥
चतुर्दशी सा तत्रासौ महेशस्य तिथावपि ।
**चतुष्पथं** क्ली शृङ्गाटे ब्राह्मणे तु पुमानयम् ॥ २१८ ॥

१. 'ला' ग. पाठः. २. 'कं तु पु' ग. पाठः.

* 'अथो घण्टारवायां शणपुष्पिका' (पृ. ५३. श्लो. ९८) इति तु वैजयन्ती ।

**चतुर्वर्गः** पुमान् धर्मकामार्थादिचतुष्टये ।
समासादिकमुन्नेयं **चक्रपाद**स्तु ना रथे ॥ २१९ ॥
गजे द्वे **चक्रवाल**स्तु लोकालोकगिरौ पुमान् ।
क्ली तु दिङ्मण्डलेऽथ क्ली **चतुःसम**मिति ध्वनिः ॥ २२० ॥
चन्दनागरुकर्पूरकुङ्कुमैः कृतकर्दमे ।
अर्थलिङ्गसमासाद्य कल्प्यन्तामत्र पूर्ववत् ॥ २२१ ॥
**चतुर्गति**र्द्वयोः कूर्मे समासाद्यत्र पूर्ववत् ।
**चक्रवर्ती** तु ना सार्वभौमे स्त्री चक्रवर्तिनी ॥ २२२ ॥
स्थावरे ‡जन्तुकृत्संज्ञे समासाद्यत्र पूर्ववत् ।
**चन्द्रभाग**स्तु ना शैलविशेषेंऽशे च शीतगोः ॥ २२३ ॥
स्त्रियां तु देवताभेदे चन्द्रभागाथ केचन ।
चन्द्रभागा चन्द्रभागीत्येवं द्विरूप्यमभ्यधुः ॥ २२४ ॥
अवृद्धप्रातिपदिकान्नदीभेदे च केचन ।
चान्द्रभागा चान्द्रभागीत्येवं वृद्धाद् द्विरूपताम् ॥ २२५ ॥
नदीभेदे विदुश्चान्द्रभागं तु त्रिषु भूभृतः ।
चन्द्रभागस्य सम्बन्धिन्यत्राप्यर्थादि पूर्ववत् ॥ २२६ ॥
**चाटुकार**स्तु ना हारभेदे हेमगुडैः कृते ।
यष्टिमात्रे त्रिषु त्वेष विज्ञेयः स्यात् प्रियंवदे ॥ २२७ ॥
**चारुनालं** रक्तपद्मे क्ली समासादि पूर्ववत् ।
मत्स्यभेदे **चिलिचिमो** द्वयोर्हैमवते तु ना ॥ २२८ ॥
वृक्षभेदे तस्य पुष्पफलयोः स्यान्नपुंसकम् ।
*चन्द्रे **चित्ररथः** पुंसि राजभेदे चिरन्तने ॥ २२९ ॥

१. 'विद्याद्' क. ग. च. पाठः. २. 'कल्प्य' क. ग. च. पाठः.

‡ 'जतुकृत्संज्ञे' इति स्यात् । 'जन्या जतुका रजनी जतुकृच्चक्रवर्तिनी' इत्यमरः, 'जन्या.........जतुकृच्चक्रवर्तिनी' (पृ. १३०. श्लो. ८९) इति वैजयन्ती च । * 'अथ चित्ररथः सूर्यगन्धर्वान्तरयोः पुमान्' इति तु मेदिनी ।

पूर्ववत् स्यात् समासादि **चित्रपर्णी** पुनः स्त्रियाम् ।
लताजात्यन्तरे पृश्निपर्ण्याख्येऽर्थादि पूर्ववत् ॥ २३० ॥
**चित्रपक्षः** पक्षिभेदे द्वे कपिञ्जलसंज्ञके ।
पूर्ववत् स्यात् समासादि **चिरजीवी** विरिञ्चने ॥ २३१ ॥
पुंसि द्वयोस्तु काके स्यात् समासाद्यत्र पूर्ववत् ।
**चिरमेही** गर्दभे द्वे समासाद्यत्र पूर्ववत् ॥ २३२ ॥
**चूडामणिः** स्त्री गुञ्जायां पुंस्त्रियोस्तु शिरोमणौ ।
उद्याने राजराजस्य क्लीबं **चैत्ररथं** विदुः ॥ २३३ ॥
अहीनक्रतुभेदे तु द्विरात्रे मन्मथे च ना ।
त्रि तु चित्ररथस्य स्यात् सम्बन्धिन्यथ ना भवेत् ॥ २३४
**छायाकर**श्छत्रधारे समासाद्यत्र पूर्ववत् ।
**जलाशय**मुशीरे क्ली जलाधारे तु पुंस्ययम् ॥ २३५ ॥
जडाभिप्रायके तु त्रिरथ द्वे स्याज्ज**लप्रियः** ।
वराहेऽत्र समासादि पूर्ववत् स्यादथ स्त्रियाम् ॥ २३६ ॥
गवेधौ स्याज्ज**तुफला** पुंसि तुदुम्बरद्रुमे ।
अथ †**जन्तुरथः** क्षुद्रमृगभेदे द्वयोरपि ॥ २३७ ॥
कोद्रङ्ग इति विख्याते समासादीह पूर्ववत् ।
**जघन्यज**स्तु द्वे शूद्रे त्रि तु स्यादनुजे तथा ॥ २३८ ॥
जाते जघन्यादथ ना ताते **जनयिता** तथा ।
जनयित्री मातरि स्त्री त्रि तूत्पादकमात्रके ॥ २३९ ॥
**जातरूपं** सुवर्णे क्ली रूप्ये चार्थादि पूर्ववत् ।
**जालपादो** द्वयोर्हंसे राजहंसे तु दत्तकः ॥ २४० ॥

१. 'ला' क. ङ. पाठः.

† 'कोद्रङ्गः स्याज्जन्तुधरो मार्जारी चमराकृतिः' (पृ. ६७. श्लो. ३४) इति तु वैजयन्ती

कुक्कुटे वैजयन्त्यां तु तं पठत्यम्बुकुक्कुटे ।
जालाकारस्तु पादोऽस्ति येषां त्रिस्तेषु पक्षिषु ॥ २४१ ॥

**जारद्रवी** तु स्त्री योगियानमार्गस्य दक्षिणा ।
या वीथिस्तत्र मार्गस्य पुनस्तस्यान्तरिक्षगे ॥ २४२ ॥

स्थाने जरद्रवं क्लीबं त्रिर्जरद्रवयोगिनि ।
**जीवनीया** तु जीवन्तीसंज्ञशाकलतान्तरे ॥ २४३ ॥

काकाङ्गीसंज्ञके च स्त्री जीवितव्ये जले च नप् ।
**जीवितेशः** प्रेतनाथे दयिते द्रविणागमे ॥ २४४ ॥

पुंलिङ्गोऽत्राप्यर्थलिङ्गसमासाः पूर्ववत् स्मृताः ।
**जुहुराणस्तु** ना वह्नावध्वर्यावनडुह्यपि ॥ २४५ ॥

अश्वे द्वे कुटिले तु त्रिरथ **जैवातृकः** पुमान् ।
चन्द्रे च परिखायां च परिघेऽथ द्वयोः शुके ॥ २४६ ॥

धने तु क्ली त्रिरायुष्मत्कृषीवलभिषक्षु सः ।
**तपनीयं** सुवर्णे क्ली शालिभेदे तु पुंस्ययम् ॥ २४७ ॥

तसव्ये त्रिरथो **तन्तुवायो** लूताक्रिमी द्वयोः ।
कुविन्देऽप्यथ कामस्य तिथौ स्त्री स्यात् **त्रयोदशी** ॥ २४८ ॥

स्यात् त्रयोदशतन्त्रीके वीणाभेदेऽप्यथ त्रिषु ।
त्रयोदशानां वस्तूनां पूरणेऽथाह यादवः ॥ २४९ ॥

**तरवारिः** स्त्रियां यष्टिनामधेयायुधान्तरे ।
पुमांसं सायके प्राह शैषिकोऽथोष्णदीधितौ ॥ [illegible] ॥

**त्रसरेणुः** प्रभाख्यायां (पत्न्यां, स्त्री रजसि त्वयम् ।
जालसूर्यमरीचिस्थे त्रिरथो नाल्पपण्ययमौ ॥ २५१ ॥

स्त्री मुरासंज्ञभैषज्ये समासाद्यत्र पूर्ववत् ।
**तालपत्री** स्त्रियां वाद्यविशेषे तालसंज्ञके ॥ २५२ ॥

कर्णाभरणसंज्ञे तु नप्स्त्रियोः सादि पूर्ववत् ।
स्थावरे **त्रायमाणा** स्त्री त्रायन्तीसंज्ञके त्रिषु ॥ २९३ ॥

रक्षके **ताम्रचूड**स्तु द्वयोः कुक्कुटपक्षिणि ।
पूर्ववच्चात्र लिङ्गादि **ताम्रवृन्त**स्तु पुंस्ययम् ॥ २९४ ॥

कुलत्थेऽत्र समासादि पूर्ववच्चात्र(?)तर्कयेत् ।
†**तिन्दिडीका** स्त्रियां पुंसि चिञ्चासंज्ञकपादपे ॥ २९५ ॥

क्लीबे तु वैजयन्त्याह वृक्षे तस्मात् त्रिलिङ्गता ।
क्ली तु वृक्षाम्लसंज्ञेऽस्य फले स्याच्चाम्बुवेतसे ॥ २९६ ॥

**त्रिसुगन्धं** तु जानीयादेलात्वक्पत्रकत्रये ।
नपुंसकं समासाद्यलिङ्गान्यत्रापि पूर्ववत् ॥ २९७ ॥

**त्रिविक्रम**स्तु ना विष्णोरवतारान्तरेऽत्र च ।
पूर्ववत् स्यात् समासादि पुंल्लिङ्गस्तु **त्रिकण्टकः** ॥ २९८ ॥

शृङ्गाटक इति ख्याते जलजस्थावरान्तरे ।
गोक्षुरेऽपि स्त्रियां स्नुह्यामत्राप्यर्थादि पूर्ववत् ॥ २९९ ॥

**त्रिवलीकं** गुदे क्लीबमत्राप्यर्थादि पूर्ववत् ।
**तिर्यग्गामी** तु ना शुक्रग्रहेऽर्थाद्यत्र पूर्ववत् ॥ २६० ॥

**तीक्ष्णगन्ध**स्तु ना शिग्रौ तथा श्वेतकठिञ्जरे ।
अत्रापि पूर्ववत् सादि **तुलाकोटि**स्तु नूपुरे ॥ २६१ ॥

पुमानत्रापि लिङ्गादि पूर्ववत् स्यादथो पुमान् ।
वसुभट्ट इति ख्याते **तूलपुष्पो** द्रुमान्तरे ॥ २६२ ॥

अत्रापि पूर्ववत् सादि **तृणराज**स्तु पुंस्ययम् ।
हिन्ताले तालवृक्षे च समासाद्यत्र पूर्ववत् ॥ २६३ ॥

† तिन्तिडीका तिन्त्रिडीका इति च दृश्यते । * 'समासार्थे' इति स्यात् ।

**तृणशून्यं** मल्लिकायां क्ली समासादि पूर्ववत् ।
पुंसि त्वम्लगुणे **दन्तशठो** भव्यकपित्थयोः ॥ २६४ ॥
जम्बीरे च स्त्रियां तु स्याच्चाङ्गेरीतिन्तिडीकयोः ।
इयं ‡दन्तशरेऽमीषां वृक्षाणां स्यात् फले नपि ॥ २६५ ॥
त्रिषु त्वम्लगुणोपेतद्रव्ये **दधिमुखस्तु** ना ।
सुग्रीवानुचरे कापि कपिमात्रेऽपि स द्वयोः ॥ २६६ ॥
स्त्रियां तु स्याद् दधिमुखी कालरात्र्यामथो नपि ।
**दण्डाहतं** कालशेये दण्डेन त्वाहते त्रिषु ॥ २६७ ॥
**दक्षिणस्थः** सारथौ ना समासाद्यत्र पूर्ववत् ।
**दन्दशूको** द्वयोः सर्पे दंशके तु त्रिषु स्मृतः ॥ २६८ ॥
**दर्वीकरो** द्वयोः सर्पे सर्पजात्यन्तरेऽपि च ।
अत्रापि पूर्ववत् सादि **दाक्षायण**पदं पुनः ॥ २६९ ॥
दक्षापत्ये द्वयोः स्त्री तु पार्वत्यामवनौ स्त्रियाम् ।
दाक्षायणी स्यादश्विन्याद्युडौ च क्ली तु हाटके ॥ २७० ॥
**दाक्षिणात्यस्तु** ना नालिकेरसंज्ञमहीरुहे ।
दक्षिणापथजातादिष्वेर्षे त्रि स्यादथ स्त्रियाम् ॥ २७१ ॥
द्राक्षायां स्याद् **दारुफला** समासाद्यत्र पूर्ववत् ।
**दिवाचरस्तु** ना शुक्रे समासादि च पूर्ववत् ॥ २७२ ॥
**दिवाभीत** उलूके द्वे पुमांस्तु कुमुदाकरे ।
त्रिस्तु चोरे व्यवहितेऽप्यथ **दिव्येलको** द्वयोः ॥ २७३ ॥
त्रयोदशसु भेदेषु राजिलाख्यफणाभृतः ।
एकत्र भेदे सर्पस्य वैकरञ्जाह्वयस्य च ॥ २७४

१. 'तत् त्रि' ङ. पाठः. २. 'न्त' क. ङ. पाठः.

‡ 'दन्तशठा' इति स्यात् ।

एकत्र त्रिषु भेदेषु द्विजपोतः पुनर्द्वयोः ।
शूद्रे पक्षिशिशौ चात्र समासार्थादि पूर्ववत् ॥ २७५ ॥
चण्डाले नापिते चापि दिवाकीर्तिर्द्वयोर्मतः ।
अत्रापि पूर्ववत् सादि दीर्घवृन्तस्तु पुंस्ययम् ॥ २७६ ॥
टुण्डुसंज्ञद्रुमेऽत्रापि समासार्थादि पूर्ववत् ।
अथो पुनर्नवाजातिभेदेऽल्पे दीर्घपत्रयसौ ॥ २७७ ॥
कदल्यां च स्त्रियां ना तु दीर्घपत्रः पलण्डुके ।
दश त्वेकत्र लिङ्गार्थसमासाश्चात्र पूर्ववत् ॥ २७८ ॥
दीर्घनादो द्वयोः कङ्कसमाख्ये विहगान्तरे ।
अत्रापि पूर्ववत् सादि दीर्घनादो द्वयोः शुनि ॥ २७९ ॥
अत्रापि पूर्ववत् सादि दीर्घनिद्रा मृतौ स्त्रियाम् ।
अत्रापि पूर्ववत् सादि दीर्घरोमा पुनर्द्वयोः ॥ २८० ॥
ऋक्षाख्यश्वापदेऽत्रापि समासार्थादि पूर्ववत् ।
दुरोदरस्तु नृनपोः पणे द्यूते नपुंसकम् ॥ २८१ ॥
ना तु द्यूतकरेऽथाग्नौ पुल्लिङ्गः स्याद् दुरासदः ।
दुष्प्रापे त्रिरथो पुंसि शिशिरर्तौ द्रुमार्दनः ॥ २८२ ॥
अत्रापि पूर्ववत् सादि दूरदर्शी पुनर्द्वयोः ।
गृध्रसंज्ञखगे त्रिस्तु (दूर)दर्शमनीषिणोः ॥ २८३ ॥
स्त्रियां दृढदला तालीपादपे बल्वजेषु च ।
अत्रापि पूर्ववत् सादि देशरूपस्तु पुन्नपोः ॥ २८४ ॥
‡न्यासे पूर्ववदत्रापि देवभिन्नस्त्वयं द्वयोः ।
षड्विंशतौ स्याद् भेदेषु मण्डलाह्वयभोगिनः ॥ २८५ ॥
एकत्र भेदे विद्यात् तु समासाद्यत्र पूर्ववत् ।
देवदण्डस्तु नृनपोर्दण्डाकारायुधान्तरे ॥ २८६ ॥

‡ 'न्याये' इति स्यात्। 'न्यायो देशरूपं समञ्जसम्' (पृ. १०८, श्लो. ७८) इति वैजयन्ती।

अरत्निमात्रे लिङ्गादि पूर्ववत् स्यादिहापि च ।
ना तु देवमणिर्घोटगलदेशसमुद्भवे ॥ २८७ ॥
रोमावर्ते समासादि पूर्ववत् स्यादथ स्त्रियाम् ।
स्याद् देवासिन्धुर्गङ्गायां समासाद्यत्र पूर्ववत् ॥ २८८ ॥
अष्टाङ्गुलप्रमाणे तु पुल्लिङ्गः स्याद् धनुर्ग्रहः ।
चापस्य ग्रहणे चाथ त्रिर्ग्रहीतरि धन्वनः ॥ २८९ ॥
चतुर्हस्तप्रमाणे तु धनुर्दण्डः पुमानयम् ।
पूर्ववत् स्यात् समासादि धर्मपालस्तु खड्गके ॥ २९० ॥
पुल्लिङ्गः स्यात् समासादि पूर्वत्रैवात्र कल्पयेत् ।
त्रिराढ्ये स्याद् धनपती राजराजे तु पुंस्ययम् ॥ २९१ ॥
धार्तराष्ट्रो द्वयोश्चञ्चूचरणैरसितैः सिते ।
हंसभेदेऽप्यपत्ये च धृतराष्ट्रस्य ना पुनः ॥ २९२ ॥
नागराजे सुरे त्रिस्तु धृतराष्ट्रस्य योगिनि ।
धामार्गवस्त्वपामार्गे कोशातक्यां च पुंस्ययम् ॥ २९३ ॥
तत्प्रसूने तु शण्डः स्यात् पुंसि तु स्याद् धुरन्धरः ।
धवसंज्ञद्रुमे त्रिस्तु धूर्वहे स्यादथो पुमान् ॥ २९४ ॥
विन्यासभेदे वेश्मादेर्नन्द्यावर्तोऽपि नामभिः ।
तगराद्यैः प्रसिद्धे च पुष्पगुल्मे नपि त्वयम् ॥ २९५ ॥
तत्पुष्पे नन्दयन्तस्तु पुमान् राज्ञि स्त्रियां पुनः ।
नन्दयन्ती मृडान्यां स्यात् सुवर्णेऽपि सुखेऽपि च ॥ २९६ ॥
त्रि तु नन्दयितर्येष क्लीबे तु स्यान्नदीभवम् ।
लवणे सैन्धवाभिख्ये समासाद्यत्र पूर्ववत् ॥ २[illegible] ॥
नवनीतं तु शण्डे स्याद् घृतप्रकृतिवस्तुनि ।
अत्रापि पूर्ववत् सादि नमस्कारी पुनः स्त्रियाम् ॥ २९८ ॥

१. 'द्रु' क. पाठः. २. 'द' क. पाठः.

खदिरीसंज्ञके शाके नमस्कारस्तु ना नतौ ।
नक्तञ्चर उलूके द्वे राक्षसे च त्रिषु त्वयम् ॥ २९९ ॥

स्याद् रात्रिचरमात्रे च नकूबारस्तु देवरे ।
पुमान् निराश्रये तु त्रिर्ना तु नारायणो हरौ ॥ ३०० ॥

तस्यावतारभेदे च नरस्य सहचारिणि ।
स्त्री तु नारायणी लक्ष्म्यां पार्वत्यां चाथ पठ्यते ॥ ३०१[1] ॥

सुपार्श्वस्थानवासिन्यां पार्वत्यां च विशेषतः ।
महेश्वरस्यायतनं सुपार्श्वाख्यं प्रतीयताम् ॥ ३०२ ॥

नारायणी शतावर्यामपि नागोदरी पुनः ।
स्त्रियां भटानामुदरत्राणे[2]सन्नाह ईरिता ॥ ३०३ ॥

अत्रापि पूर्ववत् सादि नागदन्तस्तु पुंस्ययम् ।
निर्यूहसंज्ञके वेश्मभित्तिशङ्कौ तथा दरे* ॥ ३०४ ॥

नागस्य क्लीबलिङ्गं तु जानीयादासनान्तरे ।
लक्षणं चोक्तमूर्ध्वज्ञोर्जा[3]नुस्थौ प्रसृतौ भुजौ ॥ ३०५ ॥

इत्येवं नागदन्ती तु स्त्री निकुम्भादिनामभिः ।
प्रसिद्धे भेषजस्तम्बे द्वयोस्तु स्यान्निशाचरः ॥ ३०६ ॥

सर्पे च राक्षसे चापि स्त्रियां तु स्यान्निशाचरी ।
सृगालजातिभेदे च शिवाख्ये दुष्टयोषिति ॥ ३०७ ॥

स्यान्निशाचारिमात्रे त्रि स्त्रियां तु स्यान्निरञ्जना ।
एकत्र शक्तौ शक्तीनां नवानामपि शार्ङ्गिणः ॥ ३०८ ॥

पौर्णमास्यां द्वयोस्तु स्यात् कृष्णसाराह्वये मृगे ।
त्रिर्निर्गताञ्जनादौ स्यादथ निर्भर्त्सनं नपि ॥ ३०९ ॥

---

१. 'पा' ग. पाठः. २. 'णे' ग. घ. पाठः. ३. 'श्रो' क. ग. पाठः.

---

* 'रदे' इति स्यात्।

अलक्तकेऽथ सीत्कारे न ना निर्भर्त्सनाथ वै ।
बहुव्याकरणज्ञेन शाश्वतेनेदमीरितम् ॥ ३१० ॥

दर्शनेऽपि च मित्संज्ञामङ्गीकृत्य शमेर्यथा ।
दर्शने श्रवणे चापि *नता निशमनेत्यथ ॥ ३११ ॥

रज्जुत्रयप्रमाणे स्यात् क्लीबलिङ्गं निवर्तनम् ।
उक्ताष्टहस्ता रज्जुश्च निवृत्तौ च निवर्तनम् ॥ ३१२ ॥

निवर्तना तु न पुमान् निवर्तयतिकर्मणि ।
नियामकस्तु ना पोतवाहे त्रि तु नियन्तरि ॥ ३१३ ॥

निघातिका त्वयस्कारैर्यत्र निक्षिप्य हन्यते ।
कूटेन लोहं तत्र स्त्री त्रिषु तु स्यान्निहन्तरि ॥ ३१४ ॥

निदेशनस्तु पुंसि स्याद् दशहस्ते प्रमाणके ।
क्ली त्वाज्ञायां च दाने च न तु ना ण्यन्तकर्मणि ॥ ३१५ ॥

निषद्वरस्तु ना पङ्के वह्नाविन्द्रे च मन्मथे ।
निषद्वरी तु स्त्री दृश्या प्रभायां रजनावपि ॥ ३१६ ॥

निरूपणा तु न पुमान् विचारे दर्शनेऽपि च ।
निश्चारकस्तु पुंलिङ्गः पुरीषोत्सर्जिमारुते ॥ ३१७ ॥

निर्गन्तरि तु स त्रि स्यादथ निर्वापणा न ना ।
तापप्रशमनायां च वधे चाप्यपुमान् पुनः ॥ ३१८ ॥

निर्वासना वधे चापि पुरादेश्च बहिष्कृतौ ।
अत्रापि पूर्ववत् सादि निर्यातनपदं पुनः ॥ ३१९ ॥

न्यासद्रव्यार्पणे दाने वैरशुद्धावथापरे ।
आहुः प्रतीकारमात्रे नानार्थाद्यत्र पूर्ववत् ॥ ३२० ॥

क्ली तु निर्व्यथनं रन्ध्रे समासाद्यत्र पूर्ववत् ।
त्रिर्निराकृतिराकृत्या हीने स्वाध्यायवर्जिते ॥ ३२१ ॥

---

* 'नता' इति स्यात् ।

स्त्री निराकरणे **नित्यशङ्की** तु स्याद् द्वयोर्मृगे ।
नित्यं यः शङ्कते तत्र त्रिरथो **नीलकण्ठ**वाक् ॥ ३२२ ॥
पुमान् हरे मूलकाख्यशाके च द्वे तु बर्हिणे ।
अत्रापि पूर्ववत् सादि **नीलग्रीव**स्तु ना हरे ॥ ३२३ ॥
अत्रापि पूर्ववत् सादि **नीलशीर्षः** पुनर्द्वयोः ।
गोलाङ्गूलाह्वयकपौ समासाद्यत्र पूर्ववत् ॥ ३२४ ॥
**नीलकेशी** स्त्रियां नील्यां समासाद्यत्र पूर्ववत् ।
**नीलवासा**स्तु पुंस्येव बलभद्रे शनैश्चरे ॥ ३२५ ॥
अत्रापि पूर्ववत् सादि स्त्रियां तु स्यान्**नृपात्मजा** ।
कटुतुम्ब्यां पुमांस्तु स्यात् कूश्माण्डे द्वे तु भूपतेः ॥ ३२६ ॥
पुत्रे **प्रतिसर**स्तु स्याद्धस्तसूत्रे नृशण्डयोः ।
स्याच्चमूजघने चापि ना त्वारक्षे च मण्डने ॥ ३२७ ॥
व्रणशुद्धौ च केचित् तु स्त्रियां प्रतिसरां विदुः ।
असती[1]च्छद्मदूत्यामप्येकदेशे च वेश्मनः ॥ ३२८ ॥
भेद्यवत् तु नियोज्ये स्यात् त्रिषु तु स्यात् **प्रतिष्कशः** ।
प्रतिगन्तरि प्रष्ठे च सहायेऽप्यथ पुंस्ययम् ॥ ३२९ ॥
वैजयन्ती समाम्नासीद् द्यूते **प्रतिभयं** पुनः ।
भये नपुंसकं विद्यात् त्रिषु तु स्याद् भयानके ॥ ३३० ॥
**प्रतिहारो** द्वारपाले द्वारे प्रतिहृतावपि ।
साम्नस्तृतीयभक्तौ च ना स्त्री तु प्रतिहार्यसौ ॥ ३३१ ॥
तत्र या स्त्री महीपालं सम्भावयति सर्वदा ।
अत्रापि पूर्ववत् सादि **प्रत्याहार**स्त्वणादिषु ॥ ३३२ ॥
अप्यक्षरसमाम्नाये[2] प्रत्यानयनकर्मणि ।
वाद्यवादकसामग्रीविन्यासे नाट्यगोचरे ॥ ३३३ ॥

---

1. 'ति' ग. ङ. पाठः. 2. 'य' ग. पाठः.

विषयेभ्यः समाहृत्यामिन्द्रियाणामथेह च ।
पूर्ववत् स्यात् समासादि **प्रचलाकः** पुनः पुमान् ॥ ३३४ ॥
मयूरस्य शिखण्डे स्यात् कृकलासान्तरे पुनः ।
नानावर्णकरे द्वे स्याद् विम्बाख्ये च **प्रभञ्जनः** ॥ ३३५ ॥
पुमान् समीरणेऽत्रापि समासार्थादि पूर्ववत् ।
उत्से **प्रस्रवणं** क्लीबं प्रसूतौ चाथ पर्वते ॥ ३३६ ॥
माल्यवानिति विख्याते समासाद्यत्र पूर्ववत् ।
**प्रतारिका** तु स्त्री नाभौ वञ्चके त्रिः प्रतारकः ॥ ३३७ ॥
अत्रापि पूर्ववत् सादि पुमांस्तु स्यात् **प्रजाकरः** ।
§खड्गेऽत्रापि समासार्थलिङ्गान्यूह्यानि पूर्ववत् ॥ ३३८ ॥
**प्रतापसो** ना श्वेतार्के द्वयोस्तु स्यान्मृगान्तरे ।
*मृगशृङ्गे समासार्थलिङ्गाद्यत्रापि पूर्ववत् ॥ ३३९ ॥
**प्रद्योतनस्तु** ना सूर्ये दीप्तौ कृच्यर्थादि पूर्ववत् ।
न ना **प्रसरणी** ख्यात आसारे युद्धकारिणाम्[1] ॥ ३४० ॥
क्लीबं विसरणेऽत्रापि समासार्थादि पूर्ववत् ।
**प्रकीर्णकं** चामरे क्ली द्वयोस्त्वश्वे त्रिषु त्विदम् ॥ ३४१ ॥
सङ्कीर्णे पूर्ववत् सादिरत्राथ स्यात् **प्रवासना** ।
न ना विवासने चापि वधेऽप्यर्थादि पूर्ववत् ॥ ३४२ ॥
**प्रमापणा** तु न पुमान् ज्ञापने (उ? च) वधेऽपि च ।
**प्रबोधना** तु न पुमान् ज्ञापनेऽप्यनुबोधने ॥ ३४३ ॥
आलेपविषये क्ली तु प्रबुद्धौ सादि पूर्ववत् ।
**प्रसाधना** तु न पुमानभ्यङ्गप्रतिकर्मणोः ॥ ३४४ ॥

१. 'णः' क. पाठः.

§ 'ऋष्टिः खड्गः प्रचारोऽसिर्धर्मपालः प्रजागरः' (पृ. ११७. श्लो. १५८) इति तु वैजयन्ती । *'मृदुशृङ्गे' इति स्यात् । 'मृदुशृङ्गः प्रतापसः' (पृ. ६६. श्लो. १४) इति वैजयन्ती ।

शुश्रूषायां च नृत्ती तु कङ्कते स्यात् प्रसाधनी ।
प्रसादनस्तु प्रासादे पुमान् स्यादोदने तु नप् ॥ ३४५ ॥
न ना प्रसन्नीकरणे स्त्री तु प्रसहनी भवेत् ।
लताबृहत्यां क्लीबे तु भवेत् प्रसहनं तथा ॥ ३४६ ॥
अभिभूतौ समासादि पूर्ववत् स्यादथो पुमान् ।
प्रसर्पको दर्शनाय यज्ञस्थानमुपागते ॥ ३४७ ॥
प्रसर्तरि पुनस्त्रि स्यादर्थलिङ्गादि पूर्ववत् ।
प्रवङ्गमः कपौ भेके द्वे द्वे तु कपिभेकयोः ॥ ३४८ ॥
प्लवङ्गमोऽथ स्त्री दण्डहीनस्रुचि परिप्लवा ।
चञ्चले पुनरेष त्रिरथो परिणतः पुमान् ॥ ३४९ ॥
तिर्यग्दन्तप्रहारे स्याद् गजे प्रौढे तु स त्रिषु ।
†परिशुष्कं पुनर्मांसे घृते सिक्तोष्णवारिणि ॥ ३५० ॥
पक्के मृदुनि युक्ते स्यात् कणादिभिरिदं नपि ।
शुष्कमात्रे तु तत् त्रि स्यादथोपकरणे पुमान् ॥ ३५१ ॥
परिच्छदो जातिभेदे शबरीविप्रजे द्वयोः ।
पटच्चरं तु जीर्णे क्ली वस्त्रे भ्राम्रि तु पुंस्यदः ॥ ३५२ ॥
मध्यदेशगते नीवृद्विशेषे स्युः पटच्चराः ।
परम्परा तु वस्तूनां सन्ताने स्त्री द्वयोः पुनः ॥ ३५३ ॥
पुत्रपौत्रादिमालायां स्याद् गृहस्थस्य पञ्चमे ।
षष्ठे च मृगभेदे च गोकर्ण इति विश्रुते ॥ ३५४ ॥
पलङ्कषा पुनः स्त्री स्याद् गोक्षुरे गुल्गुलौ तु ना ।
पचम्पचा तु स्त्री दार्व्यां ना तु चम्पकपादपे ॥ ३५५ ॥

---

१. 'दी' क. ग. च. पाठः.

† 'मांसं बहुघृतैर्भ्रष्टं सिक्तं चेदम्बुना मुहुः । जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते ॥' इति शब्दचन्द्रिका ।

**पर्परीकस्तु** ना वह्नौ भक्षे च द्वे तु कुक्कुरे ।
कुररे पर्परीकी तु पुंस्य§नापाकरे(?) त्रि तु ॥ ३५६ ॥
अप्रत्तौ(?) **परजातस्तु** द्वे दासे सादि पूर्ववत् ।
**परैधितस्तु** द्वे दासे लिङ्गाद्यत्रापि पूर्ववत् ॥ ३५७ ॥
**पञ्चाङ्गुलस्तु** पुंसि स्यादेरण्डाह्वयपादपे ।
पञ्चाङ्गुलिप्रमाणे तु त्रिष्वथो वह्निवातयोः ॥ ३५८ ॥
**पवमानो** विशेषाच्च गार्हपत्याख्यपावके ।
यज्ञस्तोत्रविशेषेषु त्रिष्वप्येष पुमांस्त्रि तु ॥ ३५९ ॥
कारके पवनाख्यस्य कर्मणोऽथ नपुंसकम् ।
पर्याणे स्यात **पल्ययनं** द्वे तु पुत्रस्य पञ्चमे ॥ ३६० ॥
परम्पराख्ये सन्ताने **पलगण्डस्तु** लेपके ।
भित्त्यादेः सुधया मर्त्यजातिभेदेऽपि च द्वयोः ॥ ३६१ ॥
किरातात् करणीजाते **पट्टबन्धः** पुनर्द्वयोः ।
पत्यौ जीवति जारेण जनितः क्षत्रियेण यः ॥ ३६२ ॥
क्षत्रियायां भवेत् तस्मिन् नाम्ना क्षत्रियकुण्डके ।
पूर्ववत् स्यात् समासाद्यमथो **परकुलो** द्वयोः ॥ ३६३ ॥
†मन्त्राख्ये जलमार्जारे समासार्थादि पूर्ववत् ।
**पयोगर्भस्तु** ना मेघे समासार्थादि पूर्ववत् ॥ ३६४ ॥
**पचेलिमस्तु** ना वह्नौ माषे च द्वे तुरङ्गमे ।
**पद्मासनो** विरिञ्चे ना स्त्री तु स्यादासनान्तरे ॥ ३६५ ॥
अत्रापि पूर्ववत् सादि ***प्रत्यग्दृष्टिः** पुनः स्त्रियाम् ।
मीमांसने समासादि पूर्ववत् स्यादथो पुमान् ॥ ३६६ ॥

१. **'कास्तु'** ङ. पाठः.

§ **'पामाकरे'** इति स्यात् । † 'उद्राख्ये' इति स्यात् । 'उद्रस्तु जलमार्जारः पारी परकुलो नशी' (पृः १५३. श्लो. ५४) इति वैजयन्ती । * 'प्रत्यग्दृष्टिः' इति स्यात् । **'मीमांसा तु विजिज्ञासा प्रत्यग्दृष्टिर्विकुण्ठना ।'** (पृ. १७. श्लो. १७५) इति वैजयन्ती ।

यस्याकृतविवाहस्य कनीयान् दारसङ्ग्रही ।
परिवित्तिः स्मृतस्तस्मिन् स्त्रियां तु परिवेदने ॥ २६७ ॥
प्रतिहर्ता त्रिषु ज्ञेयः प्रतिनेतरि तस्करे ।
साम्नस्तु प्रतिहाराख्यभक्तेर्नर्त्विजि गातरि ॥ २६८ ॥
अथो परशुभृद् विघ्नराजे ना त्रिः कुठारिणि ।
परमेष्ठी विरिञ्चे ना स्त्र्युमायां परमेष्ठिनी ॥ २६९ ॥
त्रिरुत्तमेऽन्यः कश्चित् तु निर्वृतेऽन्यो हरादिषु ।
परिवादिध्वनिस्तु स्यात् परिवादवति त्रिषु ॥ २७० ॥
तथापवादशीले च स्त्रियां तु परिवादिनी ।
वीणायामथ पुंसि स्यात् पारावत[1] इति ध्वनिः ॥ २७१ ॥
अतस्यां व्रीहिभेदे च तरुभेदेन्द्रनीलयोः ।
पारावते[2] वर्णभेद ईषत्पाण्डावथ त्रिषु ॥ २७२ ॥
तद्युक्तार्थे च नीचे च क्ली तु (वेर्मेऽपि?) शाखिनः[3] ।
अत्रोक्तस्य फले द्वे तु कपोते गृहवर्तिनि ॥ २७३ ॥
द्वे तु पारशवो विप्रस्योढशूद्रासुतेऽथ ना ।
मौक्तिके नृनपोस्तु स्याल्लोहे कालायसाह्वये ॥ २७४ ॥
शस्त्र इत्यभिधेयोक्तिर्दृष्टा पारशवध्वनेः ।
पूर्वशास्त्रेषु (शश्च? शस्त्रे च) तत्रायोर्थो विवक्षितः ॥ २७५ ॥
अनालोच्यैव कथितं यादवैरिदमीदृशम् ।
अयोर्थमुक्त्वा भूयोऽपि ह्यर्थमस्त्रतया पृथक् ॥ २७६ ॥
अत्रापि पूर्ववत् सादि ना तु पाशुपतध्वनिः ।
भूरुहे शिवमल्लीति प्रसिद्धे (व)कसंज्ञके ॥ २७७ ॥
व्रतभेदे त्वदः क्लीबं तथा पशुपतेः पुनः ।
सम्बन्धिनि त्रिर्ना त्वब्धौ पारावारो नपि त्विमे ॥ २७८ ॥

१. 'प' क. पाठः. २. 'तो' ग. पाठः. ३. 'च' क. च. पाठः.

**पारावारे** परार्वाचोः कूलयोरसमाहृतौ ।
समाहारे त्वेकवचः **प्राजापत्यं** पुनर्नपि ॥ ३७९ ॥
द्वादशाहकृते कृच्छ्रे गर्भाधानाख्यसंस्कृ(तेःतौ) ।
प्रजापतित्वे पत्यन्ताद् यक्प्रत्ययविधानतः ॥ ३८० ॥
केषुचित् सामभेदेषु कृतोद्वाहद्विजे तु ना ।
विवाहभेदेष्वष्टासु द्वितीये गौतमोदिते ॥ ३८१ ॥
प्रजापतेस्त्वपत्ये द्वे तत्सम्बन्धिनि तु त्रिषु ।
पत्युत्तरपदण्येन **प्राणिद्यूतं** तु पुन्नपोः ॥ ३८२ ॥
युद्धे पश्वहिपक्ष्याद्यैर्युद्धमात्रेऽप्यथो पुमान् ।
**प्रावृषेण्यः** कदम्बद्रौ त्रिषु प्रावृड्भवादिषु ॥ ३८३ ॥
जातार्थादितरत्राथ **प्राचेतस** इति ध्वनिः ।
ना वाल्मीकिमुनौ त्रिस्तु सम्बन्धे स्यात् प्रचेतसः ॥ ३८४ ॥
**पितामहो** विरिञ्चे ना पितुश्च जनके तथा ।
पितामही तु स्त्री तत्र जनयित्र्यामथ द्वयोः ॥ ३८५ ॥
**प्रियापत्यः** कङ्कसंज्ञे शकुनौ सादि पूर्ववत् ।
**प्रियंवदा** पुष्पवल्ल्यां मालतीनाम्नि सा स्त्रियाम् ॥ ३८६ ॥
प्रियस्य वक्तरि त्रि स्यादथ **पिण्डफला** स्त्रियाम् ।
अलाबुवल्ल्यामत्रापि समासादिकमुन्नयेत् ॥ ३८७ ॥
**पिण्डारको** ना पिण्डीकसंज्ञवृक्षे द्वयोः पुनः ।
चित्राङ्ग इति विख्याते व्याघ्रभेदे द्वयोः पुनः ॥ ३८८ ॥
पक्षिणि स्यात् **पिपातिषत्** पतितुं त्विच्छति त्रिषु ।
**पीनस्कन्धो** वराहे द्वे समासादि तु पूर्ववत् ॥ ३८९ ॥
**पीतपुष्पस्तु** ना कासमर्दे कूश्माण्डकेऽपि च ।
अत्रापि पूर्ववत् सादि पीलुपर्णी पुनः स्त्रियाम् ॥ ३९० ॥

१. 'ग' ङ. पाठः. २. 'स्व' क. ङ. च. पाठः.

दूर्वायां तुण्डिकेर्यां च समासाद्यत्र पूर्ववत् ।
**पीतदारु** पुनः क्लीबं देवदारुणि चन्दने ॥ ३९१ ॥

ताम्रसारेऽथ लिङ्गादि पूर्ववत् कल्पयेदिह ।
**पुण्डरीकं** सिते छत्रे कुष्ठव्याध्यन्तरे तथा ॥ ३९२ ॥

पद्ममात्रे सिताम्भोजे वालुकाख्यविषान्तरे ।
स्यादाम्रस्य फले गन्धद्रव्ये मदनकाह्वये ॥ ३९३ ॥

क्लीबं ना त्वग्निदिग्भागगजे हस्तिज्वरान्तरे ।
इक्षुजातिप्रभेदे च शालिजात्यन्तरेऽपि च ॥ ३९४ ॥

इतिहासप्रसिद्धे च विष्णुभक्ते द्विजान्तरे ।
द्वयोस्तु सर्पभेदाः स्यू राजिलाख्यास्त्रयोदश ॥ ३९५ ॥

तेषामेकत्र भेदे च व्याघ्रे च कथितो बुधैः ।
अनूपमांसवर्गस्य मध्ये यः प्लवसंज्ञकः ॥ ३९६ ॥

हंसादिर्गण उद्दिष्टस्तत्र चैकत्र पक्षिणि ।
**पुष्पदन्तस्तु** ना वायुदिग्गजे शार्ङ्गधन्वनः ॥ ३९७ ॥

चतुर्णामपि चाश्वानामेकस्मिंश्चन्द्रसूर्ययोः ।
सहोक्तौ पुष्पदन्तौ स्तः समासाद्यत्र पूर्ववत् ॥ ३९८ ॥

कपित्थे ना **पुष्पफलः** क्ली तु द्वन्द्वे समाहृतौ ।
कूश्माण्डे तु पुमान् **पुष्पफलो** लिङ्गादि पूर्ववत् ॥ ३९९ ॥

**पुनर्वसुर्वररुचौ** पुमान् नारायणे तथा ।
अदितेस्त्वपि नक्षत्रे द्विवचोन्तः पुनर्वसू ॥ ४०० ॥

तद्युक्ते कालमात्रे च तत्र जाते त्रिषु स्मृतः ।
तस्मिन्नर्थे यथायोगं सर्वाणि वचनान्यपि ॥ ४०१ ॥

**पुरोगामी** शुनि द्वे स्यात् त्रिषु तु स्यात् पुरस्सरे ।
**पूर्णपात्रस्तु** नृनपोरुत्सवेषु सुहृज्जनैः ॥ ४०२ ॥

गृह्यते वस्त्रमाल्यादि बलादाकृष्य तत्र यत् ।
यस्य प्रमाणमुष्टीनां षट्पञ्चाशच्छतद्वयम् ॥ ४०३ ॥

तत्रापि तण्डुलाद्येऽथ पूर्णे पात्रे जलादिना ।
लिङ्गत्रयं स्यादत्रार्थे **पूर्णानक**पदं पुनः ॥ ४०४ ॥

उत्सवेषु सुहृद्भिर्यद् बलादाकृष्य गृह्यते ।
वस्त्रमाल्यादि तत्र क्ली न तु स्त्री पूर्ण आनके ॥ ४०५ ॥

**पूर्णकोशा** प्रशस्तायां क्वचित् स्यादोषधौ स्त्रियाम् ।
अपूपे तु पुमानत्र समासादीनि पूर्ववत् ॥ ४०६ ॥

**पूर्णकूटो** द्वयोः कूटपूरिसंज्ञे विहङ्गमे ।
चाषसंज्ञे च लिङ्गार्थसमासाः पूर्ववत् स्मृताः ॥ ४०७ ॥

**पूतिपुष्पी** मातुलुङ्ग्यां स्त्री समासादि पूर्ववत् ।
स्त्री तु **पूतिफली** सोमराजीति प्रथितौषधौ ॥ ४०८ ॥

पूर्वत्रेवात्र लिङ्गादि पुंलिङ्गस्तु **पृषातकः** ।
साज्ये दध्नि क्ली तु दुग्धे निषिक्तघृतके भवेत् ॥ ४०९ ॥

**पृथुच्छद**स्तु ना शाकसंज्ञवृक्षेऽथ पूर्ववत् ।
समासादिकमत्रापि **पृथुहस्त**स्तु हस्तिनः ॥ ४१० ॥

ऊर्ध्वं कृत्वाङ्गुलेः सप्त भागान् भागे च सप्तमे ।
पूर्ववत् स्यात् समासादि **पृथुचित्रः** पुनर्नरि ॥ ४११ ॥

कुण्डप्रमितधान्यस्य गृहस्थे सङ्ग्रहीतरि ।
सादि पूर्ववदत्रापि **पृथुरोमा** पुनर्झषे ॥ ४१२ ॥

पूर्ववत् स्यात् समासादि ना तु **प्रेतालया** द्रुमे ।
शाकोटाख्ये समासादि पूर्ववन्ना पुनर्नडे ॥ ४१३ ॥

काशे च स्यात् **पोडगलो** वैकरञ्जाख्यभोगिनाम् ।
भवेत् त्रयाणामेकत्र द्वे अथो **पोषयित्नुवाक्** ॥ ४१४ ॥

ना मेघे कोकिले तु द्वे पौरुषेयं पुमाविषु ।
पुरुषेण कृते तस्य विकारे च वधेऽथ मद् ॥ ४१५ ॥

वृन्दे पौरोहितं तु त्रि सम्बन्धिनि पुरोधसः ।
अथर्ववेदे तु क्लीवं द्वयोस्तु स्यात् फलाशनः ॥ ४१६ ॥

शुके पूर्ववदत्रापि पाटल्यां तु फलेरुहा ।
स्त्री ना तु तालवृक्षे स्याद् बन्धुजीवः पुनर्नरि ॥ ४१७ ॥

बन्धूके तस्य पुष्पे क्ली समासाद्यत्र पूर्ववत् ।
शतावर्यां बहुसुता स्त्री समासादि पूर्ववत् ॥ ४१८ ॥

बहुरूपो महादेवे पुंस्यराल इति श्रुते ।
स्यान्निर्यासविशेषे च समासाद्यत्र पूर्ववत् ॥ ४१९ ॥

बहुप्रजो द्वे वराहे समासादि च पूर्ववत् ।
बलिपुष्टो द्वयोः काके समासादीनि पूर्ववत् ॥ ४२० ॥

ब्रह्मघोषस्तु गरलविशेषे पुन्नपुंसकम् ।
वेदघोषे तु पुंल्लिङ्गः समासादीनि पूर्ववत् ॥ ४२१ ॥

ब्रह्मदण्डः पुनः पुंसि धनुर्भेदे स्त्रियां पुनः ।
भार्ङ्गीसंज्ञौषधे ब्रह्मदण्डी स्यादोषधौ क्वचित् ॥ ४२२ ॥

सादि पूर्ववदत्रापि ब्रह्मपुत्रस्तु ना विषे ।
ब्रह्मवालुकसंज्ञे स्याद् रुद्रे केतुग्रहेऽपि च ॥ ४२३ ॥

अत्रापि पूर्ववत् सादि ब्रह्मचारी पुनर्नरि ।
उपनीते तथा स्कन्दे स्त्रियां तु ब्रह्मचारिणी ॥ ४२४ ॥

दुर्गायां त्रिषु तु ज्ञेयः स्यादमैथुनकारिणि ।
बाहुलेयस्तु ना स्कन्दे द्वयोस्तु बहुलासुते ॥ ४२५ ॥

बालवत्सो द्वयोरुक्तः कपोताख्यविहङ्गमे ।
पारावताख्यकन्यस्मिन् समासादीनि पूर्ववत् ॥ ४२६ ॥

‡बिलखण्डं रक्तपद्मे क्ली समासादि पूर्ववत् ।
बिलेशयो द्वे नकुले मूषिके भुजगेऽपि च ॥ ४२७ ॥
बिलेशया तु गोधायां स्त्री स्याद् बृन्दारकः पुनः ।
द्वे देवे त्रि तु मुख्येऽपि सुन्दरेऽथ बृहच्छदः ॥ ४२८ ॥
ना शोथशत्रुसंज्ञे स्यात् स्तम्बे सादीनि पूर्ववत् ।
बोधनीया स्त्रियां वृद्धिसंज्ञके भेषजान्तरे ॥ ४२९ ॥
त्रि तु बोधयितव्ये च बोद्धव्ये चाप्यथ द्वयोः ।
भयानको वराहेऽपि व्याघ्रे स्यान्मूषिकान्तरे ॥ ४३० ॥
भट्टारको ना नाट्योक्तौ राज्ञि पूज्ये च पूरुषे ।
स्त्री तु भट्टारिका ज्ञेया नाट्योक्तावेव मातरि ॥ ४३१ ॥
भ्रमरेष्टस्तु पुंस्याम्रे नीपे जम्बूटपादपे ।
पूर्ववत् स्यात् समासादि भारद्वाजः पुनर्द्वयोः ॥ ४३२ ॥
व्याघ्राटाख्ये पक्षिभेदे ऋषिभेदे तु पुंस्ययम् ।
स्त्रियां तु वन्यकार्पास्यां भारद्वाजी द्वयोः पुनः ॥ ४३३ ॥
भरद्वाजस्य वंश्येषु सम्बन्धिनि पुनस्त्रिषु ।
भागधेयं तु भाग्ये क्ली दायादे तु पुमानयम् ॥ ४३४ ॥
राजदेयकरे न क्ली भागधेयी द्वयोः पुनः ।
जाते भागवतो व्रात्याद् वैश्या क्षत्रियपूर्विका ॥ ४३५ ॥
या तस्यां त्रिस्तु भगवत्सम्बन्धिनि पुमान् पुनः ।
भारस्य वहने भारवाहः क्लीबं तु वाजिनः ॥ ४३६ ॥
रेचिताख्यगतौ त्रिस्तु तद्गति स्याच्च वोढरि ।
भारस्य भासयन्तस्तु भास्करे पुंस्यथ त्रिषु ॥ ४३७ ॥

१. 'वे' ग. पाठः.

‡ 'बिसखण्डम्' इति स्यात् । 'रक्ते तु पद्मे कण्डारं बिसखण्डम्' (पृ. १५७. श्लो. ३९) इति वैजयन्ती ।

विज्ञेयो भासयितरि स्त्र्यर्थे तत्रापि ङीप्यथ ।
भासयन्ती भिन्नकुम्भः पुनस्त्रिर्दोस्यमोचिते ॥ ४३८ ॥

पूर्ववत् स्यात् समासादि भीरुचेताः पुनर्द्वयोः ।
मृगे पूर्ववदत्रापि भूतकेशी पुनः स्त्रियाम् ॥ ४३९ ॥

(शिते?) शेफालिकायां स्याद् गोलोम्यां तु पुमानयम् ।
अत्रापि पूर्ववत् सादि ज्ञेयं भूरिफला पुनः ॥ ४४० ॥

अन्यास्मिन् पुष्पवल्लेः स्त्री स्थावरे सप्तलाह्वये ।
अत्रापि पूर्ववत् सादि भृङ्गराजः पुनः पुमान् ॥ ४४१ ॥

वास्तुदेवविशेषे स्याद् यो दक्षिणपदावलेः ।
वास्तुनः सप्तमपदे प्राक्त आरभ्य वर्तते ॥ ४४२ ॥

स्थावरे ‡मार्कराख्ये च द्वे तु धूम्याटभृङ्गयोः ।
द्वयोस्तु भृज्जकण्ठः स्यान्मर्त्यजात्यन्तरे द्विजात् ॥ ४४३ ॥

वैश्यायां जनिते जाते व्रात्याच्च द्विजयोषिति ।
भोजनीयं तु सामुद्रलवणे क्ली त्रिषु त्वदः ॥ ४४४ ॥

भोक्तव्यादौ महादेवः पुनर्ना परमेश्वरे ।
पार्वत्यां तु महादेवी स्त्रियां राज्ञश्च योषिति ॥ ४४५ ॥

ज्ञेया कृताभिषेकायां समासाद्यत्र पूर्ववत् ।
महानटस्तु ना भर्गे समासाद्यत्र पूर्ववत् ॥ ४४६ ॥

महाव्रतस्तु शम्भौ ना क्ली त्वेकाहमखान्तरे ।
व्रते तु महति क्लीबे पुंसि चार्थादि पूर्ववत् ॥ ४४७ ॥

महेश्वरस्तु ना मृत्युञ्जये स्याद् गुल्गुलावपि ।
महेश्वरी तु स्त्री ब्रह्मरीतिसंज्ञकलोहके ॥ ४४८ ॥

महावीरो महादेवे पावके गरुडे च ना ।
सोमवंशसमुद्भूते बृहद्रथसुते नृपे ॥ ४४९ ॥

---

‡ 'मार्कवे भृङ्गराजः स्यात्' (पृ. ५३. श्लो. १०७) इति तु वैजयन्ती ।

प्रवर्ग्यपात्रे सुभटे वीरे वज्रेऽप्यथ त्रिपु ।
प्रवरे द्वे तु हंसे च श्वेताश्वे[1] च खगेऽपि च ॥ ४५० ॥
अत्रापि पूर्ववत् सादि **महासेनस्तु** ना गुहे ।
अत्रापि पूर्ववत् सादि *.**महापुत्रः** पुनस्त्रिषु ॥ ४५१ ॥
समृद्धे कथितः सद्भिर्हस्त्यारोहाधिपे तु ना ।
अत्रापि पूर्ववत् सादि **महासर्पः** पुनर्द्वयोः ॥ ४५२ ॥
•षड्विंशतिप्रभेदानां दर्वीकरफणाभृताम् ।
एकभेदे नपि त्वेतत् संसर्पाख्येषु सामसु ॥ ४५३ ॥
दशस्वपि समासादि पूर्वत्रैवात्र तर्कयेत् ।
**महापद्मो** द्वयोर्दर्वीकरसंज्ञफणाभृताम् ॥ ४५४ ॥
एकभेदेऽथ ना झाटे शोथशत्रुरिति श्रुते ।
क्लीबं तु रक्तपद्मे स्यात् समासाद्यत्र पूर्ववत् ॥ ४५५ ॥
**महाकायो** गजे द्वे स्यात् समासाद्यत्र पूर्ववत् ।
**महाग्रीवो** द्वयोरुष्ट्रे समासाद्यत्र पूर्ववत् ॥ ४५६ ॥
**महामुखो** द्वयोर्नक्रे समासाद्यत्र पूर्ववत् ।
**महाशल्को** द्वयोर्मत्स्यभेदे एत्थालसंज्ञके ॥ ४५७ ॥
स्त्रियां तु स्यान्महाशल्का देविकासंज्ञके भवेत् ।
मातुलुङ्गप्रभेदे च समासाद्यत्र पूर्ववत् ॥ ४५८ ॥
**महावेगः** कपौ द्वे स्यात समासाद्यत्र पूर्ववत् ।
**महानादो** द्वयोः सिंहे गजे चात्रापि पूर्ववत ॥ ४५९ ॥
**महादंष्ट्रो** द्वयोर्व्याघ्रभेदे चित्राङ्गसंज्ञके ।
अत्रापि पूर्ववत् सादि **महापक्षः** पुनर्द्वयोः ॥ ४[illegible]

1. 'श्वेतस्व' क. च. पाठः. २. 'मेद [illegible]' ख. ग. च. पाठः.

* 'महामात्रः' इति स्यात । 'महामात्रः समृद्धे चामात्ये हस्तिपकाभिधे' इति मेदिनी ।

**कारण्डवाख्यविहगे** समासाद्यत्र पूर्ववत् ।
**महारसा** तु स्त्री द्रोणपुष्पीसंज्ञौषधौ तथा ॥ ४६१ ॥
नीलीनाम्नि च ना त्विक्षौ खर्जूराख्ये च पादपे ।
अत्रापि पूर्ववत् सादि माषपर्ण्यां **महासहा** ॥ ४६२ ॥
अम्लानसंज्ञझाटे च स्त्री समासादि पूर्ववत् ।
**महाफला** स्त्री कूश्माण्डे महाजम्ब्वां च पूर्ववत् ॥ ४६३ ॥
**महाश्वेता** स्त्रियां क्षीरविदार्यां या तु वल्लिका ।
गिरिकर्णीति विख्याता नीलायां तत्र किं च सा ॥ ४६४ ॥
कण्टकिव्रततीभेदेऽप्यत्राप्यर्थादि पूर्ववत् ।
**महाबुसस्तु** ना धान्ये हायनाख्ये यवे च ना ॥ ४६५ ॥
अत्रापि पूर्ववत् सादि **महाकन्दं** पुनर्नपि ।
शुण्ठ्यां पुंशण्डयोस्तु स्याल्लशुनेऽर्थादि पूर्ववत् ॥ ४६६ ॥
**महाजाली** स्त्रियां पीते घोषसंज्ञे लतान्तरे ।
अत्रापि पूर्ववत् सादि **महापत्रः** पुनः पुमान् ॥ ४६७ ॥
तालसंज्ञद्रुमेऽत्रापि समासादिकमुन्नयेत् ।
**महोदरी** तु स्त्री मुस्तभेदे नादेयिकाह्वये ॥ ४६८ ॥
रावणस्य त्वमात्ये ना क्ली तुदरुजान्तरे ।
अत्रापि पूर्ववत् सादि क्लीबे तु स्यान्**महौषधम्** ॥ ४६९ ॥
शुण्ठ्यामतिविषायां च लशुने चाथ पुन्नपोः ।
औषधे महति स्यात् तु दशस्वपि पलण्डुषु ॥ ४७० ॥
अन्यस्मिन्नेव लशुनादिकत्राथ **महाधनम्** ।
युद्धे क्ली पूर्ववत् सादि पुमांस्तु स्यान्**महालयः** ॥ ४७१ ॥
ईश्वरस्थानभेदे च विहारे परमात्मनि ।
अत्रापि पूर्ववत् सादि न तु * ना स्यान्**महोदयः** ॥ ४७२ ॥

---

१. 'जपे च' ङ. पाठः. २. 'नृ' ग. पाठः. ३. 'य.' क ग. च. पाठः.

'नप्' इति स्यात् । 'महोदयः कान्यकुब्जे' इति मेदिनी

कन्याकुब्जाख्यनगरे कन्यायां तु स्त्रियामियम् ।
प्रौढायां किञ्चिदत्रापि समासादिकमुन्नयेत् ॥ ४७३ ॥

**महत्तरी** तु स्त्री राज्ञो या वृद्धा परिचारिका ।
आशीःस्वस्त्ययनाभिज्ञा तस्यां त्रिस्तु बृहत्तरे ॥ ४७४ ॥

पुमान् * **मधुरिकः** प्रोक्तो जीवकाह्वयभेषजे ।
शालेयाख्ये शीतशिवे स्त्रियां मधुरिका मता ॥ ४७५ ॥

**मधूलकस्तु** गिरिजे मधूकाख्यतरौ पुमान् ।
मधूकपुष्पविहितसुरायां तु मधूलिका ॥ ४७६ ॥

स्त्री मूर्वायां च कश्चित् तु तां यष्टिमधुकेऽभ्यधात् ।
**मधुच्छदस्तु** ना वृक्षे विकङ्कत इति श्रुते ॥ ४७७ ॥

अत्रापि पूर्ववत् सादि स्त्रियां तु स्यान्**मधुव्रता** ।
इत्याहुः श्वेतगुञ्जायां ना फलाध्यक्षपादपे ॥ ४७८ ॥

अत्रापि पूर्ववत् सादि पुल्लिङ्गस्तु **मधूरकः** ।
फणिर्जकविशेषे स्यात् सुगन्धो यस्य चापरम् ॥ ४७९ ॥

**मञ्जीरक** इति प्राहुर्नामधेयं विचक्षणाः ।
अपामार्गे च नपुं तु स्यात् तुत्थाञ्जनमिति श्रुते ॥ ४८०

अञ्जने **मदमत्तस्तु** धुर्धूरेऽस्त्री पुरे पुमान् ।
मदेन मत्ते त्रि स्त्री तु **मदयन्ती** प्रकीर्तिता ॥ ४८१ ॥

मल्लिकायां त्रिषु त्वेष मदयन्तः प्रयोजके ।
§ मद्रीत्यां (?) **मण्डयन्तस्तु** पुमानादर्शे ओदने ॥४[illegible]

त्रिस्तु प्रसाधके वित्तपालेऽप्यर्थगयेऽन्य [illegible] ।
स्त्र्यर्थे स्यान्मण्डयन्तीति **मण्डन्त्याश्च** [illegible] ८२ ॥

१. 'शलि स्त्रि' क. ङ. च. पाठः. [illegible] ग. पाठः. ३. '[illegible]यज्ञात्' क. ग. च. पाठः.
४. 'ने' क. ग. च. पाठः.

* '[illegible]: [illegible]स्त्वाङ्गजीवकाः' इति त्वमरः । § 'माद्यते.' इति स्यात् ।

**खड्गे** खड्गविशेषे तु यादवो(र ? ऽस्त्र)र्थेनामतः ।
अत्रापि पूर्ववत् सादि **मस्तुलुङ्ग**स्तु पुंनपोः ॥ ४८४ ॥

शिरःस्नेहे नपि त्वेनद् दधिमण्डेऽथ पुंसि सः ।
**मर्मरीको**ऽनले शूरे द्वे तु श्येनेऽथ सा स्त्रियाम् ॥ ४८५ ॥

**मनोजवा**ग्निजिह्वासु सप्तस्वेकत्र * तत् पुनः ।
पितृधर्मणि पुत्रे द्वे समासाद्यत्र पूर्ववत् ॥ ४८६ ॥

**मनोहरा** तु पिप्पल्यां स्त्री मनोहारिणि त्रिषु ।
**मदोत्कट**स्तु द्वे पारावतसंज्ञविहङ्गमे ॥ ४८७ ॥

मदोत्कटा तु पार्वत्यां स्त्री चैत्ररथनामनि ।
महेश्वरालये या स्याद् वास्तव्या तत्र तत् पुनः ॥ ४८८ ॥

मदोद्धते त्रिषु **मदकल**स्तु द्विरदे पुमान् ।
मदोत्कटे समासादि पूर्ववत् स्याद् द्वयोः पुनः ॥ ४८९ ॥

**मल्लिकाक्षः** सितैर्नेत्रैर्युक्ते ज्ञेयस्तुरङ्गमे ।
हंसे च चञ्चुचरणैर्मल्लिकैरुपलक्षिते† ॥ ४९० ॥

**मलिम्लुच**स्तु पुंस्युक्तोऽधिकमासे मनीषिभिः ।
गृहस्थेऽपञ्चयज्ञे च तस्करे तु त्रिषु स्मृतः ॥ ४९१ ॥

मशके शावके च द्वे चातके रजकेऽपि च ।
**मञ्जुघोषा**प्सरोभेदे समासाद्यत्र पूर्ववत् ॥ ४९२ ॥

**मन्दसान**स्तु नार्केऽग्नौ चन्द्रे जीवेऽप्यथ द्वयोः ।
हंसे **महीपति**स्तु स्यान्नृपे भव्याख्यपादपे ॥ ४९३ ॥

नात्रापि पूर्ववत् सादि **महानर्मा** पुनर्द्वयोः ।
मत्स्यजात्यन्तरे चार्याक्षत्रजे सादि पूर्ववत् ॥ ४९४ ॥

१. 'पूर्ववत् स्यात् समासादि' ग. पाठः. २. 'लि' ग. पाठः. ३. 'न्थे' ग. पाठः

* 'सा' इति स्यात् । † 'मल्लिकैरुपलक्षिते' इति स्यात् ।

**महापक्षी** पुनर्द्वे स्यादुलूके सादि पूर्ववत् ।
**मातामह**स्तु ना मातुस्ताते मातुस्तु भूम्नि च ॥ ४९५ ॥
पूर्वजातेषु वंश्येषु स्यात् तु मातामही स्त्रियाम् ।
मातुर्जनन्यामथ ना हारे षोडशयष्टिके ॥ ४९६ ॥
भवेन्**माणवको** द्वे तु बाले तत्र यदा स्त्रियाम् ।
तदा माणविका गर्ह्यपुरुषेऽथ नृलिङ्गकः ॥ ४९७ ॥
**मार्जालीयो** भवेदङ्गशोधने धौतिदेशके ।
ओतौ तु द्वे चारुणि त्रि**मार्गशीर्षी** पुनः स्त्रियाम् ॥ ४९८ ॥
मृगशीर्षभयुक्तायां पौर्णमास्यां पुमान् पुनः ।
तद्युक्तमासे ना तु स्यान्**मातुलुङ्गः** सुविश्रुते ॥ ४९९ ॥
रुचकादिपदैर्गुल्मे फलार्थे स्त्री त्वमुष्य वै ।
भेदेऽत्यम्लफले मातुलुङ्गी क्ली तु फले तयोः ॥ ५०० ॥
**मित्रविन्दा** स्त्रियामिष्टिविशेषे यज्वविश्रुते ।
कृष्णप्रधानपत्नीनां सप्तानामेकयोषिति ॥ ५०१ ॥
पुंलिङ्गस्त्वृषिभेदेऽसौ कोहलस्य मुनेः सुते ।
**मुमुचान**स्तु ना मेघे त्रि तु मोक्तरि केचन ॥ ५०२ ॥
मुमुक्षितरि तु स्मान्ये पुंलिङ्गस्तु **मुनिप्रियः** ।
श्यामाके पूर्ववत् सादि **मुचुकुन्द**स्तु कुत्रचित् ॥ ५०३ ॥
पूर्वस्मिन् क्षत्रिये पुष्पवृक्षभेदेऽपि नप् पुनः ।
तस्य प्रसूनयोरत्र लिङ्गाद्यं पूर्ववत् स्मरेत् ॥ ५०४ ॥
**मृगशीर्षं** पुनः क्लीबं नक्षत्रे सोमदैवते ।
पूर्ववत् स्यात् समासादि द्वयोस्तु स्यान्मृगादनः ॥ ५०५
तरक्षौ पूर्ववत् सादि **मृगाजीवः** पुनर्द्वयोः ।
तरक्षौ पूर्ववत् सादि **मृदुरोमा** शशे द्वयोः ॥ ५०६

1. 'ब' ग. पाठः. 2. 'ट' क. च. पाठः.

अत्रापि पूर्ववत् सादि क्लीबे **मृगशिरो** भवेत् ।
मृगशीर्षाख्यनक्षत्रे तत्र जाते त्रिषु स्मृतम् ॥ ५०७ ॥
अत्रापि पूर्ववत् सादि **मेषशृङ्गस्तु** पुन्नयोः ।
विषभेदे स्त्री तु मेषशृङ्गी वृक्षान्तरे स्मृता ॥ ५०८ ॥
अत्रापि पूर्ववत् सादि **म्लेच्छभोज्यः** पुनः पुमान् ।
गोधूमधान्ये लिङ्गं च समासोऽर्थश्च पूर्ववत् ॥ ५०९ ॥
**मेघनादस्तु** पुल्लिङ्ग इन्द्रजित्तण्डुलीययोः ।
मेघघोषेऽप्ययं तु स्यादाखुजात्यन्तरे द्वयोः ॥ ५१० ॥
द्वे तु **मैथुनिकः** स्याले स्यात् पाणिग्रहणे पुनः ।
स्त्रीलिङ्गा स्यान्मैथुनिका त्रि तु मैथुनवत्यसौ ॥ ५११ ॥
अथो **यवफलो** वेणौ कुटजाख्यद्रुमे च ना ।
अत्रापि पूर्ववत् सादि पुमांस्तु स्याद् **यथासुखः** ॥ ५१२ ॥
चन्द्रेऽत्र पूर्ववत् सादि **यवनेष्टस्तु** पुंस्ययम् ।
पलाण्डुभेदेषु दशस्वेकभेदेऽत्र पूर्ववत् ॥ ५१३ ॥
**युयुधानस्तु** कस्मिंश्चिद् राज्ञि पुंसि त्रिषु त्वयम् ।
ज्ञेयः साहसिके योद्धर्यन्येऽन्य तु युयुत्सके ॥ ५१४ ॥
**युगन्धरस्तु** तृनपोर्ज्ञेयः स्यन्दनकूबरे ।
पुम्भूम्नि तु क्वचित् साल्वावयवे स्यात् स्त्रियां पुनः ॥ ५१५ ॥
**रक्तदन्ती**ति पार्वत्यां समासाद्यत्र पूर्ववत् ।
**रक्तपुष्पस्तु** ना कोविदारेऽप्यसनपादपे ॥ ५१६ ॥
अत्रापि पूर्ववत् साद्यमथ **रक्तफला** स्त्रियाम् ।
बिम्बीसंज्ञलताजातौ समासाद्यत्र पूर्ववत् ॥ ५१७ ॥
**रक्तशीर्षस्तु** निर्यासे श्रीपिष्टाख्ये पुमानथ ।
पूर्ववत् स्यात् समासादि **रक्तपुष्पी** पुनः स्त्रियाम् ॥ ५१८ ॥

---

१. 'न्योन्यस्य यु.' ग, 'न्या' च. पाठः.

**ब्राह्मणीसंज्ञके** कीटभेदे साद्यत्र पूर्ववत्।
**वर्धकी रथकारस्त्रिर्मर्त्यजात्यन्तरे** द्वयोः॥ ९१९॥
जाते करण्यां माहिष्यात् समासाद्यत्र पूर्ववत्।
**रङ्गाजीवश्चित्रकरे** त्रिः समासादि पूर्ववत्॥ ९२०॥
**रत्नगर्भा** तु भूमौ स्त्री ना तु वैश्रवणे मतः।
पूर्ववत् स्यात् समासादि द्वयोस्तु स्याद् **रजस्वलः**॥ ९२१॥
महिषे स्यादुदक्यायां स्त्रियामेव रजस्वला।
रजस्वति तु तत्र त्रि स्याद् **रजःपूता** तु सा स्त्रियाम्॥ ९२२॥
†सुरस्यां पूर्ववत् सादि **रक्तदृष्टिः** पुनर्द्वयोः।
पारावते समासादि पूर्ववन्नृनपोः पुनः॥ ९२३॥
**राजादनः** फलाध्यक्षसंज्ञके पादपान्तरे।
ना पलाशद्रुमे क्ली तु प्रियालाह्वयपादपे॥ ९२४॥
पूर्ववत् साद्यथो **राजपुत्री** स्त्री मूषिकान्तरे।
चुच्छुन्दरीति विख्याते मालत्यामपि केचन॥ ९२५॥
तिक्तालाब्वां च लिङ्गादि पूर्ववद् द्वे तु राक्षसे।
भवेद् **रात्रिचरस्त्रिस्तु** रात्रिचारिणि तत्र च॥ ९२६॥
स्त्र्यर्थे रात्रिचरीति स्याद् **रूक्षणीयस्तु** शीथुनि।
ना स्त्री गवीधुकायां स्यात् त्रिस्तु रूक्षयितव्यके॥ ९२७॥
स्याद् रूक्षणहिते चाथ ज्ञेयो **रूक्षस्वरो** द्वयोः।
गर्दभे पूर्ववत् सादि **रौहिणेयस्तु** ना बुधे॥ ९२८॥
बलभद्रे च रोहिण्यास्त्वपत्ये स्याद् द्वयोरयम्।
**लक्ष्मीपुत्रो** द्वयोरश्वे लक्ष्म्याः पुत्रे च ना त्रि न

१. 'ला' ङ. पाठः. २. 'के' ङ. पाठः. ३. 'तु' क ग. च पाठः.

† 'सुरभ्याम्' इति स्यात्।

आढ्येऽथ **लब्धवर्ण**स्त्रिः पण्डिते सादि पूर्ववत् ।
**लम्बोदर**स्तु ना विघ्नराजे लिङ्गादि पूर्ववत् ॥ १३० ॥
**लम्बकर्णो** द्वयोश्छागे समासाद्यत्र पूर्ववत् ।
**लेलिहानो** द्वयोः सर्पे यस्तु लेढा मुहुर्भृशम् ॥ १३१ ॥
तत्र त्रिष्वथ शण्डे स्यात् पद्मरागाह्वये मणौ ।
ज्ञेयं **लोहितकं** त्रिस्तु रक्तेऽर्थे कोपनादिभिः ॥ १३२ ॥
तत्राप्यर्थो यदा स्त्री स्यात् तदा रूपद्वयं विदुः ।
लोहितिका लोहिनिकेत्यथ द्वे **लोहिताक्ष**वाक् ॥ १३३ ॥
त्रयोदशानामेकस्मिन् राजिलाह्वयभोगिनाम् ।
पूर्ववत् स्यात् समासादि **वर्धमान**स्तु पुन्नपोः ॥ १३४ ॥
शरावे स्यात् तु पुंलिङ्ग एरण्डे नृपवेश्मनाम् ।
विच्छन्दकप्रभेदे चाप्येधमाने पुनस्त्रिषु ॥ १३५ ॥
अथ **वह्निमुखं** क्लीबं कुसुम्भे सादि पूर्ववत् ।
**वरारोहा** स्त्रियामुक्ता पण्डितैरुत्तमस्त्रियाम् ॥ १३६ ॥
मल्लिकाया विशेषे च देवमल्लीति विश्रुते ।
महोदरीसमाख्ये च मुस्ताभेदेऽत्र पूर्ववत् ॥ १३७ ॥
**वराङ्गना** तु स्त्री तालीसमाख्ये स्यात् तृणद्रुमे ।
पूर्ववत् स्यात् समासादि पुमांस्तु स्याद् **वराणकः** ॥ १३८ ॥
वात्स्यायने द्वयोस्तु[1] स्यात् तीवरीडोम्बयोः सुते ।
मर्त्यजात्यन्तरेऽथ स्यादगस्त्यस्य **वरप्रदा** ॥ १३९ ॥
लोपामुद्राख्यभार्यायां स्त्रियां ना तु विरिञ्चने ।
**वलीमुखः** कपौ द्वे स्याद् दधिभेदे तु नप्यदः ॥ १४० ॥
गाढास्याख्ये वराहे तु **वक्रदंष्ट्रो** द्वयोर्मतः ।
अत्रापि पूर्ववत् सादि द्वयोस्तु स्याद् **वनप्रियः** ॥ १४१ ॥

1. 'तु' क. ङ. पाठः

**कोकिले** पूर्ववत् सादि **वंशवर्णः** पुनः पुमान् ।
चणकाह्वयधान्येऽत्र समासादीनि पूर्ववत् ॥ १४२ ॥
**वंशपत्रं** पुनः क्लीबं हरितालेऽत्र पूर्ववत् ।
**वलाहकस्तु** ना मेघे गिरौ वायौ च शार्ङ्गिणः ॥ १४३ ॥
चतुर्णामपि चाश्वानामेकस्मिन् स्याद् द्वयोः पुनः ।
दर्वीकराख्यसर्पाणां भेदे षड्विंशतेः[1] क्वचित् ॥ १४४ ॥
कृष्णसर्प इति ख्याते निर्विषेद्वादशस्वपि ।
एकभेदे स्त्रियां तु स्यादायुधीयजनश्रुते ॥ १४५ ॥
अन्तर्लोहेन बद्धान्ते फलके स्याद् वलाहका ।
* **वर्वरीका** सरस्वत्यां स्त्री द्वयोस्तु पत्त्रिणि ॥ १४६ ॥
उरणे केशसंस्थानभेदे क्ली त्रि तु कश्चन ।
ब्रूते वचनकारेऽथ पुमान् **वरयिता** धवे ॥ १४७ ॥
त्रिः स्याद् वरयतेः कर्तर्यथ त्रिर्धनवन्तरि ।
**वनवासी** पुमांस्त्वेष वानप्रस्थेऽथ वै त्रिषु ॥ १४८ ॥
वशवर्तनशीले स्याद् **वशवर्ती** स्त्रियां पुनः ।
कस्मिंश्चिदोषधीभेदे विज्ञेया वशवर्तिनी ॥ १४९ ॥
**वासतेयी** तु रात्र्यां स्त्री साधौ तु वसतौ त्रिषु ।
**वासुदेवस्तु** ना विष्णौ द्वयोस्तु स्यात् तुरङ्गमे ॥ १५० ॥
**वारवाणस्तु** नृनपोः कञ्चुके कवचेऽपि च ।
**वालवायः** पुमाञ्छैलविशेषे मेघवत् पुनः ॥ १५१ ॥
वालैः कार्यस्य वस्त्रस्य यः कर्ता तत्र कीर्तितः ।
**वाडबेयस्तु** वृषभे पुमान् स्यादौ [illegible] १ [illegible]

१. 'तौ' ग. च. पाठः. [illegible] ग. च. पाठः.

*• 'बर्बरीकः केशविन्यासकर्मणि । शाकभेदे महाकाले' इति तु हेमचन्द्रः ।

द्वे तु विप्रेऽथ ना वानप्रस्थो वैखानसे तथा ।
मधूकवृक्षे वृक्षे च पलाशाख्ये तयोस्तु नप् ॥ ५५३ ॥

प्रसूने वार्ध्राणसस्तु द्वयोः खड्गमृगे तथा ।
कृष्णग्रीवे रक्तशीर्षे श्वेतपक्षे विहङ्गमे ॥ ५५४ ॥

त्रि वि + त्विन्द्रियक्षीणे श्वेते चाज्ञापतौ पुमान् (?) ।
व्याघ्रनखं तु क्लीबं स्याद् व्यालायुधमिति श्रुते ॥ ९९९ ॥

भेषजे नृनपोस्तु स्याद् व्याघ्रस्य नखरेऽथ ना ।
एरण्डे व्याघ्रपुच्छः स्यात् पुच्छे व्याघ्रस्य पुन्नपोः ॥ ९९१ ॥

व्यापादना तु न पुमान् वधे द्रोहस्य चिन्तने ।
वासनीयं तु शण्डे स्यात् कुङ्कुमे भेद्यवत् पुनः ॥ ९९७ ॥

ज्ञेयो वासयितव्यादौ वेश्याचार्ये पुनः पुमान् ।
ज्ञेयो वातसुतोऽत्रापि समासादीनि पूर्ववत् ॥ ९९८ ॥

वारिपिण्डस्तु मण्डूके द्वयोः पाषाणगर्भजे ।
अत्रापि पूर्ववत् सादि द्वे तु वातप्रमीर्हये ॥ ९९९ ॥

स्याच्च वातमृगे स्त्री तु वात्यायामथ पक्षिणि ।
वातगामी द्वयोर्ज्ञेयो वातयायिनि तु त्रिषु ॥ ९६० ॥

विश्वम्भरा पृथिव्यां स्त्री ना तु विष्णौ हुताशने ।
विश्वरूपो महादेवे वासुदेवे बृहस्पतौ[1] ॥ ९६१ ॥

अश्वे त्वाष्ट्रासुरे चापि ना स्त्री तु सुरभावियम् ।
विश्वरूपा स्त्रियां भूम्नि गायत्र्याह्वयसामनि ॥ ९६२ ॥

त्रिरभ्यासेन गीते (च) * न्यु जे वाचंशतेत्यृचि (?) ।
अत्रापि पूर्ववत् सादि ज्ञेयं विष्णुपदं पुनः ॥ ९६३ ॥

१. 'तः' क. च. पाठः. २. 'त्र्या' ग. पाठः.

* 'न्यू षु वाचं प्रमेत्यृचि' इति स्यात् ।

पुण्यस्थानविशेषे चाप्याकाशे च स्त्रियां पुनः ।
गङ्गायां स्याद् **विष्णुपदी** रविसङ्क्रमणेषु तु ॥ ९६४ ॥
वृषवृश्चिककुम्भेषु सिंहे च स्त्रीनपुंसकम् ।
सादि पूर्ववदत्रापि **विष्णुक्रान्ता** पुनः स्त्रियाम् ॥ ९६५ ॥
गिरिकर्ण्यां तृणस्तम्बे सुमुखीति च विश्रुते ।
अत्रापि पूर्ववत् सादि **विष्णुगुप्त**स्तु पुंस्ययम् ॥ ९६६ ॥
कौटल्याख्यमहाप्राज्ञे समासाद्यत्र पूर्ववत् ।
**विष्वक्सेना** फलिन्यां स्त्री ना तु नारायणेऽत्र च ॥ ९६७ ॥
पूर्ववत् स्यात् समासादि **विजिज्ञासा** पुनः स्त्रियाम् ।
मीमांसने समासादि पूर्ववत् संशये पुनः ॥ ९६८ ॥
**विचिकित्सा** समासादि पूर्ववत् स्त्री **विचक्षणा** ।
कृष्णाशिम्बौ पण्डिते तु त्रिर्ना तु न **विदारणा** ॥ ९६९ ॥
भेदे विडम्बने चाथ स्त्रियामुक्ता **विभागिनी**¶ ।
सप्तलासंज्ञके पुष्पवल्लिभेदेऽथ नो पुमान् ॥ ९७० ॥
**विभावना** साधनायामुपलब्धौ च पूर्ववत् ।
**विभाजन**स्तु पुंलिङ्गो देवमारिपसंज्ञके ॥ ९७१ ॥
शाकजातिविशेषस्य भेदे मारिपसंज्ञिनः ।
विभागहेतुव्यापारे पुनर्ना न विभाजना ॥ ९७२ ॥
अत्रापि पूर्ववत् साद्यमथो **विशसनः** पुमान् ।
खड्गे क्लीबं तु हिंसायां नृनपोस्तु **विशेषकम्** ॥ ९७३ ॥
पुण्ड्रे विशेषयितरि पुनस्त्रिश्च विशेष्टरि ।
**विजृम्भितं** विकसिते त्रिः सजृम्भ [illegible] ॥ ९७४ ॥
जृम्भणेऽथ द्वयोः सर्पे **विपन्न**[illegible] ।
ना तु मेघे **विकसुकः** परि[illegible] पुमान् ॥ ९७५ ॥

---

'त' ग. पाठः.

¶ 'विभावनी' इति स्यात्। 'सप्तलायां विभावनी' (पृ. ६०, श्लो. १६५) इति वैजयन्ती।

गुणवादिनि तु त्रि स्यात् पुमांस्तु स्याद् **विकर्तनः** ।
रवौ ना कर्तने तु क्ली तत्प्रयुक्तौ तु नो पुमान् ॥ ९७६ ॥

**विटकान्ता** हरिद्रायां स्त्री समासादि पूर्ववत् ।
**विवृत्ताक्षः** पुनर्द्वे स्यात् कुक्कुटे सादि पूर्ववत् ॥ ९७७ ॥

**विभावसुस्तु** ना सूर्ये चन्द्रे वह्नौ द्वयोः पुनः ।
शतपत्रेऽथ गन्धर्वभेदे **विश्वावसुः** पुमान् ॥ ९७८ ॥ *

शर्वर्यां तु स्त्रियामुक्ता **विषघाती** पुनर्द्वयोः ।
आखुजातिविशेषे स्यात् समासादीनि पूर्ववत् ॥ ९७९ ॥

**वृश्चिकाली** स्त्रियामुष्ट्रधूम्र[1] इत्यादिभिः पदैः ।
प्रसिद्ध ओषधीभेदे वृश्चिकालं पुनर्नपि ॥ ९८० ॥

वृश्चिकस्य भवेत् पुच्छकण्टके स्त्री तु वेश्मनः ।
द्वारस्याधःस्थकाष्ठस्य **वृकवाला** च पार्श्वके ॥ ९८१ ॥

अत्रापि पूर्ववत् सादि **वृथाजातस्तु** ना द्विजे ।
यज्ञत्यागिनि तत्र त्रिर्निष्फलं जन्म यस्य वै ॥ ९८२ ॥

**वृषलण्डी** पुनः स्त्री स्यात् विमलायां नृनपाः पुनः ।
वृषलण्डो वृषस्य स्याद् गण्डे राजियुते दृढे ॥ ९८३ ॥

**वृषाकपिस्तु** पुंसि स्यादग्नौ सूर्ये हरे हरौ ।
शक्रस्य विहिसोतोऽरित्यस्य द्रष्टरि चाप्यृषौ ९८४ ॥

स ऐन्द्रपुत्रस्तेनापि दृष्टे सूक्तेऽत्र मन्दते ।
द्वयोस्तु वृषदंशे श्रीगौर्यां वालास्तु तु स्त्रियाम् ॥ ९८५ ॥

वृषाकपायी स्त्रीलिङ्गा पुनः कस्तूरिकाह्वये ।
गन्धद्रव्ये **वेधमुख्या** ना तु कस्तूरकेऽत्र च ॥ ९८६ ॥

१. 'का'. ङ. पाठः. २. 'पा' क. ग. ङ. पाठः.

* 'वृश्चिकाल्यामुष्ट्रधूम्रपुच्छिका' (पृ. ५५. श्लो. १२६) इति तु वैजयन्ती। †. 'गृथे' इति स्यात्।

पूर्ववत् स्यात् समासादि **वैजयन्ती** पुनः स्त्रियाम् ।
पताकायां च तर्कारीसंज्ञद्रौ[1] केशवस्रजि ॥ ९८७ ॥
वैजयन्तः पुनः पुंसि प्रासादे स्याच्छचीपतेः ।
तस्य ध्वजे च देवे च देवदेवसुते गुहे ॥ ९८८ ॥
इमं पठन्ति द्वे तु स्याद् वैश्यायां शूद्रसम्भवे ।
**वैदेहकौ** मर्त्यजातिभेदे वणिजि चाप्यथ ॥ ९८९ ॥
स्त्रियां **वैषयिकी** या स्त्री गता वेश्यात्वमात्मनः ।
भोगाय तत्र विषयभवादौ तु त्रिषु स्मृता ॥ ९९० ॥
**वैहायसं** तु धानुष्कस्थितिभेदे नपुंसकम् ।
प्रत्यालीढाह्वये त्रिस्तु सम्बन्धिनि विहायसः ॥ ९९१ ॥
**वैखानसस्तु** ना वानप्रस्थेऽप्यृषिषु केषुचित ।
सामभेदे पुनः क्ली स्याच्छ**तमानं** तु पुन्नपोः ॥ ९९२ ॥
शतोन्मिते तण्डुलानां व्रीहेः कर्षद्वये परे ।
आढके त्वाह कश्चिद् वै **शतपत्रं** तु पङ्कजे ॥ ९९३ ॥
क्ली दार्वाघाटशकुनौ पुनर्द्वे अजयः पुनः ।
मयूरे सारसेऽप्याह समासाद्यत्र पूर्ववत् ॥ ९९४ ॥
**शतवीर्या** स्त्रियां श्वेतदूर्वायां सादि पूर्ववत् ।
**शतह्रदा** तडिद्भेदे तडित्यप्यत्र पूर्ववत् ॥ ९९५ ॥
**शतानन्दस्तु** ना विष्णौ विरिञ्चे गोमये‡ तथा ।
अत्रापि पूर्ववत् तर्क्यौ समासार्थौ सलिङ्गकौ ॥ ९९६ ॥
**शतावर्ता** तु तडिति स्त्रियां विष्णौ तु पुंस्ययम् ।
अत्रापि पूर्ववत् सादि ज्ञेया **शतमुखी** स्त्रियाम्

1. 'क' क. ग. च. पाठः.

‡ 'गौतमे' इति स्यात् ।

**पार्वत्यां** पूर्ववत् सादि नके **शङ्कुमुखो** द्वयोः ।
अर्थलिङ्गसमासास्तु ज्ञेयाः पूर्ववदत्र च ॥ ९९८ ॥
**शङ्कुकर्णस्तु** पुंसि स्यात् पुराणप्रार्थिते मुनौ ।
विज्ञेयस्तु द्वयोरुष्ट्रे गर्दभेऽपि स्त्रियां पुनः ॥ ९९९ ॥
शङ्कुकर्णी प्रतोल्यां स्यात परिघे लोहकीलिनि ।
**शङ्खपालः** पुनर्द्वे स्याद् दर्वीकरफणाभृताम् ॥ ६०० ॥
षड्विंशतेरेकभेदे समासाद्यत्र पूर्ववत ।
**शश्शरीकस्तु** पुष्पाख्ये द्वयोर्लाबाख्यपक्षिणि ॥ ६०१ ॥
क्रिमौ च भेद्यलिङ्गस्तु विकलेन्द्रियजन्तुषु ।
**शरीरजो** ना मदने द्वे पुत्रे सादि पूर्ववत् ॥ ६०२ ॥
**शयानकस्तु** ना शैले द्वयोस्त्वजगरे तथा ।
कृकलासे **शतधृतिः** पुनः पुंसि विरिञ्चने ॥ ६०३ ॥
पूर्ववत् स्यात् समासाद्यमथो **शतभिषक्** पुमान् ।
(गुदे?) दैवतनक्षत्रे तद्युक्ते काल एव च ॥ ६०४ ॥
जाते तु तत्र त्रिलिङ्गसमासाद्यत्र पूर्ववत् ।
**शतपर्वा** तु ना वेणौ स्त्री दूर्वावचयोरपि ॥ ६०५ ॥
कलम्ब्यां च बिसे तु क्ली स्थौणेयाख्ये च भेषजे ।
पूर्ववत् स्यात् समासादि **शतमूर्धा** पुनः पुमान् ॥ ६०६ ॥
वल्मीके पूर्ववत् सादि पुमांस्तु स्याच्छिवप्रियः ।
वसुभट्ट इति ख्याते स्थावरे सादि पूर्ववत् ॥ ६०७ ॥
**शिशुप्रियं** तु कल्हारे सौगन्धिकमिति श्रुते ।
क्ली पूर्ववत् समासादि ना तु खड्गे **शिवङ्करः** ॥ ६०८ ॥
शिवकारिणि तु त्रि स्याच्छिपिविष्टः पुनः पुमान् ।
ईश्वरे खलतौ तु त्रिर्दुश्चर्मणि च निर्धने ॥ ६०९ ॥

१. 'ष्ट्र' ङ, च. पाठः.

रश्मिभिर्वेष्टिते चाथ पुल्लिङ्गः स्याच्छिलीमुखः ।
शरे मधुकरे तु द्वे **शिंशुमारः** पुनः पुमान् ॥ ११० ॥
तारामयाच्युते द्वे तु जलजन्त्वन्तरेऽथ सः ।
शिंशुमारो जलकपौ द्वे समासादि पूर्ववत् ॥ १११ ॥
**शिम्बिदानः** पुनर्द्वे स्यात् कृकलासे त्रिषु त्वयम् ।
कृष्णकर्मणि विज्ञेयः **शिल्पाचार्या** पुनः स्त्रियाम् ॥ ११२ ॥
ज्ञेया वपनशालायां समासादीनि पूर्ववत् ।
**शिरोरुहा** तु स्त्री काकनासासंज्ञलतान्तरे ॥ ११३ ॥
केशे तु ना सुवर्णे तु क्लीबलिङ्गं **शिलोद्भवम्** ।
पूर्ववत् स्यात् समासादि **श्रीवत्साङ्कः** पुनः पुमान् ॥ ११४ ॥
वासुदेवे वृके तु द्वे समासादीनि पूर्ववत् ।
सैन्धवे क्ली **शीतशिवं** ना तु शालेयसंज्ञके ॥ ११५ ॥
भेषजे **शीतकुम्भस्तु** करवीरे नृलिङ्गकः ।
क्ली तु तत्प्रसवेऽत्रापि समासादीनि पूर्ववत् ॥ ११६ ॥
**शीतपङ्कस्तु** ना शीधौ समासादीनि पूर्ववत् ।
**शुक्लपत्रस्तु** ना कुन्दे तथा कुरवकेऽपि च ॥ ११७ ॥
पूर्ववत् स्यात् समासादि **शुकपत्रः**‡ पुनर्द्वयोः ।
एकस्मिन् निर्विषाणां स्याद् द्वादशानां फणाभृताम् ॥ ११८ ॥
अत्रापि पूर्ववत् सादि **शुक्लपुष्पः** पुनः पुमान् ।
(कुन्दे कुरवके चापि समासाद्यत्र पूर्ववत्) * ॥ ११९ ॥
**शुक्लापाङ्गो** मयूरे द्वे समासादीनि पूर्ववत् ।
**शुकनासस्तु** ना टुण्टुवृक्षेऽगस्त्याख्यपादपे ॥ १२० ॥

१. 'शि' ङ. पाठः. २. 'क' क. पाठः.

‡ 'अजगरः शुकपोत्रो वलाहकः' (पृ. १४९. श्लो. १७) इति तु वैजयन्ती । * 'कुन्दे शुक्लपुष्पः' (पृ. ६०. श्लो. १९१) इति, 'शुक्लपुष्पः कुरवकः' (पृ. ५०. श्लो. ६१) इति च वैजयन्ती ।

**अत्रापि पूर्ववत्** सादि **भुवकर्मा** शनैश्चरे ।
पुमानर्थसमासादि पूर्ववत् तर्कयेदिह ॥ ६२१ ॥
**शूर्पकर्णस्तु** मातङ्गे द्वे समासादि पूर्ववत् ।
**श्रोत्रकान्ता** पुनः स्त्री स्याद् वृद्धिसंज्ञकभेषजे ॥ ६२२ ॥
अत्रापि पूर्ववत् साद्यमथो **षोडशिका** न ना ।
पलमाने द्वये त्वस्य पुन्नपुंसकयोर्भवेत् ॥ ६२३ ॥
**समाहारस्तु** संक्षेपेऽप्येकत्र करणे च ना ।
समानाहारकादौ तु लिङ्गाद्यं पूर्ववत् स्मरेत् ॥ ६२४ ॥
**समाघातस्तु** ना युद्धे वधेऽप्यर्थादि पूर्ववत् ।
**समाह्वयस्तु** ना प्राणिद्यूते नाम्नि च यादवः ॥ ६२५ ॥
युद्धेऽप्याह समासादि पूर्ववन्ना **सनातनः** ।
विष्णौ विरिञ्चे च त्रिस्तु ज्ञातव्योऽयं सनातने ॥ ६२६ ॥
**समापना** तु न पुमान् वधे चाप्यवसायने ।
क्लीबलिङ्गं समासौ स्यादथ पुंसि **समीरणः** ॥ ६२७ ॥
वायौ फणिर्जकाख्ये च स्तम्बेऽप्याहरणे त्वना ।
**सरीसृपस्तु** द्वे सर्पे तथैवोदरसर्पिषु ॥ ६२८ ॥
**संवर्तकस्तु** बडबानले ना क्ली तु सीरिणः ।
सीरे संवर्तिका तु स्त्री पद्मिन्या नवपल्लवे ॥ ६२९ ॥
वेष्टितेऽथ द्वादशाहश्राद्धे **सम्प्रेषणी** स्त्रियाम् ।
सम्यक् तु प्रेषणे क्लीबं तत्प्रयुक्तौ पुनर्न ना ॥ ६३० ॥
सम्प्रेषणा वितर्के तु न ना **सम्भावना** तथा ।
उत्पादने च सम्माने पात्रस्यान्तश्च मापने(?) ॥ ६३१ ॥
तत्प्रयुक्तौ[2] च विज्ञेयः पुनः **सङ्कुसुकः**[3] पुमान् ।
श्रद्धामौ[4](?) त्रि तु सङ्कीर्णे व्यक्ताव्यक्तेऽपि चास्थिरे ॥ ६३२ ॥

१. 'कन्दा पु' ग. पाठः. २. 'क्ते' क. ग. च. पाठः. ३. 'क्कु' क. ग. च. पाठः
४. 'नौ' क. च. पाठः.

तथापवादशीले च स्यात् तु **सञ्चारिका** स्त्रियाम् ।
यां स्त्री नियुक्ता भूपस्य कथायां द्रविणादिषु ॥ १३३ ॥
महाकार्ये च तस्यां स्याद् दूत्यां च त्रिषु तु स्मृतः ।
सञ्चारकः सञ्चरितर्यथ **सञ्चारितो** द्वयोः ॥ १३४ ॥
दासे सङ्क्रमिते तु त्रिरथ **सङ्घातिका** स्त्रियाम् ।
भरणौ सङ्घातकस्तु सङ्घातयितरि त्रिषु ॥ १३५ ॥
संहन्तरि च भूपाले पुनः **संयद्वरः** पुमान् ।
नपुंसकं[1] तु सङ्ग्रामे त्रि तु स्यादभयप्रदे ॥ १३६ ॥
कश्चित् त्वनूप इत्याह स्यात् तु **संवासनं**[2] नपि ।
इत्याहुः कर्मशालायामना तु सहवासने ॥ १३७ ॥
स्त्रियां तु मुखशालायां विद्यात् **संवेशनी**पदम् ।
संवेशनं तु शयने क्लीवं संवेशना न ना ॥ १३८ ॥
**सम्मार्जनी** स्त्री शोधन्यां स्त्रियां सम्मार्जना पुनः ।
संशोधनायां सम्मृष्टौ तथा **सङ्कुचितः** पुनः ॥ १३९ ॥
हंसे द्वयोरल्पीभूते पुनस्त्रिरथ पावके ।
**संस्पर्शनो** ना चित्ते क्ली क्ली तु **सन्निहितं** रवेः ॥ १४० ॥
ग्रहणे त्रिः समीपस्थे न तु पुंसि **समर्थना** ।
स्यात् सम्प्रधारणायां च समर्थी[3]करणेऽपि च ॥ १४१ ॥
आक्षिप्तस्य पुनश्चापि स्थापनायामथो नपि ।
एलालवङ्गत्वक्पत्रनागकेसरसिल्हकाः ॥ १४२ ॥
तक्कोलागरुकर्पूराः **सर्वगन्ध**मिहाष्टके ।
पूर्वत्रेव समासादि **सर्वभक्षा** पुनः स्त्रियाम् ॥ १४३ ॥
अजायामर्थलिङ्गादि पूर्ववत् स्त्री **स्वयंवरा** ।
पतिंवरायां ना तु स्यात् स्वयंवरणकर्मणि ॥ १४४ ॥

१. 'कस्तु' क. च. पाठः. २. 'वननं' ङ. पाठः. ३. 'र्थ' ङ., 'र्थे' ग. पाठः.

अथानीहादिधानुष्कस्थितिभेदेषु पञ्चसु ।
एकस्मिन् स्यात् **समपदं** समासादीनि पूर्ववत् ॥ ६४५ ॥

**सहदेवा** स्त्रियां स(त्त्व?त्त्वे) दण्डोत्पल इति श्रुते ।
धर्मपुत्रकनिष्ठे तु ना समासादि पूर्ववत् ॥ ६४६ ॥

**समूहनं** तु क्लीबं स्यात् संहतीकरणे तथा ।
शरस्य योजने मौर्व्यां स्त्रियां तु स्यात् **समूहनी** ॥ ६४७ ॥

सम्मार्जन्यामना ण्यन्तसमूह्यर्थे समूहना ।
स्त्रीपुंसयोः **सहचरी** पीतझिण्ठ्याख्यझाटके ॥ ६४८ ॥

सहचारिणि तु त्रिः स्यात् **सहसानः** पुनर्द्वयोः ।
मयूरे यजमाने तु त्रिर्द्वढेऽथ **सकृत्प्रजः** ॥ ६४९ ॥

द्वे सिंहकाकयोर्न्याये पुनः क्लीबं **समञ्जसम्** ।
अजयस्तु त्रिरभ्यस्तेऽप्युचितेऽप्याह ना पुनः ॥ ६५० ॥

स्वप्ने निशात्ययोद्भूते **सद्यःपाको**ऽत्र पूर्ववत् ।
**सर्पदंष्ट्री** पुनः स्त्रीत्वे वृश्चिकालीति विश्रुते ॥ ६५१ ॥

जानीयादोषधीभेदे समासादीनि पूर्ववत् ।
**सर्पराजः** पुनः पुंस्त्वे वासुकौ द्वे तु भोगिनाम् ॥ ६५२ ॥

त्रयोदशानां राजीलनाम्नामन्यतमेऽथ ना ।
उदुम्बरद्रुमे नालिकेरे च स्यात् **सदाफलः** ॥ ६५३ ॥

अत्रापि पूर्ववत् सादि पुमांस्तु स्यात् **सदागतिः** ।
वायौ सूर्ये च सादीनि पूर्ववद् ब्रुवते पुनः ॥ ६५४ ॥

**सहसानु**र्मयूरे च सर्पे चेत्यपरे द्वयोः ।
**स्तब्धरोमा** पुनर्द्वे स्याद् वराहे सादि पूर्ववत् ॥ ६५५ ॥

**सङ्कचारी** द्वयोर्मत्स्ये समासादीनि पूर्ववत् ।
**समवर्ती** तु ना वैवस्वते सादीनि पूर्ववत् ॥ ६५६ ॥

सहरक्षा दवाग्नौ ना दैत्यानामपि पावके ।
सरक्षसि पुनस्त्रिः स्यात् सार्वभौमः पुनः पुमान् ॥ ६५७ ॥
चक्रवर्तिनि कौबेरदिग्गजे विदिते पुनः ।
वाच्यलिङ्गाः सार्वभौमा.अथ सालावृको द्वयोः ॥ ६५८ ॥
श्ववृकक्रोष्टुषु ज्ञेयः सारमेयः पुनर्द्वयोः ।
शुनके मूषिकायां[1] च समासादीनि पूर्ववत् ॥ ६५९ ॥
सारस्वतः पुनः पुंसि बैल्वे दण्डे नपि त्वदः ।
सत्रयागविशेषेषु सम्बन्धिनि पुनस्त्रिषु ॥ ६६० ॥
स्यात् सरस्वत्सरस्वत्योरथ सांयात्रिकं नपि ।
प्रभाते पोतवणिजि ना (तु ? थ) साम्वँत्सरस्त्रिषु ॥ ६६१ ॥
संवत्सरभवादौ स्याद् विज्ञेयः फलपर्वणोः ।
विद्याज्ज्यौतिषिके चैनं कृष्णशालौ पुनः पुमान् ॥ ६६२ ॥
स्त्री तु साम्वँत्सरी श्राद्धे कर्तव्ये वत्सरात्यये ।
स्त्री तु स्वादुरसा द्राक्षाकाकोलीमदिरासु च ॥ ६६३ ॥
स्वादौ तु स्याद् रसे पुंसि बहुव्रीहौ तु भेद्यवत् ।
साधारणं तु सामान्ये त्रिस्तत्रापि यदा स्त्रियाम् ॥ ६६४ ॥
साधारणा साधारणी चेति रूपद्वयं भवेत् ।
कवाटबन्धमोक्षार्थकुञ्चिकायां पुनः स्त्रियाम् ॥ ६६५ ॥
साधारणी स्वादुगन्धा पुनः स्त्री मधुशिग्रुके ।
पूर्ववत् स्यात् समासादि स्थालीबिलयस्तु तण्डुले ॥ ६६
पुमान् स्थालीबिलार्हे त्रिः सितापाङ्गः पुनर्द्वयोः ।
मयूरे पूर्ववत् साद्यमथो पुंसि सितासितः ॥ ६६७ ॥
बलभद्रे पुमान् सादि पूर्ववत् स्यात् सितच्छदः ।
द्वे हंसे पूर्ववत् सादि द्वयोस्तु स्यात् सितायुधः ॥ ६६८ ॥

---

१. '[illegible]' क. ग. च. पाठः.

एरथालाख्ये मत्स्यभेदे समासादीनि पूर्ववत् ।
**स्थिरजिह्वस्तु** मत्स्ये द्वे समासादीनि पूर्ववत् ॥ १६९ ॥
**स्थिरदंष्ट्रस्तु** ना विष्णौ वराहाकृतिधारिणि ।
भुजङ्गमे तु द्वे अत्र समासादीनि पूर्ववत् ॥ १७० ॥
**सिंहपुच्छी** पुनः स्त्रीत्वे पृश्निपर्णीति विश्रुते ।
ज्ञेया स्यादोषधीभेदे माषपर्ण्यां तु यादवः ॥ १७१ ॥
अत्रापि पूर्ववत् साद्यमथो **सिंहमलं** नपि ।
†नीलिकासंज्ञलोहे स्यात् समासादीनि पूर्ववत् ॥ १७२ ॥
अथ **सिद्धरसः** पुंसि पारदे भेद्यवत् पुनः ।
रससिद्धे समासार्थलिङ्गान्यत्रापि पूर्ववत् ॥ १७३ ॥
अथ **सिन्धूद्भवं** क्लीबे सैन्धवे सादि पूर्ववत् ।
**सुब्रह्मण्यस्तु** ना स्कन्द ऋत्विग्भेदे तु नृस्त्रियोः ॥ १७४ ॥
निगदाख्ययजुर्वेदविशेषे तु स्त्रियामियम् ।
सुब्रह्मण्यात्र सादीनि पूर्ववत् स्यात् **सुदर्शनः** ॥ १७५ ॥
पुनः पुंसीक्ष्वाकुवंशप्रभवे क्षत्रियान्तरे ।
शङ्खगम्य सुते विष्णुचक्रे चान्यस्तु तन्नपि ॥ १७६ ॥
तदप्रमाणमस्मानां कृतिभिर्हि विरुध्यते ।
क्लीबमेवामरावत्यां स्त्रियां तु स्यात् सुदर्शना ॥ १७७ ॥
दध्यालीसंज्ञके वल्लीजातिभेदे द्वयोः पुनः ।
गृध्राह्वये पक्षिभेदे समासादीनि पूर्ववत् ॥ १७८ ॥
**सुचरित्रा** पुनः स्त्रीत्वे कुस्तुम्बुर्यामिहापि च ।
पूर्ववत् स्यात् समासादि **सुप्रतीकः** पुनः पुमान् ॥ १७९ ॥
ईशानदिग्गजेऽत्रापि पूर्ववत् साद्यथो नपि ।
**सुविदत्रं** कुटुम्बे च धनलाङ्गलयोरपि ॥ १८० ॥

† 'नीलिकायां तु सरटी निष्ठुरं दारुकण्ठकम् । गुरुज्येष्ठं सिंहमलं पञ्चलोहाम्यलोहके' (पृ. ४३. श्लो. २७. २८.) इति तु वैजयन्ती ।

शुद्धज्ञाने सुविधे त्रिः **सुनिषण्णं** पुनर्नपि ।
स्वस्तिकादिपदैः स्याते शाकभेदेऽत्र पूर्ववत् ॥ ६८१ ॥

**सुखोदयस्तु** ना मद्यभेदे माध्वीकसंज्ञके ।
अपक्वेक्षुरसैः सिद्धे समासादीनि पूर्ववत् ॥ ६८२ ॥

**सुराष्ट्रजा** पुनः स्त्रीत्व आढकीसंज्ञभेषजे ।
सौराष्ट्रमृद्विशेषस्तत् समासादीनि पूर्ववत् ॥ ६८३ ॥

स्त्रियां तु स्यात् **सुलवणा** गवीधुरिति विश्रुते ।
क्षुद्रधान्यान्तरेऽत्रापि समासादीनि पूर्ववत् ॥ ६८४ ॥

**स्थूलनासः** पुनर्द्वे स्याद् वराहे सादि पूर्ववत् ।
क्लीबं त्वासनभेदे स्यात् **सूचीमुखमि**ति ध्वनिः ॥ ६८५ ॥

ऊर्ध्वज्ञोर्जानुनोर्बाहू प्रसार्य करयोस्तलौ ।
संहत्य च स्थितिः स स्यात् समासाद्यत्र पूर्ववत् ॥ ६८६ ॥

**स्पृहायामं** (?) पुनः क्लीबे स्यादहस्तु तृणेषु च ।
नर्मदायां पुनः **सोमभवा** स्त्री सादि पूर्ववत् ॥ ६८७ ॥

**सोमयोनिर्द्वयो**र्विप्रे सुरे चार्थादि पूर्ववत् ।
**सौगन्धिकं** तु क्ली पद्मे कल्हारे ध्यामसंज्ञके ॥ ६८८ ॥

गन्धद्रव्ये गन्धकाख्ये धातौ तु स्यात् पुमानसौ ।
**सौरभेयस्तु** वृषभे ना स्त्री तु सुरभावियम् ॥ ६८९ ॥

सौरभे(यः?यी) प्रसिद्धे तु धातुभेदे नपुंसकम् ।
**हरितालं** स्त्रियां तु स्याद् दूर्वायां हरिताल्यसौ ॥ ६९० ॥

**हलिप्रिया** सुरायां स्त्री कदम्बाख्ये तु पादपे ।
ना पूर्ववत् समासादि **हस्तिचारः** पुनः पुमान् ॥ ६९१ ॥

शरभाभे गजत्रासहेतौ यन्त्रेऽत्र पूर्ववत् ।
**हस्तिकर्णस्तु** ना शस्त्रत्राणार्थफलकान्तरे ॥ ६९२ ॥

१. 'श्याम पु' क. च. पाठः. २. 'यां तु पु' ग. पाठः.

श्लेषः कम्बलभेदे च रोचकाख्येऽत्र पूर्ववत् ।
ना तु हस्तिनखः पुर्या द्वारकूटेऽत्र पूर्ववत् ॥ ६९३ ॥
हर्षयित्नुः पुना रङ्गोपजीविन्यनुवर्तके ।
प्रियंवदे च त्रिः क्ली तु हिरण्येऽथ हिरण्मयम् ॥ ६९४ ॥
पर्वतादुत्तरे वर्षे (त्रेःश्वे)ताख्या(त्) क्ली त्रिषु त्वदः ।
सौवर्णे ह्रस्वगन्धस्तु पुमान् स्यात् सूक्ष्मजीरके ॥ ६९५ ॥
ह्रस्वस्येव तु यस्य स्याद् गन्धस्तस्मिंस्त्रिषु स्मृतः ।
हेमपुष्पः पुनः पुंसि चम्पकद्रौ स्त्रियां पुनः ॥ ६९६ ॥
पीतायां यूथिकायां स्याद्धेमपुष्प्यत्र पूर्ववत् ।
हेमकुड्यं पुनः क्लीबे द्वीपभेदेऽम्बुधीकृते ॥ ६९७ ॥
खाते भारतवर्षस्य प्रदेशे सगरैः स्थिते ।
अत्रापि पूर्ववत् साद्यमथो हैमवती स्त्रियाम् ॥ ६९८ ॥
पार्वत्यामपि गङ्गायां हरीतक्यां वचान्तरे ।
शुक्ले स्यादोषधीभेदे स्वर्णक्षीरीति विश्रुते ॥ ६९९ ॥
क्ली तु हैमवतं वर्षे भारते मेघवत् पुनः ।
हिमवद्गिरिसम्बन्धिमात्रे काण्डमपूर्यत ॥ ७०० ॥

इति चतुरक्षरकाण्डे नानालिङ्गाध्यायः ।

**चतुरक्षरकाण्डः समाप्तः**

1. 'ख्या' ग. पाठः.

# अथ पञ्चाक्षरकाण्डः।

## स्त्रीलिङ्गाध्यायः।

अथ पञ्चाक्षरे स्त्रीणामध्यायो वर्ण्यतेऽधुना।
अङ्गारवल्ली भार्ङ्गीति प्रसिद्धे भेषजान्तरे ॥ १ ॥
करञ्जानां च भेदेषु क्वचिद् भेदेऽर्धजाह्नवी।
कावेर्यामर्धगङ्गायामथ स्यादुपकुञ्चिका ॥ २ ॥
सूक्ष्मैलायां च कृष्णे च जीरकेऽथोपजिह्विका।
जिह्वारोगान्तरे वम्रचामप्यथो काचमालिका ॥ ३ ॥
मद्ये च काचशब्दार्थमालिकायां च वर्ण्यते।
गोरक्षजम्बूर्गोधूमधान्ये गोरक्षतण्डुले ॥ ४ ॥
गोरक्षतण्डुलो नागबलासंज्ञं हि भेषजम्।
चिलीमलिका त(डन? डिति) * खद्योते कण्ठभूषणे ॥ ५ ॥
अथ नक्षत्रमाला स्याद्धस्तिमस्तकभूषणे।
स्थासकाख्ये तथा सप्तविंशत्या मौक्तिकैः कृते ॥ ६ ॥
एकयष्टौ हारभेदे नक्षत्राणां तथावलौ।
अथ स्यान्मालिकायां च नवायां नवमालिका ॥ ७ ॥
पुष्पवल्लीविशेषे च सप्तलानाम्न्यथो भुवि।
नरेन्द्रपत्नी पत्न्यां च राज्ञोऽथ प्रावृषायणी ॥ ८ ॥
शोफघ्न्यामात्मगुप्तायां शोफघ्नी स्यात् पुनर्नवा।
अत्र स्यात् पुरुषगतिः सेतुषानाम्नि सामनि ॥ ९ ॥

१. 'घ्नं' ग. पाठः. २. 'धन्वामा' ग. पाठः ३. 'धनी स्या' ग. पाठः. ४. 'म' क. ग. च. पाठः.

* 'चिलमीलिका तु कण्ठीभेदे खद्योतविद्युतोः' इति तु मेदिनी। 'चिलिमीलिकातसी स्यात् खद्योते कण्ठभूषणे चापि' (पृ. २७२. श्लो. १२) इति वैजयन्ती च।

अहमस्मीत्यृगुत्पन्ने पुरुषस्य गतावपि ।
अथ योजनगन्धा स्याज्ज्ञानक्यां व्यासमातरि ॥ १० ॥
कस्तूर्यां चाथ कथिता कविभिर्वरवर्णिनी ।
वरस्त्रियां हरिद्रायामथ स्याच्छकुलादनी ॥ ११ ॥
रोहिण्यां तोयपिप्पल्यां रोहिणी कटुरोहिणी ।
इति प्रसिद्धं भैषज्यं स्याच्छ्वेतसुरसा त्वियम् ॥ १२ ॥
(भवेत् सु)गन्धौ तुलसीसंज्ञके च कठिञ्जरे ।
सितशेफालिकायामप्यथो दूत्यां शिरःस्रजि ॥ १३ ॥
भवेत् सुरततालीति शब्दोऽध्यायोऽप्यपूर्ययम् ॥ १३½ ॥

इति पञ्चाक्षरकाण्डे स्त्रीलिङ्गाध्यायः ।

## अथ पञ्चाक्षरकाण्डे पुल्लिङ्गाध्यायः ।

अथ पञ्चाक्षरंनरा अभिनिष्टान इत्यमुम् ।
विद्याद् विसर्जनीये च वर्णमात्रेऽप्यथोभयोः ॥ १ ॥
उत्साहेऽध्यवसायः *स्या+ + + + + + + रः ।
सव्वँत्सर इति ह्येके तद्भेद इति चापरे ॥ २ ॥
अस्थिसङ्घात इत्येष समूहेऽस्थ्नां लतान्तरे ।
अस्थिमानिति विख्यातेऽप्यथ स्यादाशुशुक्षणिः ॥ ३ ॥
पावके भास्करे च स्यादथोपवसथध्वनिः ।
ग्रामोपवासयोः कव्यवाहनस्त्वग्निमात्रके ॥ ४ ॥

*'स्यान्निर्बन्धेऽथाङ्कसरः' इति पाठः स्यात् ।

पितृणामपि वह्नौ स्यादथ स्यात् **करपल्लवः** ।
बाहौ किसलयाकारपाणौ चाथ महेश्वरे ॥ ५ ॥
खण्डे च परशौ **खण्डपरशुः** स्यात् तु केतके ।
आम्रे **चामरपुष्पः** स्यात् काशे च **ज्योतिषांपतिः** ॥ ६ ॥
अर्के चन्द्रेऽप्यथ **तुलापुरुषः** स्याद् व्रतान्तरे ।
पिण्याकाचामतक्राम्बुसक्तूनां भोजनात् क्रमात् ॥ ७ ॥
एकैकस्य त्र्यहं यत् स्यात् तुलायाः पुरुषे तथा ।
**दशनोच्छिष्ट** उच्छ्वासे चुम्बने दशनच्छदे ॥ ८ ॥
भ्रातुर्मृतस्य जायायां संसक्ते **दिधिषूपतिः** ।
पुनर्भ्वश्च धवेऽथ स्याद् वरुणस्य फले तथा ॥ ९ ॥
**धूलीकदम्बोऽ**पि तरुविशेषे नीपसंज्ञके ।
स्या**न्नागवारिक**स्त्वेष गणस्थे हस्तिपालके ॥ १० ॥
**परिवत्सर**शब्दस्तु कैश्चित् सँवत्सरे मतः ।
अन्यैस्तु तद्विशेषेऽथ तक्रेऽपि परमे रसे ॥ ११ ॥
विज्ञेयः **परमरसः** स्यात् तु **पर्यनुयोग**वाक् ।
अनुयोगेऽप्युपालम्भेऽप्यथ वह्नौ पुरन्दरे ॥ १२ ॥
**प्राचीनबर्हिः** शम्भौ तु शक्रे स्या**न्मेघवाहनः** ।
**यक्षकर्दम** इत्येष यक्षाणामपि कर्दमे ॥ १३ ॥
कर्पूरागरुकस्तूरीतक्कोलैः साधितेऽपि च ।
गन्धयुक्तिविशेषेऽन्ये कुङ्कुमं चात्र युञ्जते ॥ १४ ॥
उत्कण्ठे **रणरणको** वियोगे त्वाह सज्जनः ।
मदनेऽमरदत्तोऽमुमाचष्टे शब्दवित्तमः ॥ १५ ॥
**शीतचम्पक**शब्दोऽयं दीपदर्पणयोर्मतः[1] ।
अथ स्यात् **सर्वसन्नाहः** सन्नद्धौ सर्ववर्मिणाम् ॥ १६ ॥

1. 'योः स्मृतः' ग. पाठः.

सर्वात्मन्यप्यथ स्वादुकण्टकः स्याद् विकङ्कते ।
कोल्यां च गोक्षुरे चापि स्यादथो हव्यवाहनः ॥ १७ ॥
भवेदाहवनीयाग्नौ देवाग्नावग्निमात्रके ।
हिङ्गुनिर्यासशब्दोऽयं निम्बे हिङ्गुरसेऽपि च ॥ १८ ॥
हिरण्यबाहुः शोणाख्यनदे विषमलोचने ॥ १८½ ॥

इति पञ्चाक्षरकाण्डे पुंलिङ्गाध्यायः ।

## अथ पञ्चाक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

अथ पञ्चाक्षरनपामध्यायो रचयिष्यते[1] ।
अनुनार्थनशब्दोऽयं याच्ञादिषु चतुर्ष्वपि ॥ १ ॥
अथातिसर्जनं दाने (वधे)* चाथापवर्जनम् ।
परित्यागे च दाने चाप्यथावहननध्वनिः ॥ २ ॥
मुसले चावघाते चाप्यथावतरणध्वनिः ।
अवतीर्णौ च भूतादिग्रहे निवसनाञ्चले ॥ ३ ॥
अभिसन्धानशब्दोऽयं शरव्येऽप्यभिसन्धिके ।
उपसर्जनमित्येतद् यत् स्यात् प्रथमयोदितम् ॥ ४ ॥
समासशास्त्रे तत्र स्यादप्रधानेऽपि तत् तथा ।
उपसृष्टौ तथाह्याह निदाने षोडशिस्तवे ॥ ५ ॥
स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि ।
उपवर्तनमित्येतदश्वानां लुठने क्षितौ ॥ ६ ॥

१. 'वर्णयि' ग. पाठः. २. 'थितश' ग. पाठः.

* 'अथातिसर्जनं दाने वधेऽपि च नपुंसकम्' इति मेदिनी

राष्ट्रेऽप्यथो**पयमनं** विवाहे स्वीकृतावपि ।
**कालानुसार्यं** शैलेये जावकाख्ये विलेपने ॥ ७ ॥

**केशवायुधमित्येतत्** केशवस्यायुधे तथा ।
रथचक्रेऽप्यथ ज्ञेयं **ग्रामणीकुल**मित्यदः ॥ ८ ॥

क्षुद्रद्वीपा हि बहवः सगरैः सागरीकृते ।
भागे भारतवर्षस्य तेषामन्यतमे तथा ॥ ९ ॥

ग्रामण्यां च कुलेऽथ स्याद् **गुणसामान्य**मित्यदः ।
साङ्ख्यतत्त्वे प्रधानाख्ये गुणशब्दार्थवस्तुनः ॥ १० ॥

समानत्वेऽप्यथो पत्रे तमालाख्यमहीरुहः ।
**तमालपत्रं** भस्मादिरचिते च विशेषके ॥ ११ ॥

दुग्धाम्रे **दुग्धतालीयं** स्यात् फेनेऽपि च दुग्धजे ।
**धनधारण**मित्येतत् स्वापतेयस्य धारणे ॥ १२ ॥

व्यवहारप्रवृत्तानां लेख्यभेदेऽप्यथो भवेत् ।
**नगभूषण**मित्येतन्नगानां भूषणेऽपि च ॥ १३ ॥

हरितालेऽप्यथ ज्ञेयं नियमे **परिभाषणम्** ।
निन्दात्मकेऽप्युपालम्भे स्यादालापेऽप्यथो भवेत् ॥ १४ ॥

**परिवेषण**शब्दोऽयं भोजनायां च वेष्टने ।
**पादबन्धन**शब्दस्तु बन्धने पादवस्तुनः ॥ १५ ॥

स्याच्च जीवधनाभिख्ये गोमहिष्यादिवस्तुनि ।
**मणिसोपान**शब्दोऽयं सोपाने मणिनिर्मिते ॥ १६ ॥

**चाटुकार** इति ख्यातेऽप्येकवल्ल्या समे कृते ।
सौवर्णै[2]र्गुडकैर्विद्यादलङ्कारान्तरेऽ(थ?पि) तत् ॥ १७ ॥

१. 'मा' ग. च. पाठः. २. 'णैः कलशिवै' ङ. पाठः.

**मुखभूषण**मित्येतत् स्याल्लोहे वङ्गसंज्ञके ।
मुखस्य भूषणे चाथ **रसकेसर**मित्यदः ॥ १८ ॥
वेधके बकुले नागपुष्पेऽथ **वरचन्दनम्** ।
देवदारुणि कालेयेऽप्यथो (या)तिभयप्रदा ॥ १९ ॥
* . . . . . . . स्याद् **वीराशंसन**मित्यदः ।
आशंसने च वीरस्य **समुद्धरण**वाक् पुनः ॥ २० ॥
वान्तान्नेऽप्युन्नेये चेत्थमध्यायो गतवानयम् ॥ २०१ ॥

इति पञ्चाक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

## अथ पञ्चाक्षरकाण्डे वाच्यलिङ्गाध्यायः

अथाभिधेयलिङ्गा ये शब्दाः पञ्चाक्षराः स्मृताः ।
तेषां समेषामध्यायः स्पष्टं प्रस्तूयतेऽधुना ॥ १ ॥
**अनलमूकः** स्यादन्ये वक्तुं श्रोतुमशिक्षिते ।
श्रुतिवर्जित इत्येके शठे चाथौदनादिषु ॥ २ ॥
सुसंस्कृतेषु प्रयोगे प्रमितप्राशयोरपि ।
**उपसम्पन्न**शब्दोऽयं तथा**थौदयनीय**वाक् ॥ ३ ॥
यागान्तकर्मभेदेऽपि तद्योगादहरादिषु ।
**कथाप्रसङ्ग**स्तु विषवैद्ये वाताधिकेऽपि च ॥ ४ ॥
अथ **प्रवचनीयं** स्यात् प्रवक्तव्ये प्रवक्तरि ।
स्यात् **पर्यवासनं** लब्धे विरतिं प्राप्तवत्यपि ॥ ५ ॥

१. 'द' क. ग. पाठः. २. 'त' ग. पाठः.

* 'तस्यामाजेः पृथिव्याम्' इति स्यात् । 'वीराशंसनमाजेर्भूः' (पृ. १२१. श्लो. २०६) इति वैजयन्ती ।

बहुलीकृतमित्येतन्नीते बहुलतामपि ।
पूतधान्येऽप्यथो शौर्यादि(सि?नि)कस्तस्करे तथा ॥ ६ ॥
औत्थिताशनिके चायमित्यध्यायः समाप्तवान् ॥ ६½ ॥

इति पञ्चाक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

## अथ पञ्चाक्षरकाण्डे नानालिङ्गाध्यायः ।

अथ पञ्चाक्षराः शब्दा नानालिङ्गाश्च ये मताः ।
तेषां समेषामध्यायः स्फुटः प्रस्तूयतेऽधुना ॥ १ ॥

अथापराजितः पुंसि हरे विष्णौ स्त्रियां पुनः ।
ब्रह्मणो ब्रह्मलोकस्थपुरे छान्दोग्यकीर्तिते ॥ २ ॥

विद्यादसनपर्ण्याख्यक्षुद्रवृक्षे लतान्तरे ।
गिरिकर्णीसमाख्ये स्यादीशानदिशि च त्रि तु ॥ ३ ॥

अजिते राजितं यस्मादपेतं तत्र यस्य च ।
गर्हितं राजितं तत्र राजिते गर्हितेऽथ नप् ॥ ४ ॥

गर्हिते राजने स्यादित्यथ स्यादमृतोद्भवम् ।
लशुने क्ली त्रिषु त्वेतत् सर्वस्मिन् स्यात् सुधोद्भवे ॥ ५ ॥

अष्टमङ्गलशब्दो द्वे घोटभेदेऽस्य लक्षणम् ।
†पुच्छोरःखुरकेशास्यैः सितैः स्यादष्टमङ्गलः ॥ ६ ॥

इति तक्षागमख्याते पूर्णकुम्भादिकं नपुम् ।
द्विगौ तु प्राप्तलिङ्गं स्यात् समासेऽथावगाहकः ॥ ७ ॥

१. 'भ्यांसदितस्त' ग. पाठः. २. 'त्रिथ' क. पाठः.

† 'पुच्छोरःखुरकोशास्यैः सितैः स्यादष्टमङ्गलः' (पृ. १११. श्लो. ९८) इति तु वैजयन्ती

कृष्णशालौ पुमांस्त्रिस्तु यत्रकाप्यवरोदरि ।
अथाप्रतिरथो ज्ञेय ऋषिभेदे नृलिङ्गकः ॥ ८ ॥
'आशुश्शिशान'इत्यादिसूक्ते तु स्यान्नपुंसकम् ।
यस्य प्रतिरथो नास्ति तत्र त्रिष्वेष कीर्तितः ॥ ९ ॥
स्त्री त्ववक्षेपणी घोट(रु : कु)*शायां भर्त्सने पुनः ।
क्लीबेऽवक्षेपणं क्लीबं त्ववदारणमित्यदः ॥ १० ॥
खनित्रे भेदने तु स्यात् स्त्री च नप् चावदारणा ।
अथाधिकरणं द्रव्य आधारेऽधिकृतौ च नप् ॥ ११ ॥
अधिके तु रणे न स्त्री बहुव्रीहौ तु भेद्यवत् ।
अधिरोहणमारोहे क्ली स्त्रियां त्वधिरोहणी ॥ १२ ॥
निःश्रेण्यामथ पाठाख्यलताजात्यन्तरे स्त्रियाम् ।
अविद्धकर्णी त्रिषु तु यस्य विद्धौ न कर्णकौ ॥ १३ ॥
अपेतो वारणो यस्मात् तस्मिंस्त्रिष्वपवारणः ।
न नापवारणान्तर्धौ स्त्रीलिङ्गे त्वभिसारिका ॥ १४ ॥
कान्तार्थिनी स्त्री या याति सङ्केतं तत्र सा त्रिषु ।
अभिगन्तरि पुंलिङ्गे त्वङ्गनाप्रिय इत्ययम् ॥ १५ ॥
आम्रवृक्षेऽङ्गनानां तु प्रिये त्रिर्यस्य वाङ्गनाः ।
प्रियास्तत्राब्धिमण्डूकी पुनः स्त्री शुक्तिसंज्ञके ॥ १६ ॥
सामुद्रजन्तौ सामुद्रदर्दुरे तु द्वयोरसौ ।
स्त्री त्वधिश्रयणी चुल्ल्यां चुल्ल्यामारोपणे पुनः ॥ १७ ॥
क्लीबेऽधिश्रयणं पक्तुं स्थाल्यादेरथ नो पुमान् ।
संस्कारे गन्धमाल्याद्यैः पटादेरधिवासना ॥ १८ ॥
निवासनेऽप्यथारिष्टनेमिर्विष्णौ पुमांस्त्रि तु ।
अरिष्टा यस्य नेमिः स्यात् तत्राग्रेदिधिषूः पुनः ॥ १९ ॥

* 'वल्गावक्षेपणी कुशा' (पृ. ११३. श्लो. ११४) इति वैजयन्ती

या ज्येष्ठायामनूढायामूढा तस्यां स्त्रियां स्त्रियाम्।
ना तु भ्रातुः प्रमीतस्य जायया रमतेऽनुजः ॥ २० ॥
यस्तस्मिन्नमुमेवास्मिन्नर्थे ह्रस्वान्तमप्यवक्।
अग्रेदिधिषुरित्येष पठितोऽर्थान्तरे परैः ॥ २१ ॥
यथा पुनर्भूर्द्विर्व्यूढा सैव यस्य कुटुम्बिनी।
स स्याद् द्विजोऽग्रेदिधिषुरित्यथान्तावसायिवाक् ॥ २२ ॥
द्वयोर्निषाद्यां चण्डालाज्जाते जात्यन्तरे नृणाम्।
सिंहस्तु नापिते प्राह चण्डाले प्राह शाश्वतः ॥ २३ ॥
अथासुतीवलः पुंसि विज्ञेयः सोमयाजिनि।
भेद्यलिङ्गस्तु विज्ञेयः कल्यपाले मनीषिभिः ॥ २४ ॥
अथाशितो येन भवेत् करणेनौदनादिना।
स्यादाशितम्भवं तत्र त्रिर्भावे त्वाशितस्य हि ॥ २५ ॥
अबाधितानां भावोक्तकृत + + + + + + (?)।
इदं चोदाहरच्छण्डं स्वशास्त्रे शाकटायनः ॥ २६ ॥
वैजयन्त्यां तु पुंस्युक्तं तन्मूलं चिन्त्यतां बुधैः।
स्यादाग्रहायणी स्त्रीत्वे मृगशीर्षाख्यतारके ॥ २७ ॥
तद्युक्ते कालमात्रे च पौर्णमास्यामपि क्वचित्।
मार्गशीर्षीति यस्य स्यात् समाख्या भेद्यवत् पुनः ॥ २८ ॥
कालयोरेतयोर्जाते भवे चा* + + + + +।
(आप)न्नसत्त्वा तु स्त्रीत्वे गर्भिण्यामथ स त्रिषु ॥ २९ ॥
प्राप्तसत्त्वे विपन्नं च सत्त्वं यस्यास्ति तत्र च।
पुंस्याग्निमारुतोऽगस्त्यमुनौ त्रिषु तु देवता ॥ ३० ॥

१. 'न्या' ग. पाठः.

* 'चार्थादि पूर्ववत्' इति स्यात्।

यस्यामामेरुतौ तत्र द्वे तु स्यादीश्वरप्रियः ।
तित्तिर्याख्ये पक्षिभेदे त्रिषु त्वीश्वरवल्लभे ॥ ३१ ॥
अथोपकारिका स्त्रीत्वे राजावासेऽथ सा त्रिषु ।
उपकारक इत्येष उपकर्तर्यथ द्रुमे ॥ ३२ ॥
उल्लेखनीयं कतकसंज्ञेऽथो मेध्यलिङ्गकम् ।
उल्लेखितव्येऽथ ब्रह्मचारिभेदे नृलिङ्गकः ॥ ३३ ॥
उपकुर्वाण इत्येष त्रि तु स्यादुपकर्तरि ।
स्यात् पुनर्हरिमन्थाख्यमुद्गजात्यन्तरे पुमान् ॥ ३४ ॥
ऊर्ध्वरूपक इत्येष यस्योर्ध्वं रूपमस्ति हि ।
तत्र त्रिः परवल्लिङ्गं षष्ठीतत्पुरुषादिषु ॥ ३५ ॥
बलभद्रे कुबेरे चाप्येककुण्डल इत्ययम् ।
पुंसि त्रिषु तु यस्यैकं कुण्डलं तत्र नप् पुनः ॥ ३६ ॥
औपरिष्टकमित्येतत् कामशास्त्रेषु विश्रुते ।
क्रियाभेदे त्रिषु त्वेतदूर्ध्वजे प्राह सज्जनः ॥ ३७ ॥
कमलच्छदशब्दोऽयं कमलस्यच्छदे पुमान् ।
द्वे कङ्काख्यखगेऽथो ना नारदे कलहप्रियः ॥ ३८ ॥
त्रिलिङ्गस्तु प्रियो यस्य कलहस्तत्र वस्तुनि ।
स्यात् कण्टकिफलः[2] पुंसि पनसे गोक्षुरेऽपि च ॥ ३९ ॥
त्रि तु स्यात् तत्र यस्यापि फलं कण्टकवद् भवेत् ।
कलशोदक इत्येष पुमानम्लानसंज्ञिनः ॥ ४० ॥
स्तम्बस्य भेदे स्याच्छोणपुष्पे ज्ञाटाकृतावथ ।
कलशस्थजले क्लीबमथ ना कर्णपूरणः ॥ ४१ ॥
मुस्तके क्लीं तु कर्णस्य पूर्तौ पूरयतेः पुनः ।
अर्थे न ना भवेत् कर्णपूरणाथो नृलिङ्गकः ॥ ४२ ॥

१. 'मा' क. ख. पाठः. २. 'की' ग. पाठः.

**कृतवेधन**शब्दोऽयं कोशातक्याह्वयस्य हि ।
लताजातिप्रभेदस्य भेदे पृथुफले तथा ॥ ४३ ॥
अन्यस्मिन्नपि च स्वल्पफलभेदे त्रिपु त्वयम् ।
कृतो यस्य व्यधस्तत्र येन वात्राप्यथ स्त्रियाम् ॥ ४४ ॥
स्यात् **केशवानुजा** दुर्गादेव्यां त्रिषु तु केशवः ।
यस्यानुजस्तत्र ये तु कनिष्ठाः केशवस्य हि ॥ ४५ ॥
तत्र द्वयोरथ पुमान् **केशवप्रिय** इत्ययम् ।
वेङ्कटाख्यगिरौ त्रिस्तु केशवो यस्य वल्लभः ॥ ४६ ॥
वल्लभे केशवस्यापि स्यात् तु द्वे **गद्गदस्वरः** ।
महिषे त्रि तु यस्यास्ति तत्र स्याद् गद्गदः स्वरः ॥ ४७ ॥
**गन्धमादन**शब्दस्तु नृनपोः पर्वतान्तरे ।
रामायणप्रसिद्धे च कचित् स्यात् कपिकुञ्जरे ॥ ४८ ॥
द्वयोस्तु **गात्रसङ्कोची** जाहकाख्येषु जन्तुषु ।
गात्रं सङ्कोचयेद् यश्च तच्छीलस्तत्र स त्रिषु ॥ ४९ ॥
द्वयोस्तु **गृहबलिभुग्** वायसे चटकेऽपि च ।
**चन्द्रिकाप्रिय** इत्येष चकोराख्यखगे द्वयोः ॥ ५० ॥
यस्येष्टा चन्द्रिका तत्र त्रिरथो **चतुरङ्गुलः** ।
पुमानारग्वधे मानविशेषे [1]शरसंज्ञके ॥ ५१ ॥
त्रिस्तु तद्वत्यथ स्त्री स्यात् पादपे जघनेफला ।
काकोदुम्बरिकासंज्ञे पनसे तु पुमानथ ॥ ५२ ॥
पुनर्नवायां स्त्री **जीवबोधनी** नपुंस्त्रियोः पुनः ।
जीवस्य ज्ञापने जीवबोधनावगतौ पुनः ॥ ५३ ॥
क्लीबे यवनिकायां तु स्यात् तिरस्करिणी [illegible]
क्ली छादनेऽथ ना दन्तधावनः [illegible] ५४ ॥

. 'र' ग. पाठः.

[1] 'सम' इति स्यात् । तथा च वैजयन्ती । 'अङ्गुलोऽष्टौ यवा अष्टौ समस्तु चतुरङ्गुलः' (श्लो. ५२) इति ।

**अरिमेदे करञ्जे च** स्त्री तु दन्तस्य शोधने ।
दन्तकाष्ठेऽप्यथो हस्तिवातिशृङ्गिन इति श्रुते ॥ ५५ ॥
वातिशृङ्गिनप्रभेदे स्यात् स्त्रीलिङ्गा **दद्रुनाशनी** ।
दद्रवास्तु नाशने दद्रुनाशना स्त्रीनपोरथ ॥ ५६ ॥
ना **देहमर्दनो** व्याधौ स्त्री तु देहस्य मर्दने ।
**देवदुन्दुभि**शब्दोऽयं पुलिङ्गः स्यात् पुरन्दरे ॥ ५७ ॥
स्त्री तु तीक्ष्णार्जके कृष्णवचायां चाथ ना हरे ।
**नन्दिवर्धन**शब्दोऽयं सोमवंशसमुद्भवे ॥ ५८ ॥
नृपभेदे पञ्चदश्यां (त्रि) तु हर्षस्य वर्धके ।
वृद्धौ नन्देः स्त्री (पुमांस्तु) मयूरे **नर्तनाप्रियः** ॥ ५९ ॥
त्रिस्तु नृत्तप्रियेऽथ द्वे वर्ण्यते **नखरायुधः** ।
मार्जारे भेद्यवत् तु स्याद् यस्य स्यान्नखमायुधम् ॥ ६० ॥
**नक्षत्रनेमि**स्तु स्त्री स्याद् रेवत्यां नेन्दुशार्ङ्गिणोः ।
स्त्रीनपुंसकयोर्दाने ज्ञापने **प्रतिपादना** ॥ ६१ ॥
वधे विकीर्णीकरणे[1] स्त्रीनपोः **प्रविसारणा** ।
स्त्रीनपुंसकयोर्भेदे युद्धे स्त्री **प्रविदारणा** ॥ ६२ ॥
अथ **पञ्चसुगन्धं** स्त्री समाहारद्विगौ कृते ।
पूगकर्पूरतक्कोलजातीफललवङ्गके ॥ ६३ ॥
यस्य पञ्च सुगन्धाः स्युस्तत्र स्याद् वाच्यलिङ्गकम् ।
**परिचारक**शब्दोऽयं दासे द्वे भेद्यवत् पुनः ॥ ६४ ॥
शुश्रूषकजनेऽथ स्त्री नियुक्तायां नृपस्त्रियाम् ।
स्रग्भूषणादिष्वर्थेषु विज्ञेया परिचारिका ॥ ६५ ॥
परित्यागे वधे च स्त्रीनपोः स्यात् **परिवर्जना** ।
शत्रौ ना **प्रत्यवस्थानः** परिस्पर्धिजने त्रिषु ॥ ६६ ॥

१. 'र्णी' क. पाठः.

(उपान)हि स्त्रियां **पादरक्षणी** वल्याङ्घ्रिरक्षणे ।
स्त्री तु मङ्गलवाद्यस्य निर्घोषे **प्रियवादिका** ॥ ६७ ॥
प्रियस्य वक्तरि त्रि स्यादथ स्त्री **पीततण्डुला** ।
कङ्गुधान्ये त्रिषु पुनः पीतो यस्यास्ति तण्डुलः ॥ ६८ ॥
**पुष्टिवर्धन**शब्दोऽयं चाषाख्यविहगे द्वयोः ।
त्रि तु (वर्धन)के पुष्टेरन्यच्चेदृशमूह्यताम् ॥ ६९ ॥
**पुरुषव्याघ्र**शब्दोऽयं गृध्राख्यविहगे द्वयोः ।
पुमांस्तु पुरुषश्रेष्ठे पुमांस्तु **पृथिवीपतिः** ॥ ७० ॥
यमे भौमे त्रि तु क्ष्मापे तालीसंज्ञे तु पादपे ।
स्त्रियां स्यात् **फलपाकान्ता** त्रि तु व्रीहियवादिषु ॥ ७१ ॥
मुद्गमाषतिलाद्येषु फलपाकविनाशिषु ।
अथ चापप्रभेदे स्यान्नब्लिङ्गं **बिम्बिसारकम्** ॥ ७२ ॥
बाणभेदे तु विज्ञेयो ना द्वापञ्चाशदङ्गुले ।
नाट्योक्तौ युवराजे स्यात् पुल्लिङ्गो **भर्तृदारकः** ॥ ७३ ॥
राजपुत्र्यां तु नाट्योक्तौ स्त्रीलिङ्गा भर्तृदारिका ।
टुण्डुवृक्षे तु **मण्डूकपर्णः** पुंसि स्त्रियां पुनः ॥ ७४ ॥
मण्डूकपर्णी भण्डीरीसंज्ञवल्लयां द्वयोः पुनः ।
**महाशकुन** उलूके महत्यपि विहङ्गमे ॥ ७५ ॥
*अजोपचारकुशले पुंसि स्यान्**मलहारकः** ।
मलस्य हर्तरि त्रि स्यादथ ना **मधुरस्वनः** ॥ ७६ ॥
शङ्खे त्रिषु तु यस्यास्ति तत्रार्थे मधुरः स्वनः ।
निर्यूहेऽपाश्रये च क्ली **मत्तवारण**मित्यदः ॥ ७७ ॥
ना तु मत्तगजे ना तु चतुष्कीसंज्ञके कृते ।
वाससा विद्धि **मशकहरीं** मशककुन्धये ॥ ७८ ॥

* 'गजोपचारकुशलो वाहिको मलहारकः' (पृ. १११. श्लो. ८७) इति तु वैजयन्ती

मशकं क्षिपतेऽन्यो यस्तत्र त्रि स्यादथ त्रिषु ।
तत्र मन्दविसर्पी स्याद् यः शनैस्सृप्तिशीलकः ॥ ७९ ॥
†(शिरः)क्रिमौ तु यूकाख्ये स्त्रियां मन्दविसर्पिणी ।
स्त्रियां तु मलवद्वासा उदक्यायां त्रिषु त्वसौ ॥ ८० ॥
मलिनं यस्य वस्त्रं स्यात् तत्र तत्पुरुषे तु नप् ।
ना तु मातुलपुत्रः स्याद् धुर्धूरस्य फले तथा ॥ ८१ ॥
मातुलस्य त्वपत्ये द्व ना तु स्यान्मुनिसेवितः ।
नीवारे यस्तु मुनिभिः सेवितस्तत्र स त्रिषु ॥ ८२ ॥
मुखमण्डनशब्दोऽयं तिलकाख्यतरौ पुमान् ।
मुखस्य भूषणे क्लीबं वर्ण्यते येन वस्तुना ॥ ८३ ॥
मुखं तत्र त्रिषु स्त्री तु विज्ञेया मुक्तबन्धना ।
मालिकायां बहुव्रीहौ त्वितत् स्याद् मेयलिङ्गकम् ॥ ८४ ॥
मूर्धाभिषिक्तो ना राज्ञि अत्रिये तु द्वयोस्त्रि तु ।
प्रधाने वैजयन्त्या तु प्रमाणितनि समीरितम् ॥ ८५ ॥
मूर्धावसिक्ता द्व विप्रात् क्षत्रियाज त्रिपु त्वयम् ।
योऽवसिक्तो भवेन्मूर्ध्नि तत्राथ मृदुकण्टकः ॥ ८६ ॥
मत्स्ये पाठीनसंज्ञे द्व त्रि तु यस्यास्ति कण्टकः ।
मृदुस्तत्राथ रुद्रस्य नाम्नि ना भूमिकां गते ॥ ८७ ॥
रङ्गावतारी त्रिपु तु नटऽर्थो रात्रिजागरः ।
शुनि द्वे त्रि तु जागर्ति रात्रौ योऽत्राथ न स्त्रियाम् ॥ ८८ ॥
अर्वत्या वदने क्लीबलिङ्गं तु स्याद् रसातले ।
वडवामुखशब्दोऽयं पुंलिङ्गस्त्वौर्वपावके ॥ ८९ ॥
वरचन्दनमस्त्री स्याद् देवदारुमहीरुहे ।
कालेये चन्दने चापि वरऽथो वामलोचना ॥ ९० ॥

† 'यूकस्तु शिरसि क्रिमिः' (पृ. १५१. श्लो. ३८) इति वैजयन्ती ।

स्त्री स्त्रीभेदे त्रि तु बहुव्रीहौ क्ली कर्मधारये ।
**विलेपनीया** स्त्रीलिङ्गा चारुभूषणयोषिति ॥ ९१ ॥
क्ली तु (दाऽधा)तावथो **वृद्धदारकः** पुंसि भेषजे ।
छगलान्त्रीसमाख्ये त्रिः पुनर्वृद्धस्य भेदके ॥ ९२ ॥
जीर्णभार्येऽप्यथो **वृद्धावस्कन्दी** ना पुरन्दरे ।
यस्तु वृद्धानवस्कन्देत् तच्छीलस्तत्र स त्रिषु ॥ ९३ ॥
गन्धद्रव्ये तु कस्तूर्यामस्त्री स्याच्छितिचन्दनम् ।
शितौ च चन्दने **शूलनाशकं** तु नपुंसकम् ॥ ९४ ॥
सौवर्चलाख्यलवणे त्रि तु शूलस्य नाशके ।
**षष्टिहायन**शब्दोऽयं गजे स्याद् द्वे स्त्रियां पुनः ॥ ९५ ॥
समाहारद्विगौ षष्टिहायनी भेद्यवत् पुनः ।
बहुव्रीहौ हि तत्रापि स्त्रियां ङीप् षष्टिहायनी ॥ ९६ ॥
वयस्येवात्र ङीबुक्तः शालादौ षष्टिहायना ।
स्त्री **सर्वमङ्गला** शैलतनयायां त्रिषु त्वियम् ॥ ९७ ॥
बहुव्रीहौ तत्पुरुषे परवल्लिङ्गता स्मृता ।
अथ ना **सर्वतोभद्रो** गृहविच्छन्दकान्तरे ॥ ९८ ॥
निम्बवृक्षे च विषमकाव्यालङ्कारभेदके ।
स्त्रियां तु सर्वतोभद्रा काश्मर्याभिख्यपादपे ॥ ९९ ॥
यत् तु सर्वप्रकारे स्याद् भद्रं तत्र त्रिषु स्मृतम् ।
**सर्वतोमुख**शब्दस्तु क्रतुभेदे विरिञ्चने ॥ १०० ॥
ना नीरे क्ली त्रिषु पुनर्यस्य स्यात् सर्वतो मुखम ।
अथो **सहस्रवीर्या** स्त्री दूर्वायामपरः पुनः ॥ [illegible] ॥
आचष्टे श्वेतदूर्वायां स वै[1] नाम भिषग्वरः ।
आहोर्ध्वकण्टका* + + + + + + + + त्रिषु ॥ १०२ ॥

१. 'एवैनां भि' च. पाठः.

* 'कामिन्यलताभेदेऽथ स त्रि' इति स्यात् । ऊर्ध्वकण्टकासहस्रवीर्याभेदे शतावरीपर्याये द्र

बहुव्रीहावथान्यत्र समासे पूर्ववत् स्मरेत् ।
राम्नासंज्ञे तु भैषज्ये स्त्रियां स्यात् सर्पलोचना ॥ १०३ ॥

यथासमासमन्यत्र लिङ्गार्थाववधारयेत् ।
सहस्रपत्रं कमले क्ली समासान्तरेषु तु ॥ १०४ ॥

प्रतीयात् पूर्ववल्लिङ्गमर्थं पुंस्यम्लवेतसे ।
सहस्रवेधी क्लीबं तु हिङ्गुनि क्ली तु संयुगे ॥ १०५ ॥

* + + + + + + + + + पुंलिङ्गस्तु रथे त्रिषु‡ ।
सिंहविक्रम इत्येष द्वे विज्ञेयस्तुरङ्गमे ॥ १०६ ॥

समासभेदेष्वन्येषु लिङ्गाद्यर्थोऽत्र पूर्ववत् ।
सिंहकेसरशब्दोऽयं वकुले नाथ पुन्नपोः ॥ १०७ ॥

सटे सिंहस्य पुंलिङ्गः पुनः स्यात् सितकुञ्जरः ।
शक्रे समासभेदेषु त्वर्थो लिङ्गं च पूर्ववत् ॥ १०८ ॥

सुरवल्लभ इत्येष पुन्नागाख्यद्रुमे पुमान् ।
त्रि तु देवप्रियेऽथो ना सुरभिच्छद इत्ययम् ॥ १०९ ॥

कपित्थे राजजम्ब्वाख्यजम्बूभेदे च स स्मृतः ।
वाच्यलिङ्गं तु तत्र स्याद् यस्यास्ति सुरभिश्छदः ॥ ११० ॥

हरिचन्दनमस्त्री स्याद् देवानां पादपान्तरे ।
चन्दने ताम्रसारे च पीतचन्दनसंज्ञके ॥ १११ ॥

हरिमन्थज इत्येष ना धान्ये चणकाह्वये ।
पठितोऽमरसिंहेन वैजयन्त्यां त्वपाठि सः ॥ ११२ ॥

कृष्णमुद्गे त्रिषु त्वेष हरिमन्थसमुद्भवे ।
हरिलोचन इत्येष उलूके स्याद् द्वयोरथ ॥ ११३ ॥

सम्भवत्सु समासेषु लिङ्गमर्थश्च पूर्ववत् ।
बाधित्वा परवल्लिङ्गं गङ्गायां हरशेखरा ॥ ११४ ॥

---

१. 'म्बु' ग. च. पाठः.

---

* साम्परायिकमित्येतद्' इति पाठः स्यात् । ‡ इतःपरं किञ्चिदिवापेक्षितं भाति ।

त्रियां हरस्य त्वक्षी स्याच्छेखरेऽथ स्त्रियामियम्।
हिरण्यवर्णा नद्यां स्याद् बहुव्रीहौ तु भेद्यवत्॥ ११९॥
लिङ्गं समासेऽप्यन्यत्र लिङ्गार्थौ पूर्ववत् स्मरेत्॥ ११९½॥

इति पञ्चाक्षरकाण्डे नानालिङ्गाध्यायः॥

---

पञ्चाक्षरकाण्डः समाप्तः।

---

# अथ षडक्षरकाण्डः ।

## स्त्रीलिङ्गाध्यायः ।

अथैक एव शब्दः स्त्री दृष्टोऽस्माभिः षडक्षरे ।
सा स्यातेऽञ्जनकेशीति स्त्रियां हट्टविलासिनी ॥ १ ॥
भैषज्यभेदे हट्टस्थविलासिन्यां च सा स्मृता ॥ १½ ॥

इति षडक्षरकाण्डे स्त्रीलिङ्गाध्यायः ।

## अथ षडक्षरकाण्डे पुँल्लिङ्गाध्यायः ।

अथ षट्स्वरपुँल्लिङ्गशब्दाध्यायः प्रदर्श्यते ।
देवानां कवचे शैलभेदेऽप्यमरकङ्कटः ॥ १ ॥
ऋष्यन्तरे कृतोद्वाहद्विजे चौदुम्बरायणः ॥ १½ ॥

इति षडक्षरकाण्डे पुँल्लिङ्गाध्यायः ।

## अथ षडक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

अथो षडक्षरनपामध्यायः कथ्यतेऽधुना ।
**उपसंग्रहणं** पादग्रहणेनाभिवादने ॥ १ ॥
उपेत्य संग्रहे चाथ भवेल्लक्ष्मीनिकेतनम् ।
सुगन्धामलकैः स्नाने लक्ष्म्याश्चायतने भवेत् ॥ २ ॥
**विशुद्धलवणं** तु स्यात् सैन्धवे लवणे शुचौ ॥ २½ ॥

इति षडक्षरकाण्डे नपुंसकलिङ्गाध्यायः ।

## *अथ षडक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

अथो षडक्षराः शब्दा वाच्यलिङ्गाश्च ये स्मृताः ।
तेषामयमिहाध्यायो यथादृष्टं प्रणेष्यते ॥ १ ॥

एकायनगतस्तु स्यादेकाग्रेऽप्येकमार्गके[1] ॥ १[2] ॥

इति षडक्षरकाण्डे वाच्यलिङ्गाध्यायः ।

---

## अथ षडक्षरकाण्डे नानालिङ्गाध्यायः ।

अथो षडक्षराः शब्दा नानालिङ्गाश्च ये स्मृताः ।
तेषामयमिहाध्यायः सम्प्रति प्रतिपाद्यते ॥ १ ॥

*+ + + + + + + + + + + अञ्जलिकारिका ।
क्षुद्रजन्तुविशेषे च गजायुर्वेदभाषिते ॥ २ ॥

नमस्कारीसमाख्ये च क्षुद्रवल्ल्यन्तरे त्रि तु ।
अञ्जलेः कारके(स्वा ? ऽथा)स्थिसङ्घात इति विश्रुते ॥ ३ ॥

**अस्थिसन्नहनः** पुंसि वल्लिजात्यन्तरेऽथ नप् ।
अस्थ्नां सन्नहनेऽथ स्यादाग्रहायणिकः पुमान् ॥ ४ ॥

मार्गशीर्षाह्वये मासे यत् तु देय$ + + + + ।
+ + + + + हायण्यां तत्र विद्यान्नपुंसकम् ॥ ५ ॥

अत्र त्वाम्नायते सद्भिः पुमानानकदुन्दुभिः ।
वसुदेवेऽथ तत् क्लीबमानकस्य च दुन्दुभेः ॥ ६ ॥

---

१. 'म' ग. पाठः. २. 'म' ग. पाठः.

---

* + 'मार्गगे' इति स्यात् । 'लेप्यमय्यां स्त्रियां प्रोक्ता स्त्रियाम्' इति स्यात् । तथा च वैजयन्ती 'या तु लेप्यमयी नारी सा स्यादञ्जलिकारिका' (पृ. १३७. १२) इति । $ 'यमृणं भवेत् । मासे चाप्याग्र' इति पाठ्यं भाति. । 'संवत्सराग्रहायणीभ्यां ठञ्' (४. ३. ५०) इति देयार्थे ठञ्विधानात् ।

समाहारे (च ?ञ) षण्डे च स्त्रियां तोयनि[illegible]
स्यैतनौयसयोः साङ्गोर्यद् गानं यज्ञकर्मणि ॥ ७ ॥

तत्र स्यादर्थलिङ्गादि तर्कणीयं विचक्षणैः ।
$+ + + + + + + त्वे कोहलाख्यामथ स्मरेत् ॥ ८ ॥

सम्भवत्सु समासेषु लिङ्गान्यर्थाश्च पूर्ववत् ।
तोयप्रसादनः पुंसि कतकाख्यमहीरुहे ॥ ९ ॥

यथासमासमन्यत्र लिङ्गार्थांश्च प्रचारयेत् ।
दक्षिणाशारबोऽगस्त्यमुनौ पुंसि त्रिषु त्वयम् ॥ १० ॥

सक्तो यो दक्षिणाशायां तत्रान्यत्र तु पूर्ववत् ।
पारावतपदी *+ + + + + + + भेषजे ॥ ११ ॥

पारावतस्य पादे स्यात् पारावतपदं नपि ।
पानीयसम्भवं तु स्त्री (रू ? कू)प्याख्यलवणान्तरे ॥ १२ ॥

त्रि तु यत् किञ्चिदन्यत् स्यात् तत्र नीरसमुद्भवम् ।
पुष्पाभिकीर्णकस्तु द्वे स्याद् दर्वीकरसंज्ञिनाम् ॥ १३ ॥

भुजङ्गमानां भेदे च वैकरञ्जाख्यभोगिनाम् ।
भेदे च यस्तु पुष्पैः स्यादभिकीर्णश्च तत्र हि ॥ १४ ॥

+ + + + + + + + + + + र्थश्च पूर्ववत् ।
‡+ + + कीर्णे दीर्घ(?) पुनः सामान्तरे नपि ॥ १५ ॥

त्रिषु तु स्याद् दिवाकीर्त्ये [illegible]चारयेत् ।
अथ स्यात् कल्माषिरव्ये [illegible] पुमान् ॥ १६ ॥

फलवृक्षे च जानीयाल्लिङ्गमर्थं च पूर्ववत् ।
सम्भवत्सु समासेषु [illegible] पुनः ॥ १७ ॥

---

१. 'कहला' क. पाठः.

---

$ 'कण्ठकोलाहला स्त्री' इति स्यात्पाठः स्यात् । 'काहला तु [illegible] स्यात[illegible] र्' (पृ. १४६. श्लो. १२६) इति वैजयन्ती । * 'स्त्री स्याज्जीवन्तीसंज्ञ' इति [illegible] पारावतपदी शिम्बा जीवन्ती' (पृ. ५६. श्लो. १४०) इति वैजयन्ती । ‡ [illegible] [illegible]: पु' इति पाठः स्यात् ।

पुंस्यासन्नभेदे स्यात् तस्य लक्षणमुच्यते ।
भुजवेष्टितजङ्घोरो(श्चूलिकाश्लेषिताबनेः) ॥ १८ ॥
पृष्ठतो भुजपाशश्चेन्मृत्युसंयमनो हि सः ।
इत्येवमथ लिङ्गार्थसमासान् पूर्ववत् स्मरेत् ॥ १९ ॥
कुङ्कुमे तु विजानीयात् क्लीबे लोहितचन्दनम् ।
अस्त्री तु लोहिते विद्याच्चन्दनेऽथ स्त्रियां भवेत् ॥ २० ॥
ऋद्धिसंज्ञकभैषज्यभेदे सर्वजनप्रिया ।
सम्भवत्सु समासेषु लिङ्गार्थावपि पूर्ववत् ॥ २१ ॥
अथो नपुंसकं क्षीरे ज्ञेयं सोमरसोद्भवम् ।
यत् त्वन्यत् सोमरसजं तत्र स्याद् भेद्यलिङ्गकम् ॥ २२ ॥
हिरण्यकशिपुः पुंसि प्रह्लादपितरि स्मृतः ।
हिरण्यचित्रितकुथे पुनः स्यात् पुन्नपुंसकम् ॥ २३ ॥
हिरण्मयं तु यत् किञ्चित् काशिप्वर्थतया स्मृतम् ।
तत्राप्यपूरि चाध्यायः काण्डं चापि ह्यपूर्यत ॥ २४ ॥

इति षडक्षरकाण्डे नानालिङ्गाध्यायः ।

---

इति द्रमिडवात्स्यायनभट्टकृष्णपुरदेवसूनोर्भवस्कन्दशिष्यस्य

केशवस्वामिनः कृतौ नानार्थार्णवसंक्षेपे

राजराजीयसंज्ञे

षडक्षरकाण्डः समाप्तः ।

---

समाप्तश्चायं ग्रन्थः ।

शुभं भूयात् ।